अणेवंशोद्भवेन श्रीहरिसूनुना माधवेन विरचितः

# श्रीतिलकयशोऽर्णवः

## तृतीयः खण्डः

संपादकमण्डलम्

अध्यक्षः

रा. ना. दांडेकर

सदस्याः

वि. प्र. लिमये — मा. पं. सोमण

रा. ना. गद्रे — गणेशशास्त्री लोंढे

धा. त्र्यं. आपटे

तिलक-महाराष्ट्र-विद्यापीठम्, पुण्यपत्तनम्

१९७१

# अनुक्रमणिका

## प्रकाशनसमितेः संयोजकस्य निवेदनम् ।

अहो परं सौभाग्यम् इदं मे यत् खिस्तसंवत्सरस्य १६-६-७१ दिनाङ्के स्वर्गतेन पद्मविभूषण डॉ. माधव श्रीहरि अणेमहाभागेन विरचितस्य 'श्रीतिलकयशोऽर्णव' इत्याख्यस्य संस्कृतमहाकाव्यस्य तृतीयखण्डस्य प्रकाशनसमारोहः दिल्लीनगरे राष्ट्राध्यक्षाणां डॉ. वराहगिरि वेंकटगिरि महोदयानाम् आध्यक्ष्ये यथाविधि संपत्स्यते । यदा गीर्वाणवाणीविषये किञ्चिज्ज्ञेन मया द्वादशसहस्रप्रायश्लोकात्मकस्य अस्य संस्कृतकाव्यार्णवस्य प्रकाशनोद्यमः अङ्गीकृतः तदा 'तितीर्षुर्दुस्तरं मोहादुडुपेनास्मि सागरम्' ... 'गमिष्याम्युपहास्यताम्' इत्यादयः कविकुलगुरुकालिदासोक्तयो मे स्मृतिपथं समायाताः । किन्तु अस्यां लोकयात्रायां लोकमान्याः तिलकमहोदयाः एव मया अनन्यगुरुत्वेन आदृताः । 'संस्कृतिः संस्कृताश्रिता' इति स्वयं लोकमान्यैः सुसंस्कृतभारतदेशीयैः अन्यदेशीयैः या या अतीव संमानार्हत्वेन संमानिता, तस्यां देववाण्यां लोकमान्यचरितात्मकं महाकाव्यम् अवश्यमेव प्रकाशनीयम् । अन्यच्च लोकमान्यविषयके साहित्ये अस्य महाकाव्यस्य अभावः नाम शल्यतुल्या न्यूनता इति नैकेषां तिलकभक्तानाम् इव ममापि दृढा मतिरासीत् । लोकनायकाः बापुजीअणेमहोदयाः लोकमान्यानां शिष्यवरत्वेन विख्याताः । १८९७ खिस्तसंवत्सरात् १९६७ संवत्सरं यावत् - सप्ततिवर्षात्मकं सुदीर्घकालं भारतीयराजनीतिविषये तैः बहुविधं महत्कार्यं संपादितं, तेषां संस्कृतभाषाप्रभुत्वं च प्रशंसनीयम् । अतः 'गुणी गुणं वेत्ति' इतिन्यायेन लोकनायकाः एतत्काव्यग्रन्थविषये अधिकारिणः इति नैकवारम् आसीन्मे मनसि । १९२२ संवत्सरात् १९६७ संवत्सरं यावत् पञ्चचत्वारिंशत्संवत्सरात्मके काले बहुविधकार्यवशात् लोकनायकैः सह मे एतादृशाः दृढभावाः निबद्धाः यत् पितृचरणाः इव ते मत्पूजास्थाने संजाताः । १९५४ खिस्ताब्दे दुःसाध्येन व्याधिना शय्यारूढाः बापुजीमहोदयाः परमपूजनीयराष्ट्रगुरूणां लोकमान्यानां चरितात्मकं महाकाव्यं विरचयितुम् आरब्धवन्तः । १९६७ खिस्तवर्षे च तत्समाप्तप्रायमासीत् । तस्मिन् समये व्याधिग्रस्तास्ते 'मद्गुरोरेतद् गुणवर्णनं कुर्वाणोऽहं प्राणान्तं कुर्वदपि दुःखं विस्मर्तुं शक्नोमि' इति ब्रुवन्ति स्म । १९६७ खिस्तसंवत्सरस्य सप्टेम्बरमासे लोकनायकैः कस्मिंश्चित्पत्रे लिखितम्- 'एतस्य मे श्रीतिलकयशोऽर्णवस्य प्रकाशनम् अवश्यं करणीयम् इत्येव मेऽत्यन्ताभिलाषः। आत्मनः सर्वस्वव्ययेनापि एतत्प्रकाशनं कर्तुम् उद्यतोऽस्मि । यतः मन्मनसि एतदेव मे उर्वरितं महत् कार्यम्' इति।

बापुजीमहोदयानाम् एष बलवान् अभिलाषः कथं सफलीकर्तव्यः इत्येतेन चिन्ताविषयेण अहम् अतीव व्याकुलमना अभूवम् – इत्येतैर्बहुविधैर्हेतुभिः अन्ततोऽयं जनः अस्मै कार्यचापलाय प्रचोदितः। सुनिश्चिते कार्याङ्गीकारे मया १।८।१९६८ दिनाङ्के लोकमान्यपुण्यतिथौ पुण्यपत्तने बापूजीअणेप्रशंसकानां तिलकभक्तानां च एका सभा आयोजिता। म. म. द. वा. पोतदारमहोदयैः तत्सभाध्यक्षपदम् अलङ्कृतम्। पञ्चसप्ततिः लोकमान्यलोकनायकभक्ताः उपस्थिताः। सभायाम् एषः प्रस्तावः संमतः श्रीतिलकयशोऽर्णवप्रकाशनकार्यार्थं एका प्रकाशन समितिः कार्या, यस्याः अध्यक्षः म. म. द. वा. पोतदारः नियुक्तः। अनन्तरं श्रीतिलकयशोऽर्णवस्य अणेमहोदयैः लिखितायाः संहितायाः संशोधमादिकं कृत्वा समुचितं मुद्रणप्रतिलेखं कर्तुं मुद्रणशोधनादिसंपादनकार्यं च कर्तुम् एकं संपादकमण्डलं निर्मितम्। अस्य संपादकमण्डलस्य अध्यक्षः पद्मभूषण डॉ. रा. ना. दाण्डेकरमहोदयाः आसन्। आचार्य वि. प्र. लिमये, प्रा. मा. पं. सोमण, प्रा. रा. ना. गद्रे, पं. गणेशशास्त्री लेंडे, श्री. वा. उपं. आपटे इत्येते अस्य संपादकमण्डलस्य सदस्याः आसन्। संपादकमण्डलेन महान् कार्यभारः महत्या निष्ठया अंगीकृतः पारितश्च। यदि एतैः महाभागैः साहाय्यं न दत्तमभविष्यत् एतत् प्रकाशनकार्यं न सुकरम् अभविष्यत्।

द्वादशसहस्रश्लोकात्मकस्य सहस्रपृष्ठस्य अस्य महाकाव्यस्य प्रकाशनकार्यार्थं पञ्चचत्वारिंशत् सहस्ररूपकात्मकं धनम् आवश्यकम् इति मया स्थूलव्ययगणनं कृतम्। अतः त्रिखण्डात्मकः काव्यग्रन्थः प्रकाशयितव्यः इति निर्धारितम्। एकैकस्य खण्डस्य प्रकाशनकार्यार्थं यत् धनम् आवश्यकं तत्सर्वं तत्प्रकाशनसमयात् प्रागेव उपायनरूपेण ग्रन्थमूल्यरूपेण च संगृहीतम् इत्येवं कथयतः मे मानसम् अतीव समुल्लसति। लोकमान्यलोकनायकभक्तानां दशोत्तरशतेन जनेन शताधिकरूपकाः उपायनत्वेन दत्ताः। तेषु चतुर्भिः संस्थाचालकैः पञ्चशताधिकरूपकाः दत्ताः। भारतीयशासनेन अस्य महाकाव्यस्य द्विशतपुस्तकानां क्रयः अङ्गीकृतः।

श्रीतिलकयशोऽर्णवस्य प्रथमः खण्डः ७-६-१९६९ दिनाङ्के, पुण्यपत्तने ( लोकमान्यानां कर्मभूमौ ) डॉ. व्ही. के. आर्. व्ही. रावमहोदयानाम् आध्यक्ष्ये प्रकाशितः। द्वितीयः खण्डः १३-२-७० दिनाङ्के, नागपूरनगरे ( लोकनायकानां पुण्यभूमौ ) महाराष्ट्रराज्यस्य उच्चन्यायालयस्य प्रमुखन्यायाधीशानां श्रीकोतवालमहोदयानाम् आध्यक्ष्ये

प्रकाशितः । तृतीयः खण्डः १६-६-७१ दिनाङ्के दिल्लीनगरे (लोकनायकानां कर्मभूमौ) राष्ट्राध्यक्षाणां डॉ. गिरिमहोदयानाम् आध्यक्ष्ये प्रकाश्यते । अस्य तृतीयखण्डस्य विषये इदम् किमपि वक्तव्यं यद् विधिवशात् लोकनायकानाम् एतन्महाकाव्यम् ईषत् असमाप्तमासीत् । किन्तु आरब्धकार्यस्य न्यूनता दूरीकर्तव्या एव इतिन्यायेन सम्पादकैः लोकनायकानां पद्मबन्धानुबन्धेन त्रिशतश्लोकात्मकाः त्रयः अन्तिमाः सर्गाः विरचिताः । एतैः विख्यातैः बहुकार्यव्यापृतैः सम्पादकैः वर्षत्रयात्मके काले अस्य महाकाव्यस्य द्वादशसहस्रश्लोकानां संशोधनं, मुद्रणपरीक्षणम् इत्यादिकम् अखिलसम्पादनकार्यजातम् आत्मीयतया सश्रद्धं नितरां निरपेक्षतया पारं नीतम् । एतद् संपादनकार्यं कुर्वाणैः तैः महान् कालः यापितः । कः सुमेधाः अस्य कार्यस्य मूल्यमापनोद्यमं कुर्यात् ? अमूल्यं खलु एतद् संपादनकार्यम् । अतः एतेषां सम्पादकानाम् उपकारभारम् उद्वहन् अहं तेभ्यः सहस्रशः धन्यवादान् समर्पयामि ।

तथैव यैः त्यागशीलैः दातृभिः उदारैः क्रयिकैश्च आवश्यकेन द्रव्यदानेन मे महान् कार्यभारः अपनीतः तेभ्यः अपि सर्वेभ्यः अहं सर्वात्मना धन्यवादान् समर्पयामि ।

अन्यच्च एतस्मिन् काव्ये ये दुर्गमाः व्यक्तिस्थलकालादिविशेषाः तेषां विषये टिप्पणीलेखनं, दुर्लभच्छायाचित्राणां संग्रहणं क्रयिकाणाम् अधिगमः ग्रन्थप्रकाशनस्य प्रसिद्धिः इत्यादिकं बहुविधं साहाय्यं कुर्वाणाः ये श्री. भाऊराव आपटे, श्री. शंकरराव दाते, श्री. र. के. खाडिलकर, श्री. वि. अ. पटवर्धन, डॉ. स. वि. सहस्रबुद्धे इत्यादयः मे परमसुहृदः तेषाम् आनृण्यं संपादयितुम् असमर्थोऽहं कृतज्ञतापूर्वकं तेभ्यः धन्यवादान् वितरामि ।

अस्मिन् प्रकाशनकार्ये केसरी-मराठाविश्वस्तैः भाण्डारकरप्राच्यविद्यासंशोधनमन्दिरसंचालकैः तथा च तिलकमहाराष्ट्रविद्यापीठसंचालकैः यन्मे अमूल्यं साहाय्यं कृतं तदर्थम् अहं तेभ्यः अपि धन्यवादान् समर्पयामि ।

प्रारब्धस्य अन्तगमनम् अतीव प्रमोदास्पदमित्येतद् वचनम् अवितथमेव । तथापि लोकमान्यानां लोकनायकानां च अपूर्वपुण्यसंचितेनैव एतत्प्रकाशनकार्यं सुफलितं भवेत् इति मे दृढः विश्वासः आसीत् । नैकेषां लोकमान्य-लोकनायकभक्तानां देयवार्यप्रेरणां साहाय्येन श्रीतिलकयशोऽर्णवप्रकाशनरूपरूपिणी इयं श्रीजगन्नाथस्य रथयात्रा अधुना समाप्तिम् गता । अहं केवलं निमित्तमात्रम् । अस्य जनताजनार्दनस्य ऋणभारोद्वहनम् एव भूषणास्पदम् इति मन्यमानोऽहं विरमामि विस्तरात् ।

# संपादकमण्डलस्य निवेदनम्

१. श्रीतिलकयशोऽर्णवस्य इमं तृतीयम् उत्तमं च खण्डं श्रीशाय जनतात्मने समर्पयद्भिर् अस्माभिः कापि कृतार्थता अनुभूयते। हन्त भोः! तीर्णोऽस्ति अर्णवः। लोकमान्यानां श्रीतिलकमहोदयानां चरितम् अधिकृत्य प्रणीतमस्ति इदं महाकाव्यम्; अस्य च प्रणेतारः स्वर्गताः लोकनायकाः श्रीअणेमहाभागाः चिरम् अभूषयन् तिलकमहाराष्ट्र-विद्यापीठस्य कुलपतिपदम्। अतः संप्रति कीर्तिशेषाणां लोकनायकानां संमाननार्थं स्थाने एव तिलकमहाराष्ट्रविद्यापीठेन स्वीयायां सुवर्ण-महोत्सवग्रन्थमालायां तेषां श्रीतिलकयशोऽर्णवः प्रथमपुष्पत्वेन गौर-वितः। निक्षिप्तश्च अस्मासु मूललेखस्य संस्करणसंपादनयोर् भारः। लोकमान्यानाम् अष्टाचत्वारिंशत्तमायां पुण्यतिथौ, १-८-१९६८ दिने अस्माभिः तत् कार्यं प्रारब्धम्। नचिराच्च तस्य दुष्करता अवगता या हि अनपेक्षितपूर्वा आसीत्।

तत्र अस्माभिः इत्थं संपादकीया नीतिर् निर्धारिता, यद् यावच्छक्यं यथास्थितं मूलमेव मुद्रापयितव्यम्। केवलं व्याकरणशुद्ध्यर्थं वृत्तशुद्ध्यर्थं वा ऊनतममेव यावत् प्रमादशोधनम् आवश्यकं तावदेव कर्तव्यम्। प्रायेण तु अपरिवर्तितं यथास्थितं मूलमेव मुद्रापणीयम् इति। क्वचिच्च विरलेषु स्थलेषु संदर्भविशेषस्य सम्यक्त्वे संस्करणं कृतमस्ति। किं तु एवं कार्यमर्यादायां स्थापितायामपि अस्माकं कार्यं बहुलायासम् आसीत्। आसन् अस्माकं संपादकानां नियतकालापेक्षीणि स्थानि स्थानि कार्याणि। तानि अनुष्ठाय यथा यथा लब्धः अवसरः तथा तथा अस्मिन् संपादनकर्मणि भूयिष्ठः समयः व्यतीतः। किं तु एवं सत्यपि एतत्कार्यमग्नैर् अस्माभिर् आदित आरभ्य सर्वदैव कोऽपि निर्वृति-विशेषः आध्यात्मिकस्तात् नातिभिन्नः कोऽपि आनन्दविशेषः अनुभूतः, यो हि मम्मटभट्टानां शब्दसरणिम् अनुसृत्य 'ब्रह्मानन्दसहोदरः' इति वर्णयितुं शक्यः। अस्य काव्यस्य संपादनार्थं स्वभावत एव तस्य निपुणं परिशीलनम् आवश्यकम् आसीत्। अतः तेन सह समुपगतदृढपरिचयानाम् अस्माकं कमपि भूतवृत्तान्तगतं ग्रन्थं वयम् अधीमहे इति मतिर् नासीत्; परमत्र तस्मिन्नेव देशे तस्मिन्नेव च काले वर्तामहे, तिलकनायके तस्मिन् स्वातन्त्र्यसंगर-महानाटके वयमपि कांचित् भूमिकामिव नाटयामः इत्येव वयम् अमंस्महि। नूनम् औचित्यसहः स

'कोऽपि' अनुभवविशेषः आसीत्। किं च, सुगृहीतनामभ्यो लोकनायकेभ्यः बहु इव धारयामः इति अस्माकं मतिर् आसीत्। तेषां काव्यस्य संस्करणसंपादनद्वारा अनुष्ठितया एतया सेवया तेषाम् आनृण्यं गतम् इव आत्मानं मन्यमानैर् अस्माभिः किमपि स्वास्थ्यं लब्धम्। अन्यच्च, भारतीयो हि पैतृको दायः संस्कृतभाषाम् अधितिष्ठति। एतत्काव्यं संपाद्य समनुष्ठितया सुरगिरासेवया अंशतः प्रत्यर्पितन्यासम् इव संपादकमण्डलम् आत्मानं धन्यं मन्यते।

२. स्वयंग्राहगृहीतोऽपि अयं कार्यभारः न सुलभनिर्वाह आसीत्। निकषग्रावायमाणस्य तस्य निर्वहणम् अन्ततो गत्वा यच्छक्यम् अभूत्, तत्र प्रधानकारणं नाम जनतायाः लब्धं प्रोत्साहनम्। इतः पूर्वं प्रकाशितयोर् अस्य महाकाव्यस्य द्वयोः खण्डयोः लोकैः यत् हर्षनिर्भरं स्वागतं कृतम्, तेनैव प्राप्तबलाः लब्धोत्साहाश्च वयम् एतम् अर्णवं पारयितुं प्राभवाम।

३. श्रीतिलकयशोऽर्णवः वर्तमानकालिके साहित्येतिहासे तैः तैः कारणैः किमपि असाधारणं स्थानम् आतिष्ठते। तथा हि। एकं तावत्, अस्य वस्तु नाम स्फूर्तिस्फारं गुणाढ्यं तिलकचरितम्। अपरम्, अस्य आविर्भावभाषा संस्कृतम्, या स्वसुलभम् अन्यथाप्यदुर्लभं च कमपि धीरोदात्तं लयबन्धं बिभर्ति। तृतीयम्, अत्र वर्णिताः नैका घटनाः स्वयं कविना साक्षात्कृताः आसन्। लोकनायका हि तस्मिन् स्वातन्त्र्यान्दोलने लोकमान्यानां सहोत्थायिनः, तेषां च निष्ठावन्तोऽनुयायिनः आसन्। चतुर्थं नाम अस्य महाकाव्यस्य यथार्थः विस्तरः। पञ्चाशीत्यां तरङ्गेषु विभक्तस्य अस्य काव्यार्णवस्य एकादशसहस्रतोऽपि अधिकाः श्लोकाः सन्ति। आधुनिके संस्कृतकाव्ये, वस्तुतः देशभाषाकाव्येऽपि, दुर्लभत्वं गतोऽयं विस्तरगुणः वर्णनीयस्य वस्तुनः महात्मतया सुसदृश एव अस्ति। एते चत्वारो गुणाः अन्योन्यस्य प्रभावं वर्धयन्तः काव्यात्मने कामपि अभिख्यां समर्पयन्ति। एतेषाम् एकैकोऽपि गुणः सर्वमुखीनायाः संमाननायाः भाजनम् अभविष्यत्, किमु यत्र चतुष्टयम्?

४. इतिहासो नाम महापुरुषाणां जीवितान्यानम् इति कार्लाइलः वदति। तदनुसारेण तिलककालिको (गतशताब्द्याः अन्त्यचतुर्थपददशकगतः एतच्छताब्द्याः दशकद्वयगतश्च) भारतेतिहासो नाम लोकमान्यचरितात् अभिन्नः इति यदि उच्येत, तर्हि तत्र न कापि अत्युक्तिः स्यात्। तात्कालिकस्य राजकीयस्य इतिहासस्य केन्द्रबिन्दुः आसीत्-" स्वराज्यं

नाम मम जन्मसिद्धः अधिकारः, तं चाहम् आसादयिष्याम्येव " इति लोकमान्योद्गीतः ध्येयमन्त्रः। नीतिश्चासीत्-" युद्धं यदा अवश्यम्। प्रतियोगिसहकार्यं च यदा शक्यम्" इति। सेयं निजा नीतिः लोकमान्यैः स्वयम् आचरिता, तां च आचरितुं स्वीयाः अनुयायिनः आदिष्टाः। लोकमान्यानां नियतिनिर्धारितं जीवितकार्यं तावद् द्विविधम् आसीत्। एकम्, भारतस्य राजकीयस्वातन्त्र्यस्य पुनरासादनम्। अपरम्, आधुनिकं ज्ञानविज्ञानं आधुनिकीश्च शास्त्रीयसरणीः अङ्गीकृत्य तत्संनियोगे भारतीय-ज्ञान-विज्ञाननिधेः क्षोदक्षमतायाः प्रगाढतायाश्च प्रतिष्ठापनम्। यथार्थनाम्ना देशभक्तेन लोकापवादस्य छायामपि अतीत्य स्वातन्त्र्यम्, यथा सीझरस्य पत्न्या संशयातीतशीलया भवितव्यम्। शीलं नाम देशसेवायाः, देशार्थस्य च त्यागस्य मूलाधारः, निष्कृष्टश्च सारः, इति लोकमान्यानां निश्चितं मतमासीत्। लोकनायका हि लोकमान्यानां सिद्धनिष्ठेषु शिष्योत्तमेषु अन्यतमाः आसन्। तिलकपरंपरायाः प्रधानपथिकाः आसन्। किमत्र चित्रं यदि लोकमान्यानां स्वभावस्य, विचारसरणेः, कार्यस्य च एते विशेषाः लोकनायकैः स्वीये महाकाव्ये यथावत् प्रतिबिम्बिताः स्युः ?

५. अस्मिन् खण्डे प्रपञ्चिताः लोकमान्यानां चरितगताः प्रसङ्गाः तेषां सर्वाङ्गीणं माहात्म्यम् प्रभूतमिव उद्द्योतयन्ति। आसीत् स कालः यदा लोकमान्याः एकतः लोकप्रियतायाः उच्चतमं तरङ्गम् आरूढाः आसन्। निष्कम्पं प्रतिष्ठापितम् आसीत् तेषां लोकमान्यत्वम्। राष्ट्रवादिनो भारतस्य ते अनभिषिक्ताः सम्राज आसन्। भारतस्य पुनरुत्थानाय अवतीर्णः अयं कश्चित् प्रेषित इति जनाः अमन्यन्त। अन्यतस्तु अस्मिन्नेव काले लोकमान्यैः निराशा सोढव्या आसीत्। वैफल्यम् अनुभवितव्यम् आसीत्। पराजितिः अङ्गीकर्तव्या आसीत्। काँग्रेसपक्षे अन्तर्गतः मतभेदः वर्धिष्णुताम् अगच्छत्। तृतीयस्य अभियोगस्य निर्णयः लोकमान्यानां प्रतिकूलः अभवत्। अॅनी बिझाण्टा तेषां प्रतीपगामिनी अभवत्, येन राष्ट्रहितं प्रतिहतमिवाभूत्। निबिडसख्यम् अन्तरेण कौलीनानि संचारितानि। मानापमानयोः जयपराजययोश्च समबुद्धयः लोकमान्यास्तु सर्वासु अवस्थासु अविचलिताः आसन्। गीतोक्तस्य स्थितप्रज्ञस्य ते साक्षात् निदर्शनम् आसन्।

आश्रिता शैली किंचित् वैचित्र्यं धत्ते। तत्रस्थस्य नाट्यस्य यथावज्ज्ञानार्थं वादिप्रतिवादिवाक्कीलानां प्रश्नाः तेषां च तिलकप्रदत्तानि उत्तराणि इत्युभयोः यथार्थं ज्ञानम् आवश्यकम्। लोकनायकाः अन्ये महाभागाः स्वयम् एतासां घटनानां साक्षिण आसन्। स्वभावत एव तैः एतासां काश्चन सिद्धवद् इति कृत्वा अनिर्दिष्टाः सन्ति। अनेकासाम् आधुनिकीनां कल्पनानाम् अभिधानार्थं कविना कृतं नैकेषां महाराष्ट्र-भाषाशब्दानां संस्कृतीकरणम् अस्माभिः पूर्वयोर् निवेदनयोः निर्दिष्टम् अस्त्येव। विचक्षणः पाठकः अन्यानपि नैकान् माधवीयान् शैलीविशेषान् उपलभेत। अपरिवर्तितानां तेषां यावच्छक्यं यथास्थितरक्षणमेव अस्माभिः उचितम् अमन्यत।

७. यस्यां परिस्थितौ लोकनायकैः इदं बृहत् कार्यम् आरब्धम्, सा पूर्वखण्डयोर् अस्मन्निवेदने निर्दिष्टा अस्त्येव। लोकनायका हि असाध्य-प्रायेण रोगेण आक्रान्ताः आसन्। परित्यक्ता आसीत् बन्धुवर्गेण तेषां जीविताशा। लोकनायकानां लोकमान्यशिष्यत्वाभिमानः न वृथैव। तैर् न धैर्यं परित्यक्तम्, न वा श्रद्धा। न केवलं गृहीत इव किंतु गृहीतोऽपि केशेषु मृत्युना धर्ममाचरेत् इति तेषां दृढा मतिः आसीत्। कस्तावत् तेषां धर्मं आसीत्? यत् किंचित् अल्पम् आयुर्मे अवशिष्टम् स्यात्तत्सर्वं स्वगुरोः संदेशप्रसारणेन यापयिष्यामि इति लोकनायकैः निरणीयत। नास्ति अद्यापि लोकमान्यानां संदेशः यातयामः इत्यासीत् तेषां श्रद्धा। स च संदेशः न केवलम् आसेतु-हिमाचलम् अपि तु देशान्तरेष्वपि लब्धगौरवया संस्कृतभाषयैव प्रदातव्यः इत्यपि लोकनायकैः निरणायि। अन्ततो रोगमुक्ता (इयं रोगमुक्तिः किमपि अद्भुतमिव आसीत्) लोकनायकाः यदन्ति स्म – "तस्मिन् दुर्जातसमये द्वयमिदं माम् अस्तम्भयत्। एकम्, आत्मनः राजकीयगुरोः चरितस्य, तस्य च कार्यजातस्य, मया कृतं प्रगाढं चिन्तनम्। अपरं च, संस्कृतरचनायां सततव्यापृतत्वम।" शय्यानिगडितैः लोकनायकैः भूयिष्ठा काव्यरचना समापिता। प्रकृतिम् आपन्नमात्रास्तु ते आत्मानं राजकीयेषु कार्येषु न्यपातयन्। प्रकृतिसिद्धं हि इदं तिलकानुयायिनाम्। किं तु एवं राजकीयकार्यव्यग्रचित्ताः अपि ते स्वयंस्वीकृतात् काव्यरचनाव्यापारात् न प्रामाद्यन्। तस्य समापनेन मया त्रीणि ऋणानि अपाकृतानि स्युः इति ते अमन्यन्त। अत एव ते समकालं काव्यप्रणयनमपि अग्रतःसरम् अकुर्वन्। भवितव्यता तु अन्यादृशी आसीत्। तैरारब्धेन महाकाव्येन अपूर्णेन भवितव्यम् इतीव

ईश्वरेच्छा आसीत्। दृव्यशीत्यां तरङ्गेषु रचितेषु, असमाप्तायामेव च कथायाम्, लोकनायकाः दिवं गताः। असमाप्तायाः कथायाः समापनम् अस्माकं कर्तव्यमेव इति वयम् अमन्यामहि। तद् ऋणमेव किंचित् वयं लोकनायकेभ्यः अधारयाम्। अतः वापूजीलिखिताः संक्षिप्ताः टिप्पणीः उपयुज्य, मूलकाव्यस्य सतताभ्यासवशात् परिचिततच्छैलीकैः अस्माभिः प्रायः कवेः पदावलीम् अनुसृत्य त्रयस् तरङ्गाः रचिताः, कथा च समाप्तिं नीता। आशास्महे, यद् इयं अस्माकं रचना महार्हमावारकेण संहितस्य स्थूलकम्बलखण्डस्य तुलाम् न आरोहेत्।

८. वयं यत्किंचित् कर्तुम् अपारयाम, तत्र अस्माकं सुहृत्सहकारिण एव श्रेयोभाजः। तस्मिंस् तस्मिन् क्षेत्रे वर्तमानानाम् एतेषां नैकेषां सुहृत्सहकारिणां सर्वाङ्गीणं सक्रियं साहाय्यं यदि नाभविष्यत्, संपादकमण्डलं न किमपि कर्तुम् अशक्ष्यत्। तथा नाम असंख्येयाः एते साहाय्यकारिणः नैकप्रकारकं च तेषां साहाय्यम्, यथा अशक्यं खलु विस्तरशः तान्सर्वान् सविशेषं निर्देष्टुम्। लोकमान्यलोकनायकौ तथा च संस्कृतभाषा इति त्रितयम् उद्दिश्य जनमानसे यो बहुमानो वर्तते सा एव खलु अस्य महोद्यमस्य प्रेरयित्री शक्तिः। संपादकमण्डलं निमित्तमात्रम्। सचेतसे वाचकवर्गाय इमम् अन्तिमं खण्डं समर्पयद्भिर् अस्माभिः एतावदेव आशास्यते—

> नेतृत्वगौरवं गायत् तिलकस्य महात्मनः।
> प्रथयद् भुवि सर्वत्र संस्कृतस्यार्यगौरवम्॥ १॥
> कवित्वगौरवं गाढं स्थापयद् माधवस्य च।
> महाकाव्यमिदं लोके भजताद् गौरवं स्वयम्॥ २॥

---

# श्रीतिलकयशोऽर्णवः

## तृतीयः खण्डः

बालगोपालयुग्मस्य संबन्धो विष्णुशास्त्रिणा ।
स्थापनं नवशालायास्तस्याः प्रगतिरद्भुता ॥ ८ ॥

मराठाकेसरीवृत्तपत्रयोश्च प्रवर्तनम् ।
राजकारणशिक्षायाः सर्वलोकस्य साधनम् ॥ ९ ॥

प्रतिष्ठाभङ्गदोषार्थं करवीरस्य मन्त्रिणः ।
मासत्रयनिवासस्य कारागारेऽनुशासनम् ॥ १० ॥

विरुद्धेऽन्वेषणं कृत्वा न्यायाधीशः स्वनिर्णये ।
तयापद्यभवत् कीर्तिर्बालगोपालयोस्तदा ॥ ११ ॥

शोककारी स्वर्गवासो वर्णितो विष्णुशास्त्रिणः ।
शालाबालकवर्गस्य शोचनीया मनःस्थितिः ॥ १२ ॥

वामनः संस्कृताभिज्ञ आपटेकुलभूषणः ।
निर्बन्धात्तिलकादीनामभूच्छालानिरीक्षकः ॥ १३ ॥

वर्षत्रयाद्धि प्रागेव शालोत्कर्षोऽभवत् खलु ।
महाविद्यालयस्यासीद् निर्मितिस्तदनन्तरम् ॥ १४ ॥

विख्यातो दक्षिणे देशे नाम्ना फर्ग्यूसनस्य यः ।
गणिताध्यापकस्तस्मिंस्तिलकः शास्त्रकोविदः ॥ १५ ॥

प्राध्यापकपदत्यागो मतभेदाद् महात्मनः ।
आगर्करप्रभृतिभिः सुहृद्भिः सहकारिभिः ॥ १६ ॥

मराठाकेसरीपत्रस्वामित्वस्वीकृतिस्तथा ।
तयोः संपादनं कार्यं खड्गधाराव्रतं महत् ॥ १७ ॥

क्राफर्डस्य प्रकरणं दुर्बुद्धेरधिकारिणः ।
संरक्षणं वापटस्य मित्रस्यापद्गतस्य च ॥ १८ ॥

चहापानसमुद्भूतं ग्रामण्यं पुण्यपत्तने ।
तदर्थंकृतवाग्युद्धं पण्डितैर्बहुभिः सह ॥ १९ ॥

रमायाः पण्डितोपाध्याः बालिकाशिक्षणोद्यमः ।
खिस्तधर्मप्रसारश्च गर्हणीयस्तया कृतः ॥ २० ॥

नेतारो रानडेमुख्यास्तद्वाक्चातुर्यमोहिताः ।
स्फोटस्तस्याः कैतवस्य वर्णितश्च सविस्तरम् ॥ २१ ॥

हिन्दूयवनयोर्वादो म्लेच्छैः कृत उपप्लवः ।
विरोधः पक्षपातस्य प्रशासनकृतस्य च ॥ २२ ॥

महोत्सवस्य प्रारम्भो गणेशशिवभूपयोः ।
हिन्दूसमाजदार्ढ्याय लोकानां शिक्षणाय च ॥ २३ ॥

राजनीतेश्च बोधाय विश्ववृत्तविचारयोः ।
प्रजागराय सुप्तानां भारतोद्धारकर्मणे ॥ २४ ॥

सभा या सार्वजनिका पुण्यक्षेत्रे प्रतिष्ठिता ।
प्रभुत्वस्थापनं तत्र निजपक्षानुयायिनाम् ॥ २५ ॥

सभात्यागः समस्तानां नेमस्तानां मनस्विनाम् ।
प्रतिस्पर्धिसभायाश्च स्थापना माधवाश्रया ॥ २६ ॥

बालोद्वाहविधानस्य निषेधः सर्वहिन्दुभिः ।
नीतेः सुधारकाणां च विपरीतत्वदर्शनम् ॥ २७ ॥

सभा या सार्वजनिका तत्सदस्यनियोजनम् ।
दुर्भिक्षग्रस्तलोकेभ्यः कर्तुं कर्तव्यदर्शनम् ॥ २८ ॥

सभाया अधिकारोऽपि प्रार्थनाया निराकृतः ।
प्रशासनेन क्रुद्धेन प्रचाराच्च सभासदाम् ॥ २९ ॥

अन्वेषणाय दोषाणां केचिद् नीताः सभासदः ।
न्यायालयं शासनेन चोदितैरधिकारिभिः ॥ ३० ॥

मुम्बईप्रान्तशाखाया वृहद्राष्ट्रीयसंसदः ।
कार्यवाहपदप्राप्तिश्च प्रान्तसंस्थाधिवेशनम् ॥ ३१ ॥

सर्वभारतसंस्थायाः पुण्यग्रामेऽधिवेशनम् ।
सभामण्डपवादस्य रानडेकृतनिर्णयः ॥ ३२ ॥

नामजोशीप्रयत्नेन प्रान्तीयोद्योगवर्धनम् ।
प्रवर्तकानां संमेलो वार्षिकः सप्रदर्शनः ॥ ३३ ॥

केषांचिद् मोचनं दोषात् केषांचिच्च सुदुःसहम् ।
कारागारे समादेशाद् न्यायमूर्तेर्निबन्धनम् ॥ ३४ ॥

मध्यभागस्य संस्थानां प्राप्तं प्रतिनिधेः पदम् ।
शिष्टेप्सितं द्विवारं तद् वालेन प्रान्तसंसदः ॥ ३५ ॥

आगरकरादिमित्राणां निधनं शोकदायकम् ।
विस्मितो मृत्युलेखेषु तिलकस्य सदादरः ॥ ३६ ॥

उग्रेण ग्रन्थिरोगेण हाहाकारः समुत्थितः ।
मुम्बापुर्यां महाराष्ट्रे पुण्यपुर्यां विशेषतः ॥ ३७ ॥

तस्योपशमसिद्ध्यर्थं शासनस्य च योजना ।
कृतानर्थास्पदोन्मत्तैर्गौरकायैः पदातिभिः ॥ ३८ ॥

संशोधनं दूषितानां गृहाणां क्लेशदायकम् ।
कुलस्त्रीणां च शिष्टानामपमानस्य कारणम् ॥ ३९ ॥

मृत्युरेवाभवद् रँडो सोजिरास्तस्य किंकराः ।
नीतिभ्रष्टा निर्दयाश्च पुण्यभूर्नरकायिता ॥ ४० ॥

प्लेगपीडितलोकानां निर्मितं रुग्णमन्दिरम् ।
शुश्रूषार्थं पुणेपुर्यां तिलकेन महात्मना ॥ ४१ ॥

आग्रायणनिबन्धोऽपि पूर्वमेव प्रकाशितः ।
विनिर्णयः कृतो यस्मिन् वेदकालस्य धीमता ॥ ४२ ॥

समारब्धो महाराष्ट्रे भारते हीरकोत्सवः ।
ब्रिटिशानां वैभवस्य सामर्थ्यस्य च दर्शकः ॥ ४३ ॥

रँडायर्स्टौ हतौ राम्राबुरसबस्य च दामुना ।
पुण्यपुर्यां गणेशाख्यखिण्डमार्गे रथस्थितौ ॥ ४४ ॥

तीव्रशब्दैर्लेदने तु गोपालेन प्रदर्शितः ।
निषेधो मृदुचित्तेन रँडस्य वधकारिणः ॥ ४५ ॥

भारतागमनात् तस्य क्षमापत्रप्रकाशनम् ।
परिणामस्तदुत्पन्नो दुःसहो वर्णितः पुरा ॥ ४६ ॥

संपादकस्य काळस्य शिवरामस्य धीमतः ।
निवासं बन्धनागारे न्यायाधीशः समादिशत् ॥ ४७ ॥

अर्धाधिकैकवर्षस्य तिलकस्य निबन्धनम् ।
कारागारे समादिष्टं सश्रमं न्यायमूर्तिना ॥ ४८ ॥

कारावासकथा श्रोतृता सज्जनक्लेशदायिनी ।
शरीरमभवत् क्षीणं गात्राणां शक्तिहीनता ॥ ४९ ॥

वेदज्ञेन कृतं तत्र नयसिद्धान्तचिन्तनम् ।
मूलस्थानस्य शोधाय वेदर्षीणां तपोजुषाम् ॥ ५० ॥

पण्डिता दुःखिनो भूता बहवो मुल्लरादयः ।
बालस्य वै सश्रमस्य बन्दिवासस्य वार्तया ॥ ५१ ॥

प्रयत्नस्तन्मोचनस्य वेदविद्याभिमानिभिः ।
कृतो दीर्घो युरोपीयैः सम्राज्ञीप्रार्थनादिभिः ॥ ५२ ॥

न्यूनीभूतः प्रयत्नेन कालः षण्माससंमितः ।
वासस्य बन्धनागारे निर्णीतस्याधिकारिणा ॥ ५३ ॥

एकवर्षात्यये मुक्तो बन्धनात्तिलको यदा ।
लोकैः स भिन्नवर्णानां धर्माणां च समादृतः ॥ ५४ ॥

कारावासस्य वृत्तान्तस्तिलकेन निवेदितः ।
सुधारकाख्यपत्रस्य चालकाय सविस्तरम् ॥ ५५ ॥

गृहीत्वा स्वल्पविश्रान्तिं लुप्तायाः प्रतिपत्तये ।
शक्तेर्निजशरीरस्य कारावासकृतश्रमैः ॥ ५६ ॥

प्रतस्थे तिलको गन्तुं राष्ट्रीयबृहदुत्सवम् ।
मद्रपुर्यां समारब्धं राजनीतिविशारदैः ॥ ५७ ॥

सत्कर्तुं तिलकं सुधैर्मद्रासस्थमहाजनैः ।
उपाहारसमारम्भः कृतो राष्ट्रीयवृत्तिभिः ॥ ५८ ॥

रामेश्वरादितीर्थानि दृष्ट्वा लङ्कामुपागमत् ।
अपश्यद् बुद्धधर्मस्य स्तूपपूज्यस्थलानि च ॥ ५९ ॥

तथैव ब्रह्मदेशस्य कृता यात्रा महात्मना ।
वृत्तान्तस्तेन यात्राया व्याख्याने च निवेदितः ॥ ६० ॥

'हरिः ॐ' इति मन्त्रस्य कृत्योद्घोषं श्रुतिप्रियम् ।
केसरीवृत्तपत्रस्याभवत् संपादकः पुनः ॥ ६१ ॥

लोककल्याणकार्याणां विविधानामुपक्रमः ।
भारते च महाराष्ट्रे तिलकेन कृतः पुनः ॥ ६२ ॥

आर्यमूलनिवासस्य वेदाधारेण निर्णयम् ।
कृत्वा प्रकाशितो ग्रन्थ आङ्ग्लभाषामयोऽद्भुतः ॥ ६३ ॥

संसत् पञ्चाङ्गशुद्ध्यर्थं ज्योतिःशास्त्रविदां कृता ।
मुम्बापुर्यां च सारोन घटोदरमहीपतेः ॥ ६४ ॥

नागपूरादिसुरयेषु विदर्भनगरेषु च ।
संचारो जनबोधाय कृतः कर्णाटकेष्वपि ॥ ६५ ॥

नवशिक्षणसंस्थायास्तळेग्रामे विनिर्मितिः ।
सुव्यवस्था व्ययस्यापि पैसाफंडनिधेः कृता ॥ ६६ ॥

काचशालां हि संस्थाप्य नूतनोद्योगपर्षणः ।
अधारम्भः कृतस्तेन भारते चोदयोन्मुखे ॥ ६७ ॥

विश्वविद्यालयोद्धारोऽभवदावश्यकः खलु ।
इति मत्वा कर्झनेन नियुक्तं प्राज्ञमण्डलम् ॥ ६८ ॥

तदन्वेषणवृत्तान्तसूचनानां समाश्रयात् ।
सभासदां विचाराय संविधानं पुरस्कृतम् ॥ ६९ ॥

अधिकारस्य संकोचो निर्वाचितसभासदाम् ।
हस्तक्षेपसमापत्तिः केन्द्रमुख्याधिकारिणाम् ॥ ७० ॥

केसरीपत्रलेखेषु सर्वे दोषाः प्रदर्शिताः ।
सदस्यैर्गोखलेमुख्यैर्विधानं तद् विरोधितम् ॥ ७१ ॥

संपादितो दत्तकस्य यथाशास्त्रं द्विजोत्तमैः ।
जगन्नाथस्य बालस्य विधिस्ताईनिमन्त्रितैः ॥ ७२ ॥

प्रतिषेधः कृतस्तस्य दुर्बुद्धिवशया तया ।
प्रशासनेन मुम्बय्याः पीडितस्तिलकस्तदा ॥ ७३ ॥

निर्दोषस्तिलकोऽस्तीति जेंकिंसो निर्णयं ददौ ।
तिलकद्वेषिणो जाता विषण्णाश्च तदाज्ञया ॥ ७४ ॥

कुंभोजकर इत्येको नागपूरकरः परः ।
भूपतिः करवीरस्थस्तदङ्गणगताः खलाः ॥ ७५ ॥

अधिकारपदप्राप्ताः क्रेमंटाद्यधिकारिणः ।
आङ्ग्लास्तथा भारतीया विवर्णा बहवोऽभवन् ॥ ७६ ॥

हर्षेणान्दोलितः सर्वो जनताचित्तवारिधिः ।
पूर्णचन्द्रोदयेनेव शान्तवीचिर्महोदधिः ॥ ७७ ॥

वङ्गभङ्गं निराकर्तुं जातमान्दोलनं महत् ।
प्रवर्धितं विनाशाय शासनस्याङ्ग्लवासिनाम् ॥ ७८ ॥

गोपालो गोखलेवंश्यः काश्यां राष्ट्रसभापतिः ।
बहिष्कारपुरस्कारं चकाराध्यक्षभाषणे ॥ ७९ ॥

तिलको लालपालाभ्यामन्वितस्तत्पुरोहितः ।
संमतो यङ्गबन्धूनां कालीपुर्यां नियोजितः ॥ ८० ॥

आन्दोलनचतुःसूत्री भारतोद्धारकारिणी ।
कालिकानगरे पूते तिलकेन प्रकाशिता ॥ ८१ ॥

नौरोजिना समेशेन स्वीकृता सा च यान्धवैः ।
महासभासमारोहे मिलितैर्देशसेवकैः ॥ ८२ ॥

ध्येयं स्वराज्यमित्युक्तं साधनैश्च त्रिभिर्हितैः ।
बहिष्कारः स्वदेशी च राष्ट्रीयं शिक्षणं तथा ॥ ८३ ॥

प्राप्तव्यमिति संदेशो लोकशर्मप्रदो महान् ।
भारते तत्प्रसारार्थं संचारायानुयायिनः ॥ ८४ ॥

तिलकः प्रेषयामास देशभक्तिपरायणान् ।
यङ्गमद्रान्ध्रकर्णाटविदर्भस्थान् नरोत्तमान् ॥ ८५ ॥

नागपुर्यां हि कर्तव्यं भाविवर्षाधिवेशनम् ।
सभायाः सूत्रधारेण मेथाख्येन विनिश्चितम् ॥ ८६ ॥

मुंजे च स्थापयामास तिलकस्यानुयायिनाम् ।
नागपुर्यां सुविख्यातमेकं राष्ट्रीयमण्डलम् ॥ ८७ ॥

आसीद् नेमस्तवर्गस्य चिट्नीसः प्रमुखस्तदा ।
दलद्वयस्य संघर्षो जातस्तीव्रतमः खलु ॥ ८८ ॥

महासभाध्यक्षपदं तिलकोऽलंकरोत्विति ।
महान् यत्नः समारब्धो नवपक्षाभिमानिभिः ॥ ८९ ॥

यङ्गान्दोलनसंभूतबहिष्कारादिवादिभिः ।
मुंजेप्रभृतिभिः सर्वैर्गणेशेन च चोदितैः ॥ ९० ॥

संपादनाय लोकानामानुकूल्यस्य येतिरे ।
अहोरात्रं विदर्भाणां महाकोसलवासिनाम् ॥ ९१ ॥

कोसलस्था विदर्भस्थाश्छत्तिसगढनिवासिनः ।
आसन् समुत्सुकाः कर्तुं तिलकं च सभापतिम् ॥ ९२ ॥

स्वागतस्य सभायास्ते सदस्या बहवोऽभवन् ।
नेमस्तमुख्यनेतारस्तेन कातरतां गताः ॥ ९३ ॥

नागपुर्यां न नेमस्ताः सभास्थानं समाययुः ।
दर्शनाद् नकुलस्येव सर्पाः स्वगृहमाश्रिताः ॥ ९४ ॥

नेमस्तदुर्दशां श्रुत्वा नागपुर्यां सदग्रणीः ।
मुम्बापुर्यां विचारार्थं सहकारिण आह्वयत् ॥ ९५ ॥

नागपुर्याः सभायास्तैः स्थानान्तरविनिर्णयम् ।
कृत्वा च सुरतं योग्यमिति सर्वैर्विनिश्चितम् ॥ ९६ ॥

उप्तं मेथागृहे बीजं भाविनः कलहस्य च ।
कुप्रसिद्धिं गतं येन सुरतस्याधिवेशनम् ॥ ९७ ॥

हरेरनुनयं कर्तुं प्रविष्टौ मुम्बईपुरे ।
अळेकरश्च मुंजे च गुहां मेथागृहाभिधाम् ॥ ९८ ॥

जगजौचैः स्थितः स्थाने नरसिंहो गुहास्थितः ।
विलोक्य तौ नरौ प्राप्तौ निर्भीतावात्मसंनिधिम् ॥ ९९ ॥

न कालोऽस्ति विचाराय समस्यानां पुनः पुनः ।
निर्णीतमेव यत् पूर्वं तदेव परिपाल्यताम् ॥ १०० ॥

प्रत्यूचतुर्नरश्रेष्ठावुग्रसिंहोपमं स्थितम् ।
सभाकार्यस्य धौरेयं मेथाख्यं मानिनां वरम् ॥ १०१ ॥

आवां संप्रेषितौ सभ्यैर्नागपूरनिवासिभिः ।
संदेशं हार्दिकं तेषां संप्रदातुमुपस्थितौ ॥ १०२ ॥

न हि स्थानान्तरं कार्यं सभाया नागपूरतः ।
वयं सभायशःसिद्ध्यै त्वदीयादेशचारिणः ॥ १०३ ॥

कुर्वन्तु स्वेच्छया सर्वे भवत्पक्षसमासदः।
स्वागतातिथ्यकर्माणि निर्मितिं मण्डपस्य च ॥ १०४ ॥

अस्मत्संकलितं द्रव्यं प्रदास्यामः प्रमाणतः।
यथाविधिनियुक्ताय सभाकोशाधिकारिणे ॥ १०५ ॥

भवद्भिरेव कर्तव्यमध्यक्षस्य नियोजनम्।
अधिवेशनकालस्य संमत्या यानुयायिनाम् ॥ १०६ ॥

न वै भूयाद् यशोहानिर्विद्वर्भस्येति हेतुना।
प्रार्थितोऽत्रभवानद्य अत्रे राष्ट्रीयवृत्तिभिः ॥ १०७ ॥

मनोभङ्गो न कर्तव्य आयाताः शरणं वयम्।
वैफल्यजनितक्षोभो भवत्येव दुरासदः ॥ १०८ ॥

किंचिद् विहस्य मेथाजिस्तयोः संभाषणात्यये।
तुच्छतादर्शकं कम्पं स्वशीर्षस्याकरोत् सदा ॥ १०९ ॥

गुहागतस्य सिंहस्य रोमराजेस्तयोर्वचः।
मुखभूषणभूताया उत्पाटनमिवाभवत् ॥ ११० ॥

न प्रदायोत्तरं ताभ्यामुत्थितः स्वासनाद् बहिः।
गतो मेथा कार्यमग्नः कार्यमन्यद् विचिन्तयन् ॥ १११ ॥

अलेकरश्च मुंजे च प्रत्यायातौ गृहं प्रति।
नेमस्तदलमुख्येन मुम्बय्यामपमानितौ ॥ ११२ ॥

अपमानकृते छिद्रे क्रोधो विशति सत्वरम्।
हविषा कृष्णवर्त्मेव कटुवाक्यैः प्रवर्धते ॥ ११३ ॥

अपमानेन संतप्ता नागपूरस्थमित्रयोः।
भारते प्रसृताः सर्वे तिलस्यानुयायिनः ॥ ११४ ॥

पंजाबदेशभक्तानां राष्ट्रीयस्य दलस्य च।
नेता राष्ट्रपदाध्यक्षो लजपत्रायेतिसंज्ञितः ॥ ११५ ॥

कार्यं एवं महाराष्ट्रवङ्गपत्रैः पुरस्कृतम् ।
घोषस्योद्घोषितं नाम नेमस्तैः प्रतिपक्षिभिः ॥ ११६ ॥

कार्यक्रमस्य सातत्यं चतुःसूत्रीमतस्य च ।
नेतृभिर्नवपक्षस्यात्यावेशेन पुरस्कृतम् ॥ ११७ ॥

सुरते किममिप्रेतं नेमस्तदलनेतृभिः ।
अनुत्तरित एवासीत् प्रश्नस्तैर्मौनसेविभिः ॥ ११८ ॥

मेथातिलकयोः प्रान्तेऽभिमुखेऽन्योन्यशङ्किनी ।
दलेऽभूद् रणभूरेव सुरतस्याधिवेशनम् ॥ ११९ ॥

तत्रत्याखिलवृत्तान्तो यथाज्ञातं निरूपितः ।
सभा तेन द्विधा भिन्ना विकलाङ्गाऽपतद् भुवि ॥ १२० ॥

विभक्तयोश्च संघयर्थं तिलकेन नियोजितम् ।
त्रिमूर्तिमण्डलं शीघ्रं भागयो राष्ट्रसंसदः ॥ १२१ ॥

महाराष्ट्रीयलोकेभ्यो दर्शनं क्रान्तिकारिभिः ।
प्रदत्तमरविन्दाद्यैः पुण्यपत्तनमागतैः ॥ १२२ ॥

संचारं च विदर्भेषु कृत्वा प्रान्तीयसंसदः ।
अगमत् सानुगो बालो धुळेग्रामाधिवेशनम् ॥ १२३ ॥

तत्पश्चादल्पकालेन शासनेन निरोधितः ।
पूर्वमन्वेषणं कृत्वा दण्डितो न्यायमूर्तिना ॥ १२४ ॥

सङ्गरस्य च वृत्तं तद् गम्भीरं रोमहर्षणम् ।
मंडालेयन्धनागारे निवासस्य च वर्णितम् ॥ १२५ ॥

शरीरं क्लेशार्त्यं वसनमिव मेने भगवता
　　यथा गीतासूक्तं तिलक इति राष्ट्रैरधिपतेः ।
स्थितस्त्वांशस्यान्तो न च लघुवृदन्क्षुद्रतनुषु
　　न तत्रामर्षितस्तम्मतिगतिरभूत् चिन्मयसुखे ॥ १२६ ॥

पापेनैव विनाशमेति सततं ब्रह्माण्डजाविष्कृतिः
कृत्यं यत् तु परस्य पीडनपरं पापस्य तल्लक्षणम् ।
कार्यं यज्जनतोपकारसुखदं तत् पुण्यमाहुर्बुधाः
पूर्वं जाड्ययुतं परं च विबुधैरुक्ता चिदाविष्कृतिः ॥ १२७ ॥

लोकाराधनरूपिणी भगवतः पूजा भवेद् यस्य हि
दिव्यं चिन्तनचारुनानुभवजं लोकाय दातुं च यः ।
मुख्यं दास्यविमोक्षसाधनमिति प्राप्तो ध्रुवं कर्मणः
संदेशं शिरसा नमामि तिलकं तं ज्ञानिचूडामणिम् ॥ १२८ ॥

इति माधवविरचिते श्रीतिलकयशोऽर्णवे सिंहावलोकननामा द्वाचत्वारिंशस्तरङ्गः ।

# त्रिचत्वारिंशस्तरङ्गः

संतोषः सर्वलोकस्य तिलकस्य विमोचनात् ।
शासनस्य विषादस्तु तत्कृपाकाङ्क्षिणामपि ॥ १ ॥

श्रुतिरेकापि श्रोतॄणां परिणामस्य भिन्नता ।
आस्तिकानां शिरोधार्या नास्तिकानां शिरोऽव्यथा ॥ २ ॥

मंडालेयबन्धनागारादागतस्तिलको गृहम् ।
श्रुत्वैव भारतीयानां समुद्घातो हृदम्बुधिः ॥ ३ ॥

अभिनन्दनसंदेशधाराभिरखण्डिता ।
श्रावणे जलधारेव सताहं केसरीगृहे ॥ ४ ॥

स्वर्णैराभरणैस्तेषां पीतवर्णैः समावृता ।
सरस्वतीविभागस्य भूमिस्तिलकसद्मनः ॥ ५ ॥

हसन्ति पुष्पिता वृक्षा लताश्च सुमभूषिताः ।
सहर्षा जीवसृष्टिश्च संप्राप्ते कुसुमाकरे ॥ ६ ॥

तद्वत् पुलकिता लोका मुक्तिवार्ताप्रणन्दिताः ।
संप्राप्ते स्वगृहं बाले भारतेऽस्मिन् निवासिनः ॥ ७ ॥

विद्वांसः संस्कृताध्ययनिरता विश्वपूजिताः ।
संदेशं प्रेषयामासुस्तिलकं चाभिनन्दितुम् ॥ ८ ॥

योगी विनायको वैद्यः पटवर्धनवंशजः ।
अध्यक्षः सार्वजन्याश्च सर्वलोकनमस्कृतः ॥ ९ ॥

सदस्यैः सह संभाष्य निश्चित्य स सत्वरम् ।
सत्कारायेति बालस्य कर्तव्या महती सभा ॥ १० ॥

गायकवाडेति विख्याते सभास्थानं विनिश्चितम् ।
षड्वादनं च समयो निर्णीतो भानुवासरे ॥ ११ ॥

मुम्बापुरीनागविदर्भदेश-
कर्णाटभागेभ्य उपस्थितास्ते ।
स्वदेशसेवाव्रतधारिमुख्याः
प्रणन्तुकामा गुरुपादपद्मे ॥ १२ ॥

परीवृतः सुहृद्भक्तैस्तिलकः स्थानमागतः ।
जयाद्युद्घोषणायाश्चैः प्राङ्गणं तद् निनादितम् ॥ १३ ॥

श्रीकृष्णसूनुर्वैदर्भिः खापर्डेकुलभूषणः ।
गणेशाख्यो सुहृद्वर्यस्तिलकेन सहागतः ॥ १४ ॥

वैद्यसंज्ञकुले जातश्चिन्तामणिरनल्पधीः ।
विख्यातो भारतापार्थः प्राविशत् तदनन्तरम् ॥ १५ ॥

सातारामाद्वयियाक्श्रेष्ठः करंदीकरवंशजः ।
रघुनाथाभिधः प्राप्तः सभास्थानं ततः परम् ॥ १६ ॥

विजापूरकरो विद्वान् ग्रन्थमालाप्रकाशकः ।
गोविन्दस्य सुतो विष्णुर्निजासन उपाविशत् ॥ १७ ॥

वयोज्ञानतपोवृद्धो महर्षिः पटवर्धनः ।
स्वयकरोच्च सभाध्यक्षपदं सभ्यजनेच्छया ॥ १८ ॥

संस्थाप्रतिनिधीभूतैस्तिलकाय महात्मने ।
अध्यक्षस्याज्ञया सर्वैः पुष्पमालाः समर्पिताः ॥ १९ ॥

मुम्बापुरीमहाराष्ट्रविदर्भकरणाटक-
विभागेषु स्थिताः संस्थास्तिलकस्य मतानुगाः ॥ २० ॥

असंख्येयाः पुण्यपुर्यामासन् संघटनास्तथा ।
ताभिरप्यर्पिता हाराः स्वहस्तैर्वान्यथा तदा ॥ २१ ॥

सामुदायिक उल्लेखो मया ग्रन्थे प्रशस्यते ।
*निर्देशं वर्णने तस्माद् न कस्यापि करोम्यहम् ॥ २२ ॥*

स्वागतान्ते नरश्रेष्ठस्तिलकश्चोत्तरेऽब्रवीत् ।
मेघगम्भीरया वाचा स्वकीयप्रेममोदितः ॥ २३ ॥

चक्रनेमिक्रमेणैतद् निबद्धं सुखदुःखयोः ।
चिच्छक्त्या प्रेरितं विश्वं सप्राणं त्रिगुणात्मकम् ॥ २४ ॥

विषण्णो न भवेद् योगी दुःखेनापि महीयसा ।
सुखेनात्यन्तिकेनापि न प्रसन्नो भवेत् तथा ॥ २५ ॥

प्राप्य स्वान्तःस्थसंतोषं पथिको ज्ञानवर्त्मनि ।
अतीतः सुखदुःखानि स्वास्थ्यमक्षय्यमश्नुते ॥ २६ ॥

वेदान्तशमनश्चित्रं मनोज्ञं हृदयंगमम् ।
अध्यात्मनिरतैः शास्त्रे स्वानुभूत्यैव वर्णितम् ॥ २७ ॥

सुलभं तद् मनुष्यस्य संसारे नोपपद्यते ।
क्रीडामृगो विकाराणां प्रायशो विद्यते जनः ॥ २८ ॥

दाम्ना यद्वद्वा पशुर्भ्रष्टो मार्गादानीयते स्वलम् ।
तद्वद् विवेकसूत्रेण मानुषं चञ्चलं मनः ॥ २९ ॥

निजदोषपरिज्ञानात् प्रायश्चित्तं चिकीर्षुणा ।
प्राप्यते सत्प्रवृत्तिश्च स्थैर्यमप्यधिगम्यते ॥ ३० ॥

दिक्कालादि ह्यनुस्मृत्य संकल्पं कुरुते जनः ।
कल्याणं मङ्गलं भव्यं यो वै वाञ्छति कर्मणः ॥ ३१ ॥

उपायो यो भवेद् युक्तो व्यक्तिकल्याणसाधकः ।
युक्तः सोऽपि कुटुम्बस्य समाजस्यापि तत्त्वतः ॥ ३२ ॥

स्वदेशाद् दूरतो नीत्वा कारागारे निरोधितः ।
मंडालेनगरस्थेऽहं शासनेन तु षद् समाः ॥ ३३ ॥

न मया पठितं तत्र वृत्तपत्रं कदाचन ।
धुण्डिराजस्य पत्रेण प्रतिमासं सहृद् मया ॥ ३४ ॥

सुहृत्तनयपत्नीनां ज्ञातं कुशलमात्मनः ।
इतरेषां न वार्तापि संप्राप्ता श्रवणं मम ॥ ३५ ॥

जनस्थितिर्भारतस्य नेमस्तानां मनःस्थितिः ।
तथैव न मया ज्ञाता भूमण्डलपरिस्थितिः ॥ ३६ ॥

षडब्दस्य वियोगेन रीपव्हान्विंकलोपमः ।
पश्यामि च विसन्दर्भं विश्वं ग्रन्थमिवाद्भुतम् ॥ ३७ ॥

देशसेवैव कर्तव्या यथा पूर्वं तथोत्तरम् ।
निश्चित्यादावपीह प्राप्तश्चावशिष्टे ममायुषि ॥ ३८ ॥

संपरीक्ष्य विवेकेन विद्यमानां परिस्थितिम् ।
कुर्यात् सुज्ञो ध्येयसिद्ध्यै नयमार्गस्य योजनाम् ॥ ३९ ॥

परीक्ष्य रोगिणं पूर्वं रोगस्योत्पत्तिकारणम् ।
ज्ञात्वा भिषग्वरः पश्चाद् नियोजयति भेषजम् ॥ ४० ॥

जलपूतं न्यसेत् पादं वस्त्रपूतं पिबेज्जलम् ।
शास्त्रपूतं वदेद् वाक्यमिति शास्त्रविदां मतम् ॥ ४१ ॥

उत्तरस्योपसंहारमेभिर्वाक्यैः करोम्यहम् ।
प्रस्तावनेति मन्तव्या वरनग्रन्थस्य भाविनः ॥ ४२ ॥

विमुक्तेरुत्तरे काले तिलकस्य यशोऽमलम् ।
शुक्लेन्दुवद् भारतस्य दिक्षु सर्वासु प्रसृतम् ॥ ४३ ॥

प्रशासनं न तत् सेहे प्रभुराष्ट्राधिकारिणः ।
असह्यं मेनिरे लोकैर्बालस्य कृतमादरम् ॥ ४४ ॥

न हि केनापि गन्तव्यं तिलकस्य गृहं प्रति ।
स्थापिता हेतुना तेन तद्गृहद्वारसंमुखे ॥ ४५ ॥

आरक्षकाः शासनेन चारकर्मविशारदाः ।
लिखन्ति नामधेयानि प्राप्तानां तद्गृहान्तिकम् ॥ ४६ ॥

समायातं जनं चारः किं ते नामेति पृच्छति ।
पुणेपुर्यां क्व ते वासः किमागमनकारणम् ॥ ४७ ॥

विमानिता असंख्येया उक्तप्रश्नैः प्रतिष्ठिताः ।
जना नियुक्तैश्चारैस्तैः पुणेजिल्हाधिकारिणा ॥ ४८ ॥

स्वकार्यालयमुद्दिश्य गन्तारो व्यवसायिनः ।
तद्वर्त्मनि भवन्त्येव तदनादरभागिनः ॥ ४९ ॥

कार्यारम्भविलम्बश्च प्रश्नमूलं विडम्बनम् ।
अनुभूतमिदं सर्वं दुर्दैवमिति तैर्जनैः ॥ ५० ॥

आङ्ग्लप्रभुकृपाछत्रछायापेक्षी निरन्तरम् ।
आदिशत् करवीरस्य प्रजाच्छत्रपतिस्तदा ॥ ५१ ॥

यो जनस्तिलकं स्तौति दर्शनाय च गच्छति ।
करोति केसरीपाठं वाक्षाशां च करोति यः ॥ ५२ ॥

संबन्धं येन केनापि कारणेन करोति यः ।
वालेन सह यो राज्ञो श्वेतद्वीपस्य शत्रुणा ॥ ५३ ॥

प्रजानीमस्तमस्माकं सदा द्रोहिणमेव च ।
स दोषी दण्डनीयश्च वरीवर्त्यनुशासनम् ॥ ५४ ॥

नृपतेः करवीरस्य ह्यङ्कितं राजमुद्रया ।
राज्येऽखिले तदा तस्मिन्नाज्ञापत्रं प्रकाशितम् ॥ ५५ ॥

कोल्हापूरनरेशस्य द्वेषमूलैव सा क्रिया ।
प्रेरिता सार्वभौमस्य राजकारणकोविदैः ॥ ५६ ॥

तिलकं निन्दितुं यान्ति भारतीयनृपा यदि ।
स्रोतस्तन्मान्यतायास्तु विनिरुद्धं भवेदिति ॥ ५७ ॥

अनुमानं न तेषां तद् युक्तितर्कानुसंगतम् ।
निर्बुद्धास्त्वल्पकालेन जज्ञिरेऽनुभवेन ते ॥ ५८ ॥

तेषां प्रोत्साहनेनैव करवीरजनाधिपः ।
आज्ञापत्रं तद् विशेषं संप्रवृत्तः प्रवर्तितुम् ॥ ५९ ॥

दीर्घद्वेषाहताः सर्वे बभूवुरधिकारिणः ।
आङ्ग्लेशशासिता हिन्दभूमिसेवैकधर्मिणः ॥ ६० ॥

संपादितुं ह्याङ्ग्लमैत्रीं कर्तव्या शत्रुता स्वयम् ।
निजबन्धोर्भारतीयैः स्वदेशप्रेमकारिणः ॥ ६१ ॥

आश्रिता नीतिरेवैतैर्भारते स्वाङ्ग्लभूमिजैः ।
कुटिला सापथभ्रष्टैर्हिन्दभूमिप्रशोषकैः ॥ ६२ ॥

परावृत्ताश्च जनान् कर्तुं तिलकादरदर्शनात् ।
मुम्बईप्रान्तपतिना तिस्र आज्ञाः प्रवर्तिताः ॥ ६३ ॥

महोत्सवे गणेशस्य गौरवेण न निर्दिशेत् ।
विहाय देवतानाम नामान्यन्यानि कश्चन ॥ ६४ ॥

असंमतानि पद्यानि न गेयानि महोत्सवे ।
कर्तव्यानि निषिद्धानि नाथवा भाषणान्यपि ॥ ६५ ॥

प्रदर्शयेन्न चित्राणि राजद्रोहापराधिनाम् ।
न तेषां पुत्रपौत्राणां लोकाः कुर्युर्महादरम् ॥ ६६ ॥

पुष्पमालार्पणं कृत्वा मार्गेणान्येन केनचित् ।
य आज्ञा अतिवर्तन्ते दण्डनार्हा भवन्ति ते ॥ ६७ ॥

द्योतयन्ति क्रूरवृत्तिं तिलकद्वेषसंभवाम् ।
प्रशासनस्य ता आज्ञास्तथा तस्याधिकारिणाम् ॥ ६८ ॥

सर्वेऽधिकारिणो दक्षा जिल्हाकार्यालयाधिपाः ।
प्रजाहस्तैः कारयितुं सर्वाज्ञापरिपालनम् ॥ ६९ ॥

आकर्णाटात् सिन्धुदेशं विस्तृतो दक्षिणोत्तरम् ।
प्रदेशो मुम्बईलाखानामा संबोधितस्तदा ॥ ७० ॥

बेळवी बेळगावस्थो द्रष्टुं पुण्यपुरीं प्रति ।
एकदा तिलकं तस्मिन् काले प्राप्तोऽतिसङ्कटे ॥ ७१ ॥

तं दृष्ट्वाऽनन्तरं ग्रामं स निजं च न्यवर्तत ।
तदाकर्ण्याशुभां वार्तां जिल्हेशः क्रोधमादधे ॥ ७२ ॥

स पप्रच्छ तमाहूय रोषेण स्फुरिताधरः ।
तिलकं द्रष्टुकामस्त्वं गतः पुण्यपुरीमिति ॥ ७३ ॥

ब्रुवन्त्वप्रभवन्तो मां सत्यं वा वितथं च तत् ।
जानीथ वर्तनं किं न सदोषं नियमैर्नवैः ॥ ७४ ॥

तं बेळवी प्रत्युवाच दण्डन्यायविशारदः ।
न जानाति भयानस्मान् सदस्यपदसंस्थितान् ॥ ७५ ॥

संमाननीयाँल्लोकेषु प्रान्तेशविधिसंसदः ।
वाक्कीलव्यवसायेऽपि व्यतीतं च मदायुषम् ॥ ७६ ॥

अस्ति सत्यं भवद्भिर्यच् श्रुतं भृत्यजनाननात् ।
किमप्ययुक्तं न कृतं मया याऽलं पुणेस्थितम् ॥ ७७ ॥

तदा दृष्टवता श्रेष्ठं नेतारं तिलकं किल ।
निर्भयं कथयिष्येऽहं यतः पृष्टस्त्वयाधुना ॥ ७८ ॥

निःस्पृहस्य वचः श्रुत्वा दत्तान्वेषस्य वै तदा ।
तिलकादरसंपूर्णं जिल्हेशो विस्मितोऽभवत् ॥ ७९ ॥

प्रशासनस्य मुख्यस्या आदेशाननुचक्रिरे ।
कृत्वा भाषान्तरं तेषां परप्रान्तस्थशासकाः ॥ ८० ॥

घोषिताश्च विदर्भेषु कोसलेष्वधिकारिभिः ।
विभागेषूपभागेषु मराठीहिन्दिभाषयोः ॥ ८१ ॥

शिवाजेस्तिलकस्यापि जयन्त्यं महोत्सवे ।
गणेशस्य शिवाजेश्च चक्रुरित्यवराधिनः ॥ ८२ ॥

जिल्हाधीशसमादेशाद् धर्षिताः शान्तिसैनिकैः ।
बहुशो गर्हिता आसन् स्थानकस्याधिकारिभिः ॥ ८३ ॥

केचिदन्वेषणस्यान्ते दण्डिता न्यायकर्तृभिः ।
उदरंभरणोद्योगविहीना इति दोषिणः ॥ ८४ ॥

निरक्षरा निरुद्योगा गिरिकन्दरवासिनः ।
व्यापृताश्चौरकर्मादिदुष्कृत्येषु च ये सदा ॥ ८५ ॥

तदुपद्रवशान्त्यर्थं शासकैर्या पुरा कृता ।
योजना दण्डशास्त्रेषु स्वीकृता न्यायशास्तृभिः ॥ ८६ ॥

पारिपत्याय वीराणां दण्डसत्रे प्रवर्तिते ।
देशभक्तिप्रेरितानां तिलकस्यानुयायिनाम् ॥ ८७ ॥

वेणावरदयोस्तीरे गोदाप्रणितयोस्तथा ।
घट्टे तथा महाराष्ट्रे स्वातन्त्र्याणां निरोधनम् ॥ ८८ ॥

लेखवाणीमेलनानां कृते नगरवासिनाम् ।
कृत्वान्यथोपयोगं तु नियमानां प्रशासकैः ॥ ८९ ॥

गुप्तानुचरसंचारैरत्युद्विग्नाः प्रतिष्ठिताः ।
जातं स्थलान्तरं तेषां दुष्करं चारपीडया ॥ ९० ॥

दुराचारेण भृत्यानां शासनस्यानुवर्तिनाम् ।
तीव्रोद्वेगः समुत्पन्नस्तिलकस्य तदा हृदि ॥ ९१ ॥

इंग्रजा भारतं प्राप्ता अधिकारपदस्थिताः ।
विचारार्हं न मन्यन्ते स्वातन्त्र्यं हिन्दवासिनाम् ॥ ९२ ॥

यूरोपस्था जना एव स्वातन्त्र्यस्याधिकारिणः ।
तेषां मत्या न तत्पात्रमाशियाखण्डमानवाः ॥ ९३ ॥

न तत्प्रार्थनया लाभ इति बालो व्यचिन्तयत् ।
विरलाः सुहृदः सन्ति भारतस्याङ्ग्लभूमिषु ॥ ९४ ॥

आकर्ष्टुं मानसं शीघ्रं समतास्थितचेतसाम् ।
कृत्येषु न्यायवाह्येषु यात्स्तेषां मनो दधे ॥ ९५ ॥

आङ्ग्लख्यातं कीरहार्डि पार्लमेंटसभासदम् ।
नेतारं श्रमिपक्षस्य हिन्दभूहितचिन्तकम् ॥ ९६ ॥

अलिखत् तिलकः पत्रं सुहृदं प्रति विस्तृतम् ।
अन्याय्यादेशसंजातदुःखक्लेशनिदर्शकम् ॥ ९७ ॥

कारागाराद् विमुक्तोऽहं वर्षषट्कादनन्तरम् ।
स्वतन्त्रतापूतवायुं श्वसिम्यद्यापि नैव ह ॥ ९८ ॥

स्थिताः सर्वे वन्दिधाम्नि मम पक्षानुवर्तिनः ।
अपञ्जरेऽनाद्मभिस्ताविवासीना गृहेष्वपि ॥ ९९ ॥

अहोरात्रं चारदृष्टिक्षेपोपद्रवजर्जराः ।
व्यथिता अपमानेन जीवन्ति क्षुब्धचेतसः ॥ १०० ॥

पत्रं तत् प्रेषयामास कीरहार्डिः स्वयं पुनः ।
हिन्दभूव्यवहारस्य मयूनाम्ने सचिवाय वै ॥ १०१ ॥

प्रान्तशासनमुख्याय प्रेषितं सचिवेन तत् ।
पत्रेण तिलकायेति ज्ञापितं कीरहार्डिना ॥ १०२ ॥

न शान्तेः संप्राप्तिस्तिलकमनसाभूदधिगता ।
स्वधाम्नि स्थित्वापि प्रकृतिविषमैः क्षुद्रपिशुनैः ।
असद्रात्रेशेन प्रतिदिनमहोरात्रमधमै-
र्गृहप्रासासेभ्यो विमलचरितेभ्यो गतनयैः ॥ १०३ ॥

इति माधवविरचिते श्रीतिलकयशोऽर्णवे तिलकमनस्तापनामा त्रिचत्वारिंशस्तरङ्गः ।

## चतुश्चत्वारिंशस्तरङ्गः

देशस्वातन्त्र्यसिद्ध्यर्थं तिलकोऽचिन्तयत् सदा ।
उपायान् प्रस्तुतान् सर्वान् काले ये चोपयोगिनः ॥ १ ॥

संवादेषु तथा चर्चा मित्रैः सह विवेकिभिः ।
तस्मिन्नेव कृता तेन विषये कर्मयोगिणा ॥ २ ॥

भवेद् यदि होकमेव भारतस्य सभामुखम् ।
तस्याः प्रभावो वर्धेत राष्ट्रेच्छायाः समर्थने ॥ ३ ॥

तस्मात् सर्वप्रयत्नेन सर्वपक्षसुसंहतिः ।
कल्पितव्या च मध्यस्थैः कॉंग्रेसस्यानुयायिनाम् ॥ ४ ॥

महासभां समाश्रित्य कर्तव्यः प्रोद्यमो महान् ।
यस्मैव भारतीयानां रक्षणस्य भवेत्सभा ॥ ५ ॥

सद्यो याचास्यमाने वा शान्तियुक्तेऽथवान्यथा ।
प्रतिपक्षी भवेत् काले तद्भेदे विफलः सदा ॥ ६ ॥

तितीर्षूणां प्लवस्तस्मात् परदास्यार्णवं खलु ।
करणीयो भारतस्य सभैका राष्ट्रसंज्ञिका ॥ ७ ॥

निवेदितव्यं मित्रेभ्यस्तिलकेन विनिश्चितम् ।
लिखित्वा बहुपत्राणि सर्वेभ्योऽखिलभारते ॥ ८ ॥

विद्यमानैः सूत्रधारैरसत्पक्षो निरोधितः ।
राष्ट्रीयसंसदः कार्यात् प्रवेशादपि मण्डपे ॥ ९ ॥

ऱ्हासो जातः समाया यः प्रेमिणां देशबन्धुषु ।
षडब्दसंमिते काल आसीच्चिन्तास्पदं खलु ॥ १० ॥

संख्या प्रतिनिधीनां च सर्वथा कृशतां गता ।
नोत्साहो वर्तते लोके समाकार्याभिवृद्धये ॥ ११ ॥

केन्द्रीकर्तुं भारतस्य मतं सामर्थ्यसंयुतम् ।
शस्त्रं विनिर्मितं जातं तेजोहीनं च दुर्बलम् ॥ १२ ॥

तस्मिन् दार्ढ्यं समानेतुं प्रयासः सत्वरं महान् ।
कर्तव्यो निष्ठयासाभिर्वेञ्चाप्त्यै विबुधैरिव ॥ १३ ॥

सुरार्थितो ददेऽस्थीनि दधीचिर्मुनिसत्तमः ।
देवकार्यस्य सिद्ध्यर्थमविरोधं सुखेन च ॥ १४ ॥

यशसे राष्ट्रकार्यस्य सोत्साहाः सन्तु भारते ।
त्यागं चिकीर्षवः सर्वे राष्ट्रस्य हितचिन्तकाः ॥ १५ ॥

भारतैक्यं विनिर्मातुं कर्तुं च बलशालिनीम् ।
संसदं सन्तु राष्ट्रस्य प्रतिज्ञाबद्धसेवकाः ॥ १६ ॥

संस्थानां लोकयुक्तानां द्वारा किल नियन्त्रणम् ।
व्यवहारस्य लोकानां कर्तुं सामर्थ्यमाप्नुयुः ॥ १७ ॥

सम्यक् प्रतिनिधीनां वै कर्तुं निर्वाचनं तथा ।
भारतीया जनाः सर्वे इति बालो व्यचिन्तयत् ॥ १८ ॥

समदुःखो भारतेन देश ईरीतिसंश्रितः ।
तस्य स्वातन्त्र्यसंप्राप्त्यै कुर्वन्ति बृहदुद्यमम् ॥ १९ ॥

तद्देशीयाग्रगण्या ये स्वदेशपरदेशयोः ।
परीक्ष्य तं भारतीयाः कुर्युर्मार्गस्य निर्णयम् ॥ २० ॥

राजनीतिविदां मध्ये ग्लॅड्स्टनप्रमुखा जनाः ।
ईरिस्थानमहोद्यत्या आसन्नुद्यमशालिनः ॥ २१ ॥

भारतेऽपि जनैः कार्यमैक्यं ध्येयविनिश्चितौ ।
गन्तव्यं नेतृभिः पश्चाद् द्रष्टुं साम्राज्यमन्त्रिणः ॥ २२ ॥

निश्चयन्धुयलं पृष्ठे धृत्वामे लोकनिर्णयम् ।
प्राप्तुमाङ्ग्लानुकूलत्वं भवेयुस्ते प्रयत्निनः ॥ २३ ॥

एवं संचिन्तयन् नित्यं तिलको निश्चिकाय च ।
कार्यपद्धतिरूपेण पुरस्कर्तुं मतं निजम् ॥ २४ ॥

आङ्ग्लाधिकारी तत्काले मुम्बईशासनाधिपः ।
आदिष्टो लंदनस्थेन मण्डलेनापि मन्त्रिणाम् ॥ २५ ॥

दूरीकर्तुं चिन्तितव्या निर्बन्धान् योजनासु च ।
तिलकाय पुनर्दातुं जन्मसिद्धस्वतन्त्रताम् ॥ २६ ॥

एकरूपे तदा जाते परस्परविरोधिनोः ।
मनस्याकस्मिकादेकात् कारणात्सहसा तदा ॥ २७ ॥

सम्राजोद्घोषितं युद्धं जर्मनानां युयुत्सुना ।
आङ्ग्लफ्रेंचादिवैरोद्रैः संधिबद्धैस्तदा खलु ॥ २८ ॥

विंशे हि शतके वर्षे चतुर्दशतमेऽशुभे ।
खैस्तवर्षेऽष्टमे मासि चतुर्थे दिवसे ननु ॥ २९ ॥

प्रान्तेशाशामनुसृत्य पुणेजिल्हापतिः स्वयम् ।
तदा निमन्त्रयामास तिलकं स्वगृहं प्रति ॥ ३० ॥

तयोः संवादतात्पर्यं नरसिंहेन वर्णितम् ।
उपरिष्टात् प्रवक्ष्यामि देवधाण्या समासतः ॥ ३१ ॥

स्वतन्त्रताया बालस्य सन्ति ये हानिकारकाः ।
निर्बन्धास्तेऽसमीचीनाः सर्वे संप्रति सर्वथा ॥ ३२ ॥

शासनस्य मतं ह्येतत् तिलकं प्रति सोऽब्रवीत् ।
तिलकाद् विद्यतेऽपेक्षा शासनस्यापि संप्रति ॥ ३३ ॥

कर्तव्यं प्रस्तुते काले लोकानां मार्गदर्शनम् ।
यशस्करं च यच्च श्रेय आङ्ग्लभारतयोर्द्वयोः ॥ ३४ ॥

विचारान्ते स्वीकृता सा तिलकेनापि सूचना ।
करोमि घोषणामेकामल्पकालेन सोऽब्रवीत् ॥ ३५ ॥

सप्तविंशे दिनेऽगस्टे मासे तिलकघोषणा ।
प्रकाशिता भारतस्य ज्ञप्त्यै विश्वजनस्य च ॥ ३६ ॥

सत्कारार्थं सुहृद्वर्या मिलिता पुण्यपत्तने ।
मंडालेबन्दिशालाया मेऽल्पकालेन मोचनात् ॥ ३७ ॥

प्रदातुमुत्तरं तेषां वचसा शुभशंसिनाम् ।
अल्पशब्दैर्यदुक्तं तत् कथयेऽद्य सविस्तरम् ॥ ३८ ॥

स्थितीक्षणे गतः कश्चित् कालोऽस्माकं विमोचनात् ।
विचारान् प्रकटीकर्तुं संप्राप्तः समयोऽधुना ॥ ३९ ॥

किं भवेद्युद्धकालेऽस्मिन् कर्तव्यं देशवासिनाम् ।
किं पथ्यं किमपथ्यं च वक्तव्यं देशनेतृभिः ॥ ४० ॥

आङ्ग्लशासनतन्त्रस्य यावज्जन्मविरोधिनः ।
वयमास्मेति विख्यातं लोकानां पृथिवीतले ॥ ४१ ॥

जन्मसिद्धोऽधिकारश्च स्वराज्यस्थापनं भवेत् ।
मया स्वदेशे जातस्य मानवस्येति घोषितम् ॥ ४२ ॥

संमतं भारतस्यापि राष्ट्रसंसत्सभासदाम् ।
नौरोजिभिः शंसितं च कालिकत्ताधिवेशने ॥ ४३ ॥

आङ्ग्लस्य शासने दोषा बहवः सन्ति यद्यपि ।
तथापि प्रगतेस्तत्र विद्यतेऽवसरोऽधुना ॥ ४४ ॥

जनतासहकारस्य प्रवृत्ते राज्यशासने ।
अपेक्षन्ते सदा वृद्धिं शासनस्याधिकारिणः ॥ ४५ ॥

मोर्लेमिंटोविधानेन रथः प्रगतिवर्त्मनि ।
नीतस्तत्र स्थिरीभूतश्चाल्यतां देशनेतृभिः ॥ ४६ ॥

न हिंस्रक्रान्तिमार्गेषु विश्वासो वर्तते मम ।
प्रयोगः प्रायशस्तेषां प्रगतेर्हानिकारकः ॥ ४७ ॥

एतदुक्तं मया पूर्वं संशयातीतभाषया ।
केसरीपत्रलेखेषु सभायां भाषणेषु च ॥ ४८ ॥

लघुराष्ट्रप्रदेशानामपहाराय वर्तते ।
जर्मन्युद्घोषितं युद्धमाङ्ग्लफ्रान्सविरोधकम् ॥ ४९ ॥

अबलानाल्पराष्ट्राणां स्वातन्त्र्यस्य धृतव्रताः ।
आङ्ग्लफ्रेंचादिलोकाश्च जर्मनप्रतिपक्षिणः ॥ ५० ॥

मित्रसंघसमाविष्टा लोकतन्त्राभिमानिनः ।
व्यक्तिप्रभुत्वतन्त्राश्च विद्यन्ते जर्मनादयः ॥ ५१ ॥

भवेयुर्भारते लोकाः सहकार्याय तत्पराः ।
प्रशासनेन युद्धेऽस्मिन् सहेच्छन्तस्तदुन्नतिम् ॥ ५२ ॥

युद्धविद्याशिक्षणस्य द्वारमेवास्त्यपावृतम् ।
विशन्तु राष्ट्रसैन्ये ये युद्धविद्याभिलाषिणः ॥ ५३ ॥

शतकादधिकः कालो व्यतीतो दर्शनं विना ।
शस्त्राणां भारतीयानां संजाता युद्धभीरुता ॥ ५४ ॥

हिन्दभूमिनिवासिभ्यो दुर्लभोऽवसरोऽधुना ।
युद्धरूपेण संप्राप्तः शूलपाणेरनुग्रहात् ॥ ५५ ॥

अभ्यायं शस्त्रविद्याया युवका आशु भारते ।
उत्थापनं पुनश्चैव कुर्वन्तु क्षात्रतेजसः ॥ ५६ ॥

क्षात्रतेजोवलोपेतो लोकः स्वातन्त्र्यमर्हति ।
तद्विहीनो दास्यपङ्के वर्तते दर्दुरो यथा ॥ ५७ ॥

संभूतो भारते देशे युवा संप्रार्थ्यते मया ।
क्षुद्रं हृदयदौर्बल्यं त्यक्त्वोत्तिष्ठ महामते ॥ ५८ ॥

भवन्ति शिक्षिता लोका विनयान्वितजीविताः ।
युद्धविद्यासु विश्वेऽस्मिन् निर्भया दीनवत्सलाः ॥ ५९ ॥

आक्रान्तेषु च लोकेषु बलाक्रमणकारिषु ।
सदस्युत्कर्णता दृष्टा वक्तव्यविषया तदा ॥ ७२ ॥

वक्तव्यपठनभ्रान्तचित्तायैवानुयायिने ।
रहस्यं प्रोक्तमन्त्रस्य मित्राय तिलकोऽवदत् ॥ ७३ ॥

विपत्तिकाले यदि दर्शयामि
सुहृद्गुणं साङ्ग्लसुहृद्गणाय ।
न देशबन्धोरहितं करोमि
न चाङ्ग्लशत्रोर्हितमाचरामि ॥ ७४ ॥

तेषां जये लोकगणाधिराज्य-
तत्त्वस्य जीवित्वमिवावशिष्टम् ।
जये च तत्तत्त्वविशेषकस्य
भात्येव मे भारतभाग्यसिद्धिः ॥ ७५ ॥

इति माधवविरचिते श्रीतिलकयशोऽर्णवे युद्धापत्कालकर्तव्यघोषणानामा
चतुश्चत्वारिंशस्तरङ्गः ।

# पञ्चचत्वारिंशस्तरङ्गः

राष्ट्रीयसंसदो भङ्गात् सुरतस्याधिवेशने ।
नेत्राज्ञया स्वपक्षस्य नेमस्तैः स्थापिता सभा ॥ १ ॥

कन्व्हेन्शनिति तन्नाम दत्तमाङ्ग्लानुवर्तिभिः ।
संचालकैर्बुद्धिमद्भिर्वाच्छामेथादिभिस्तदा ॥ २ ॥

अवधौ सप्तवर्षाणां बलहीनाभवत् क्रमात् ।
शशीवासितपक्षस्य क्षीणबिम्बो हतप्रभः ॥ ३ ॥

गता तेजस्विता तस्या मान्यतापि क्रमेण च ।
तत्प्राप्त्यै चिन्तयामासुः सदुपायान् हितैषिणः ॥ ४ ॥

कलिकत्तास्थितो घोषः कस्तुरीरंग आय्यरः ।
मद्रासस्थः प्रयागस्थश्चिन्तामणिरनल्पधीः ॥ ५ ॥

राष्ट्रसंसत्समुन्नत्यै सर्वपक्षैक्यवर्धकः ।
यत्नो विवेकिभिर्देशे कर्तव्यो देशसेवकैः ॥ ६ ॥

इति तैः स्वमतं व्यक्तं स्वकीये दैनिके भृशम् ।
प्रदत्ता चालना लेखैर्दिङ्मूढजनबुद्धये ॥ ७ ॥

नेमस्तयुवका ऊचुः पठित्वा चालघोषणाम् ।
राष्ट्रसंसदि कर्तव्यः प्रवेशास्तिलकानुगैः ॥ ८ ॥

नेमस्तानां विरोधस्य कारणं नाद्य वर्तते ।
उभयोः पक्षयोरेकं ध्येयं साधनमेव च ॥ ९ ॥

महाराष्ट्रेऽपि विद्वांसो देशकार्यहिते रताः ।
सत्त्वशीला व्यराजन्त विजापूरकरादयः ॥ १० ॥

राजारामाभिधे ख्याते विष्णुरध्यापकाग्रणीः ।
आसीद् विद्यालये श्रेष्ठे विजापूरकरान्वयः ॥ ११ ॥

ग्रन्थमालाभिधस्याभूद् मासिकस्य प्रवर्तकः ।
अभिमानी स्वधर्मस्य स्वभाषादेशयोस्तथा ॥ १२ ॥

कोल्हापुरेशाश्रयवर्धितं तत्
विद्यालयं कण्टकवृक्षकल्पम् ।
त्याज्यं तदा धर्ममतानुगस्य
स्वदेशसेवैकधियो जनस्य ॥ १३ ॥

राष्ट्रशिक्षणकार्यस्य प्रचाराय महोद्यमः ।
वङ्गभङ्गोत्तरे काले कृतो वङ्गनिवासिभिः ॥ १४ ॥

करवीरमहाविद्यालयत्यागादनन्तरम् ।
विष्णुरुद्घाटयामास स्वतन्त्रं शिक्षणाश्रमम् ॥ १५ ॥

संस्थापितं महाराष्ट्रे विष्णुना तिलकेन च ।
राष्ट्रीयशिक्षणं दातुं ज्ञानधामैकमुत्तमम् ॥ १६ ॥

लोकप्रियं तळेग्रामे पुणेनगरसन्निधौ ।
तदुच्चशिक्षणं दातुं स्थानं सर्वगुणैर्युतम् ॥ १७ ॥

नातिशीतं न चात्युष्णं समन्ताद् वायुमण्डलम् ।
सह्याद्र्यधित्यकाभूम्यां लोणखण्डालयावुभौ ॥ १८ ॥

सृष्टिशोभाशीतवातस्वादुवारिपरिप्लुतौ ।
समाश्रितौ ग्रीष्मकाले सुखरया धनिकैर्जनैः ॥ १९ ॥

वारीणि संकलीकृत्य यत्र वै स्रोतसां कृता ।
कृत्रिमाम्भःप्रपातेभ्यो विद्युच्छक्तिविनिर्मितिः ॥ २० ॥

श्रेष्ठिना पारसीकेन प्रयोगो भारते कृतः ।
यन्त्रकालोदयद्रष्ट्रा जमशेदार्येण धीमता ॥ २१ ॥

समर्थविद्यालयकल्पकोऽयम्
तत्स्थापको विष्णुनामा प्रसिद्धः ।

सत्यव्रतः सर्वपक्षाग्रणीनां
　　मान्योऽस्ति यः पक्षपाताद्‌तीतः ॥ २२ ॥

यो गोखलेतिलकयोर्हृदि पूज्यबुद्धिं
　　वैराग्यशीलविनयादिगुणैरवाप ।
बुद्धिं समादरयुतां हृदये दधार
　　विष्णुस्तयोर्भरतभूमिहितोद्यमेषु ॥ २३ ॥

विष्णुः समानमित्रत्वाद् गोखलेबालयोः सदा ।
सर्वेषु राष्ट्रकार्येषु स ऐच्छत् तत्सहस्थितिम् ॥ २४ ॥

यदाथौंधीद् विज्ञांटासीत् विदुषी यत्नशालिनी ।
महासभाप्रवेशार्थं तिलकस्यानुयायिनाम् ॥ २५ ॥

यशसे सन्धिकार्यस्य तां विष्णुः समुपस्थितः ।
कर्तुं समुचितां भूमिं उभयद्वन्द्विनोरपि ॥ २६ ॥

गोपालं दृष्टवान् पूर्वं तिलकं तदनन्तरम् ।
ज्ञातुं तत्सहकार्यस्य संभवोऽप्यस्ति वा न वा ॥ २७ ॥

यद् ज्ञातं चर्चया तेन तदेकस्मान्निवेदितम् ।
द्वितीयाय तथा तस्माद् ज्ञातं तत् प्रथमाय च ॥ २८ ॥

चर्तुं सेतुं प्रयेते तत्पक्षभेदव्रतान्तरम् ।
निराकर्तुं सदा विष्णुः सात्त्विकः शुद्धहेतुना ॥ २९ ॥

नैकादशे समायाता योगिनी स्वाश्रमास्थिता ।
मासे पुण्यपुरीं देवी पूर्वं पत्रानुदर्शिते ॥ ३० ॥

पुण्यशीला पुणेग्रामं संप्राप्ता सा डिसेंबरे ।
ददर्श भारतख्यातौ गोखलेतिलकावुभौ ॥ ३१ ॥

तिलकस्य मतं ज्ञात्वा गोपालेन सहाकरोत् ।
संभाषणं मेलनं च पक्षयोः साभिसारिणी ॥ ३२ ॥

चर्चान्ते च ददौ तस्मै गोपालो लिखितं मतम् ।
महासभाप्रवेशाय दर्शयित्वानुकूलताम् ॥ ३३ ॥

तिलकस्य सपक्षस्य प्रवेशोऽहितकारकः ।
इत्याहुः पत्रतात्पर्यं तल्लेखज्ञा जनाः क्वचित् ॥ ३४ ॥

सुधारकेण बालस्य वार्तालापस्य लेखनम् ।
कृतं टिप्पणिरूपेण धीमत्संदेशहारिणा ॥ ३५ ॥

दत्ता प्रतिलिपिस्तस्य तेन नेतृद्वयाय च ।
नरसिंहकृते ग्रन्थे संपूर्णा सोपलभ्यते ॥ ३६ ॥

ज्ञायते पठनात् तस्य भारते वायुमण्डलम् ।
जातं सर्वप्रदेशेषु भेदग्रन्थिविभेदकम् ॥ ३७ ॥

डिसेंबरेऽन्त्यसप्ताहे प्रारब्धमधिवेशनम् ।
सभापतिः सभासद्भिर्मुखेन्द्रः सत्कृतो वसुः ॥ ३८ ॥

विचारार्थं विनिश्चेतुं विषयानुपयोगिनः ।
समितिर्योजितैकासीत् सभासद्भिरुपस्थितैः ॥ ३९ ॥

बन्धनं शिथिलीकर्तुं सदस्येन पुरस्कृतः ।
प्रस्तावो मतिशीलेन सभानियमनिर्मितम् ॥ ४० ॥

विझांटा योगिनी देवी सूचनामलिखत् स्वयम् ।
प्रवेशग्रन्थीन् प्रच्छेत्तुं पुरा नेतृविनिर्मितान् ॥ ४१ ॥

केचित् तां दर्शयांचक्रुः सूचनां प्रति संमतिम् ।
अनुकूलो ववौ वायुः सामञ्जस्यप्रवर्धकः ॥ ४२ ॥

तस्मिन्नवसरेऽध्यक्षोऽपठद् गोपालपत्रकम् ।
ब्रिटिशानां शासनस्य बहिष्कारः प्रशंसितः ॥ ४३ ॥

तिलकेनेति तात्पर्यं तत् पश्चादधिगम्यते ।
उपस्थितसदस्येषु संजातस्तेन संभ्रमः ॥ ४४ ॥

प्रेषयामास वासन्ती संदेशं तिलकं प्रति ।
प्रशंसिता भवद्भिः किं शासनस्य बहिष्कृतिः ॥ ४५ ॥

प्रत्युत्तरं ददौ तस्मै तिलको नेति निश्चितम् ।
सन्ति स्थानिकसंस्थासु सदस्या मेऽनुयायिनः ॥ ४६ ॥

प्रान्तीयास्वपि सभ्या वै मतसंघैश्च मामकाः ।
नियोजिताश्च कुर्वन्ति कार्यं तत्र यदोचितम् ॥ ४७ ॥

देव्या दर्शयितुं नीतमध्यक्षाय तदुत्तरम् ।
तस्य पूर्वं सूचना सा सभासद्भिर्विरोधिता ॥ ४८ ॥

अब्रवीद् वसुरध्यक्षः पठित्वा तिलकोत्तरम् ।
खिन्नोऽस्म्यहं मयोक्तं यद् विरुद्धं तिलकं प्रति ॥ ४९ ॥

विस्मर्तव्यं सभासद्भिः तदिति प्रार्थये मुहुः ।
क्षन्तव्योऽहं प्रमादोऽयमज्ञानाद् हि मया कृतः ॥ ५० ॥

वसुनिर्दिष्टपत्रेण गोखलेलिखितेन ते ।
बभूवुः संशयग्रस्ताः प्रतिकूलं ददुर्मतम् ॥ ५१ ॥

सौदामिनीप्रपातेन दग्धः स्यात् पादपो यथा ।
पठनेनोक्तपत्रस्य दग्धा सा सूचना तथा ॥ ५२ ॥

गोपालो बुद्धिमान् ज्येष्ठ आद्यभारतसेवकः ।
वादे पटुरिति ख्यातो देशे खण्डत्रये तथा ॥ ५३ ॥

अथाप्यासीद् मनस्तस्य कातरं प्रतिपक्षिभिः ।
ग्रामस्थैः साहचर्याय सहकार्याय वा सदा ॥ ५४ ॥

हृता बुद्धिस्तेषां विमलमनसां यैरनुदिनं
कृतो यत्नः सन्धिं घटयितुमहो भिन्नमतयोः ।
न यातः कालोऽसौ भरतनृपगामुन्नतिपथं
भवेच्छक्यं नेतुं सकलसहकार्येण च यदा ॥ ५५ ॥

विचिन्त्येत्थं लोका जिगमिषव आत्मालयमतः
प्रति प्रातिष्ठन्त व्यथितहृदया मद्रनगरात् ।
गताः केचित् द्रष्टुं प्रणतभयभङ्गव्यसनि तत्
परं ज्योतिर्लिङ्गं विदितमिह रामेश्वर इति ॥ ५६ ॥

इति माधवविरचिते श्रीतिलकयशोऽर्णवे सन्निधयस्त्वैकस्यनामा
पञ्चचत्वारिंशस्तरङ्गः ।

# षट्चत्वारिंशस्तरङ्गः

वैयर्थ्यं सन्धियत्नस्य मद्रासस्याधिवेशने ।
सौम्योग्रपक्षयोर्मध्ये वादस्य विषयोऽभवत् ॥ १ ॥

पुण्यग्रामस्थपत्रोत्थवादवातस्य रंहसा ।
उन्मूलितः सुहृद्भावो मित्राणामपि हृत्स्थितः ॥ २ ॥

तिलकं गर्हयांचक्रुर्गोखलेपक्षपातिनः ।
बालानुयायिभिस्तद्वद् गोपालोऽपि विनिन्दितः ॥ ३ ॥

गोखले प्राप दुष्कीर्तिं तदा वै बालनिन्दया ।
कृतया गुप्तपत्रेषु लिखितेषु यशं प्रति ॥ ४ ॥

प्रकाशयाविलम्बेन पत्राणीति च साग्रहम् ।
गोपालं प्रार्थयामासुः सर्वे तिलकपक्षिणः ॥ ५ ॥

गोपालं ताडयामासुर्दुःशब्दैर्मर्मभेदकैः ।
बङ्गपंजाबमद्रासपत्रवार्ताहरास्तदा ॥ ६ ॥

नेमस्ता निजपत्रेषु महाराष्ट्रनिवासिनः ।
तिलकं मद्दुर्गोलीः फाल्गुने बालका इव ॥ ७ ॥

सन्दर्भहीनवाक्यानि तैरुद्धृत्य कृतो महान् ।
कर्णकर्कश आक्रोशो बालव्याख्यानसंग्रहात् ॥ ८ ॥

बहिष्कारप्रसाराय कृतमान्दोलनं महत् ।
निराकर्तुं वङ्गभङ्गं तिलकेन महौजसा ॥ ९ ॥

तिलको दर्शयामास घोरे कालेऽतिभीषणे ।
वङ्गीयेभ्यस्तदा मार्गमर्थगम्भीरया गिरा ॥ १० ॥

देशकार्येष्वर्पितानि देहगेहधनानि च ।
संधातुं यैर्भग्नवङ्गं शूरेभ्यस्तेभ्य उग्रया ॥ ११ ॥

तिलको गोखले चैव वृद्धावस्थासमाश्रितौ ।
आवाहनमपेक्षेते मृत्योर्व्याधिनिपीडितौ ॥ २४ ॥

गोमयं शवदाहाय रुक्षमोङ्कारमन्दिरम् ।
तटं नीतं मृत्युदूतैर्मूलाया उभयोरपि ॥ २५ ॥

हेयः पन्था अन्तकाले समीपस्थे जनैः सदा ।
निषेधितः शास्त्रकारैरधःपातप्रवर्तकः ॥ २६ ॥

लेखनाद् गुप्तपत्रस्य पुनस्तद्गुह्यगोपनात् ।
मतेन भारतीयानां गोपालो दोषवानिति ॥ २७ ॥

केसरीपत्रलेखान्ते सखेदं तिलकोऽलिखत् ।
जगाम स्वास्थ्यसंप्राप्त्यै ततः सिंहगडालयम् ॥ २८ ॥

शक्तिक्षयात् प्रतिदिनं व्याधिर्दुःसाध्यतां गतः ।
गोपालस्य मनो व्यग्रमासीत् तदपि चिन्तने ॥ २९ ॥

विद्यमाने शासनेऽपि तान्त्राणां वै कथं भवेत् ।
प्रगतिर्भारतीयानामिति तच्चिन्तनं सदा ॥ ३० ॥

उपायान् चिन्तयामास रुग्णशय्यानिषेदिवान् ।
शास्त्रिणः श्रीनिवासस्य ज्ञायते लेखनादिति ॥ ३१ ॥

पैच्छद् विलिंग्डनो ज्ञातुं गोपालाद् भारतेप्सितम् ।
तदुत्तरं स्वहस्तेन चक्रे दातुं स टिप्पणीः ॥ ३२ ॥

असमर्थोऽप्यङ्गुलीभिर्गृहीतुं लेखनीं दृढम् ।
लिलेख स्मृतिलेखेषु श्रीनिवासमहोदयः ॥ ३३ ॥

तत्याज पार्थिवं देहं तस्माल्लेखादनन्तरम् ।
गते दिनद्वये धन्यो गोपालो भारतोत्तमः ॥ ३४ ॥

मातृभूमिकिरीटस्थो गलितोऽद्य मणिर्महान् ।
उन्मूलितः सर्ववन्द्यो महाराष्ट्रयशोध्वजः ॥ ३५ ॥

आसन् शोकाम्बुधौ मग्ना गोखलेमृत्युवार्तया ।
भारतीयास्त्रिलोक्यां च राजनीतिविशारदाः ॥ ३६ ॥

समेताः प्रेतयात्रायां महाराष्ट्रनिवासिनः ।
संप्रकीर्णः पुणेपुर्यां विस्तृतो जनसागरः ॥ ३७ ॥

मन्ये सह्याद्रिमुल्लङ्घ्य संप्राप्तः पश्चिमोदधिः ।
अन्तिमं दर्शनं कर्तुं गोपालस्य महामतेः ॥ ३८ ॥

गोखलेमृत्युसंदेशं केसरीपत्रचालकाः ।
झटिति प्रेषयामासुर्मण्डस्थं तिलकं प्रति ॥ ३९ ॥

अथापोद्विग्नतां श्रुत्वा वार्तामसुखदायिनीम् ।
आयातो वायुवेगेन मण्डात् पुण्यपुरीं प्रति ॥ ४० ॥

समार्पयत् पुष्पहारं प्रस्थिताय दिवं प्रति ।
गोपालाय स्वमित्राय जडान्तःकरणेन सः ॥ ४१ ॥

ओङ्कारमन्दिरं प्राप्य पादपैः प्रेतवाहनम् ।
अवतार्य च स्कन्धेभ्यः स्थापितं सरितस्तटे ॥ ४२ ॥

चितामध्ये निदधिरे शावायाताः कलेवरम् ।
समन्त्रकं ततो दत्तः शवायाग्निर्द्विजोत्तमैः ॥ ४३ ॥

चिता चन्दनकाष्ठानां रचिता स्निग्धसेवकैः ।
अनयद् गन्धवाहो नु दिवं गोपालसद्यशः ॥ ४४ ॥

गोखलेमृत्युसंभूता निरुद्धा मनोव्यथा ।
व्यक्ताभूद् हृदयस्पर्शिवचोभिः शोकभाषणे ॥ ४५ ॥

ब्रह्मचर्याश्रमे प्राप सुविद्यां स्वोद्यमेन सः ।
अध्यगच्छन्महाविद्यालयीनं चोत्तमं पदम् ॥ ४८ ॥

परिस्थितेश्चिन्तनेन देशस्य दृढनिष्ठया ।
महोन्नतं पदं प्राप राजनीतिज्ञमण्डले ॥ ४९ ॥

आत्मार्पणं कृतं तेन भारतोद्धारहेतुना ।
असिधाराव्रतं तेन स्वार्थत्यागेन पालितम् ॥ ५० ॥

यावदायुर्जनाः सर्वे युवानश्च विशेषतः ।
अनुगच्छन्तु तन्मार्गं राष्ट्रसेवाचिकीर्षवः ॥ ५१ ॥

महार्हमणिरापतद् भरतभूमिमालाद्धः
पपात यत दक्षिणापथसुकीर्तिकेतुर्महान् ।
गतो यमवशं यदा प्रथितगोखलेवंशजो
य आचरदहर्निशं भरतखण्डसेवाव्रतम् ॥ ५२ ॥

इति माधवविरचिते श्रीतिलकयशोऽर्णवे गोखलेनिधनशोकनाम षट्चत्वारिंशस्तरङ्गः ।

# सप्तचत्वारिंशस्तरङ्गः

गोपाले प्रस्थिते स्वर्गं नेमस्तानां पुरोहिते ।
अवरुद्धा गतिस्तेषां विचाराचारयोः किल ॥ १ ॥

ग्रीष्मार्कातपदग्धस्य संचितस्य सरोवरे ।
नूतनागमनाभावादुदकस्य यथा क्षयः ॥ २ ॥

तथा नेमस्तपक्षोऽपि जातः क्षीणसभाजनः ।
लुप्तादरोऽतिकष्टेन ररक्षास्तित्वमात्मनः ॥ ३ ॥

मुम्बापुर्यां पारसीकश्रेष्ठो विधिविशारदः ।
मेथाख्यो नरशार्दूलो राजनीतिविचक्षणः ॥ ४ ॥

राष्ट्रकार्यप्रचारेषु घोषणा तन्मुखच्युता ।
वेदाक्षेव शिरोधार्या गोपालस्यानुयायिमाम् ॥ ५ ॥

पारसीकसमाजस्य वर्णनं क्रियते मया ।
अल्पसंख्येन येनापि संप्राप्तं गौरवं महत् ॥ ६ ॥

मुम्बय्यां महतीं ख्यातिं लेभिरे नरपुङ्गवाः ।
पारसीवंशसंभूता भारते पुरुषास्त्रयः ॥ ७ ॥

नौरोजिः प्रथमस्तेषां मेथा वाच्छा तथैव च ।
पूजिता निष्ठया सर्वैर्नेतार इति भारते ॥ ८ ॥

अर्थशास्त्राध्ययशीला राजनीतिविचक्षणाः ।
व्यराजन्त स्वतेजोभिः पश्चिमाम्बरसुग्रहाः ॥ ९ ॥

आयाताः पूर्वजास्तेषामिराणाद् म्लेच्छपीडिताः ।
आश्रयार्थं पूर्वकाले झरतुष्ट्रानुयायिनः ॥ १० ॥

परिपाल्य स्वधर्मं ते प्रापुर्हिन्दुजनैः सह ।
गुर्जरीमात्मसात् कृत्वा सामरस्यमिहाद्भुतम् ॥ ११ ॥

स्वीकृता गुर्जरी भाषा प्रथमं दूरदर्शिभिः ।
अन्योन्यव्यवहाराणां सौकर्यायातये बुधैः ॥ १२ ॥

विदेशस्था अल्पसंख्या अप्यविन्दन्त मान्यताम् ।
अवापुस्ते सुविश्वासं गुर्जराधिपतेरपि ॥ १३ ॥

अन्येषामपि वर्णानां सौराष्ट्रानर्तवासिनाम् ।
व्यवहारपटुत्वेन दाक्षिण्यादिगुणैरपि ॥ १४ ॥

बभूव प्रकृतिस्तेषां वाणिज्याकृष्टचेतसाम् ।
द्रव्योत्पादनदक्षापि समष्टिहितकारिणी ॥ १५ ॥

अर्जितं विपुलं द्रव्यमवाप्तं सुखमुत्तमम् ।
पदं चाधिगतं श्रेष्ठं दानशूरेषु भारते ॥ १६ ॥

चन्द्रो यथा ग्रहगणे तेजसा शोभतेऽम्बरे ।
राजते पारसीटाटा तथैव धनवद्गणे ॥ १७ ॥

महान् वित्तागमस्तेषां तथैवासीच्च तद्व्ययः ।
दातॄणां पारसीकानां स्वसमाजहिताय च ॥ १८ ॥

वाणिज्योद्योगकार्याणां वृद्ध्यर्थं वृहदुद्यमः ।
प्रशासनेन प्रारब्धो भारतस्याधुना शुभः ॥ १९ ॥

आसीद्धि पारसीटाटा तत्प्रवृत्तेः प्रवर्तकः ।
भारतेऽस्मिन् महोद्योगप्रारम्भेणैव विश्रुतः ॥ २० ॥

उन्नत्यै स्वसमाजस्य यतिरे सज्जना बहु ।
नार्यश्चापि सुसंपन्ना अपूर्वं लेभिरे यशः ॥ २१ ॥

पारसीकसमाजेऽस्मिन् भिक्षाजीवी न विद्यते ।
उद्योगजीविनः सर्वे दैन्यं तस्मादपाकृतम् ॥ २२ ॥

उद्योगेष्वग्रगामित्वं संप्राप्तं भारतेऽखिले ।
तद्वद् भूतदया तेषां सामान्यैरनुभूयते ॥ २४ ॥

सर्वलोकहितार्थाय यद्व्ययः संस्था विनिर्मिताः ।
रुग्णालया धर्मशालाः कलाविद्यालयास्तथा ॥ २५ ॥

पालिकानां शासनेऽपि तत्समाजस्य शोभनः ।
स्पृहणीयश्च भागोऽभूत् सर्वलोकहितप्रदः ॥ २६ ॥

मुम्बईपालिकाध्यक्षपदं भृशमलंकृतम् ।
मेथाख्येन फिरोजेन वाग्मिमुख्येन धीमता ॥ २७ ॥

जननेतेति विख्यातो मेथा मुम्बापुरीप्रियः ।
भारते राष्ट्रकार्येषु मुख्यः संचालकोऽभवत् ॥ २८ ॥

प्रेरणा राष्ट्रकार्यस्य नवरोजीमहाशयात् ।
प्राप्ता पितामहात् तेन हिन्दभूम्या महामतेः ॥ २९ ॥

लंदने विश्वविख्याते कर्णधार उवास सः ।
पार्लमेंटाख्यसंस्थायाः सदस्यत्वमवाप च ॥ ३० ॥

यथा प्रचोदयत्यर्कः सुदूराद् मण्डलग्रहान् ।
स्फूर्तिं हिन्दनिवासिभ्योऽयच्छत् तद्वद् नरोत्तमः ॥ ३१ ॥

विचाराणां विनिमयो दादाफेरोजयोरभूत् ।
प्रसङ्गेष्विति मुख्येषु कथितं होमिमोदिना ॥ ३२ ॥

अभूत् संचालको मेथा नौरोजौ लंदने स्थिते ।
तत्पुरस्कृतकार्याणां राष्ट्रस्य नगरस्य च ॥ ३३ ॥

निजबुद्धिप्रभावेण सेवया निरपेक्षया ।
मानित्वेन च शीलेन क्षिप्रमाप्नोद् महत् पदम् ॥ ३४ ॥

दिन्शौदल्जीति विख्यातो वाच्छानामा सहायकः ।
शासनस्य व्ययाभिज्ञश्चार्थशास्त्रविशारदः ॥ ३५ ॥

महासभासमारोहे द्रव्यमन्त्रीति भाविनः ।
शासनस्येति विद्वद्भिरादरेणाभिवर्णितः ॥ ३६ ॥

उत्पन्नात् कलहात् पश्चात् सुरतस्याधिवेशने ।
मैत्रीं याच्ञासहायोऽसौ चालयामास भारते ॥ ३७ ॥

नेमस्तानां समस्तानां मन्त्रोऽयं राजकारणम् ।
आङ्ग्लानुनयभूयिष्ठं भिक्षुकप्रार्थनानिभम् ॥ ३८ ॥

गोपालस्य मतं ग्राह्यं कोष्णपन्थानुयायिनाम् ।
आदरात् तत्पटुत्वस्य दिनशाफेरोजयोरपि ॥ ३९ ॥

निसर्गतः सा शक्तापि जरयाशक्ततां गता ।
देहयष्टिस्तथामान्द्यमाविर्भूतं मतेरपि ॥ ४० ॥

श्रवणाद् मृत्युवार्ताया गोपालस्य मतिर्गता ।
फेरोजस्य धुरीणस्य क्षणं स्तिमिततामिव ॥ ४१ ॥

तीव्राघातो दुःसहोऽयं वज्रपात इवास्ति मे ।
राष्ट्रकार्यधुरं वोढुं न क्षमः कोऽपि दृश्यते ॥ ४२ ॥

अस्मत्संमतमार्गेण काले भाविनि बुद्धिमान् ।
स उक्त्वैतद् विषण्णोऽभूद् भालमङ्गुलिनास्पृशत् ॥ ४३ ॥

उत्सन्नाः सेतवः सर्वे भविष्यन्ति न संशयः ।
अङ्किता तीव्रमन्यूनां भवेद् नूनं महासभा ॥ ४४ ॥

विवर्धते द्वेषबुद्धिः शासकेषु दिने दिने ।
असंतोषस्तथा देशे संघर्षस्यानिवार्यता ॥ ४५ ॥

मिलिताक्षोऽभवत् तूष्णीं प्राज्ञो भग्नमनोरथः ।
गतस्वास्थ्यः क्षीणशक्तिः रुग्णशय्यां शनैः श्रिता ॥ ४६ ॥

व्याधेरुपशमो नासीदुपचारशतैरपि ।
सर्वे चिकित्सका ऊचुरसाध्यश्चामयः खलु ॥ ४७ ॥

गतेषु षट्सु मासेषु युगपद् देहचित्तयोः ।
वैक्लव्यं परमां काष्ठां गतं तस्य महौजसः ॥ ४८ ॥

स्वगृहे मुम्बईपुर्यां मासि नोव्हेंबराभिधे ।
फेरोजस्य गताः प्राणाः शरीरात् पाञ्चभौतिकात् ॥ ४९ ॥

स्नेहशून्यो यथा दीपो निर्वाति स्म सवर्तिकः ।
तस्याशक्तशरीरस्य प्राणज्योतिस्तथा खलु ॥ ५० ॥

बृहद्गुरुः पारसीको मृतदेहोत्तरक्रियाम् ।
परंपरानुसारेण चक्रे तस्य यथाविधि ॥ ५१ ॥

धान्यां च निहितो देहः पुष्पमालाविभूषितः ।
गृध्राणामितरेषां च भक्षणाय विहायसाम् ॥ ५२ ॥

काकस्पर्शाय रक्षन्ति पिण्डमन्त्येष्टिकोविदाः ।
संन्यासिनः प्रशंसन्ति मृतस्योदकमज्जनम् ॥ ५३ ॥

परित्यक्तस्य देहस्य भूतमात्रस्य भूतये ।
भवेल्लय इति प्रज्ञा स्थिता तेषां स्थिरात्मनाम् ॥ ५४ ॥

और्ध्वदैहिकरीतिस्तु कालेन प्राप भिन्नताम् ।
स्वीकृत्या भिन्नधर्माणां परिस्थित्यन्तरेण च ॥ ५५ ॥

काकपिण्डविधेर्मूलं झरतुष्ट्रानुयायिभिः ।
तिलकस्य मतेनैकं पालितायाश्च पद्धतेः ॥ ५६ ॥

कृतो धार्मिकसंस्कारः संप्रदायोक्तवर्त्मना ।
अभिव्यक्तः पारसीकैः शोकः स्वहृदयस्थितः ॥ ५७ ॥

मुम्बापुर्यां तथान्येषु नगरेष्वपि भारते ।
ददुः श्रद्धाञ्जलीन् लोकाः सभाः कृत्वा मृतं प्रति ॥ ५८ ॥

दीपस्तम्भः प्रोच्चतः सागरेषु
मार्गस्थैको दर्शको नाविकानाम् ।
तेजःपुञ्जैः प्रेरितैरंशुभिः स्वै-
र्नष्टं कुर्वन् दिक्प्रवृद्धं तमोऽन्धम् ॥ ५९ ॥

मानी मेथा बुद्धिमान् सागरस्य
तीरे तिष्ठन् चालयामास सुभ्रम् ।
दत्त्वादेशान् राष्ट्रकार्ये स्वेभ्यो
धीरः सर्वैरादृतो देशभक्तः ॥ ६० ॥

नष्टे स्तम्भे मज्जितः सागरेषु
दीपो जातस्तत्क्षणं दीप्तिहीनः ।
आशा व्याप्ता अन्धकारेण सर्वाः
काले तस्मिन् मोहमूढाश्च लोकाः ॥ ६१ ॥

इति माधवविरचिते श्रीतिलकयशोऽर्णवे मेथान्तकालजविषादनामा सप्तचत्वारिंशस्तरङ्गः ।

# अष्टचत्वारिंशस्तरङ्गः

नैवाप्नोति फलं शीघ्रं परयत्नोद्भवं नरः ।
परस्मिन् कृतविश्वासः क्वचित् सिद्धिमवाप्स्यति ॥ १ ॥

एवं वै चिन्तयन् बालः स्वावलम्बनपूर्वकम् ।
प्रारेभे च महोद्योगं स्वयं देशहितप्रदम् ॥ २ ॥

तिलकः पूजयामास पटवर्धनवंशजम् ।
अण्णानाम्ना सुविख्यातं भीष्मं पुण्यपुरीस्थितम् ॥ ३ ॥

देशकालविदं सुज्ञं देवभक्तिपरायणम् ।
वयोज्ञानतपोज्येष्ठं दक्षिणापथपावनम् ॥ ४ ॥

बालस्यासीदधिष्ठानं लोकसेवाव्रतस्य सः ।
पूर्वापरज्ञानगङ्गासंगमो हृदयंगमः ॥ ५ ॥

नाम्ना विनायको योगी दत्तात्रेयपथानुगः ।
आलियोपाथिमर्मज्ञ आयुर्वेदचिकित्सकः ॥ ६ ॥

भाविकार्यविनिश्चित्यै तिलकस्तमुपागतः ।
कर्तव्या परिषत् शीघ्रमात्मनः सहकारिणाम् ॥ ७ ॥

मुम्बाराज्ये पुणेपुर्यां भवेत् तदधिवेशनम् ।
आहूय सुहृदोऽप्यन्यान् संमान्यानतिथीनिति ॥ ८ ॥

विचारस्य तयोरुक्तः पूर्वश्लोकेषु निर्णयः ।
चक्रुस्तत्स्वागतं सर्वे पयोदस्येव चातकाः ॥ ९ ॥

व्यवस्थायै परिषदो नियुक्तं सभ्यमण्डलम् ।
सभामागन्तुकामानां प्राप्तानां स्वागताय च ॥ १० ॥

आसंश्चतुःशतं सभ्या दक्षाः स्वागतमण्डले ।
अध्यक्षस्य पदं तस्यालंचकार पितामहः ॥ ११ ॥

कुरुक्षेत्रे भीष्म इव पुण्यक्षेत्रे विनायकः ।
शुशुभे स सभामध्ये शशीव ज्योतिषां गणे ॥ १२ ॥

थापटिस्टानामधेयस्तिलकस्य सखा प्रियः ।
अभूत् परिषदोऽध्यक्षः सदस्यानां सुसंमतः ॥ १३ ॥

विनोदप्रचुरं तस्य भाषणारुचिरं हितम् ।
वक्तृत्वं कर्णपीयूषं पीतं श्रोत्रैः सभाजनैः ॥ १४ ॥

नभोग्रहर्तुसंख्याकाः प्रातिनिध्येन संगताः ।
सहस्रसंमिताः प्राप्ताः प्रेक्षकाः परमोत्सुकाः ॥ १५ ॥

युद्धकाले विद्यमाने वचने सावधानता ।
विशेषतो मितत्वं च स्वागताध्यक्षभाषणे ॥ १६ ॥

सर्वेषां स्वागतं कृत्वा प्रेमगद्गदया गिरा ।
तिलकस्योत्कटां देशभक्तिं निष्ठां तथेश्वरे ॥ १७ ॥

शशंस सूक्तिभिर्धीरो गुरुः श्रेष्ठो विनायकः ।
धैर्यमेरुर्हितस्यार्थस्तिलको लोकनायकः ॥ १८ ॥

दूरदृष्टिः स्थिरपदो राजकारणपण्डितः ।
तत्त्ववेत्ता शुद्धशीलो वेदवेदान्तपारगः ॥ १९ ॥

बलवान् निर्भयो वीरः समयज्ञो विवेकवान् ।
रहस्यवित् कर्मयोगी संस्कृत्यादर्शपूरुषः ॥ २० ॥

अन्वयव्यतिरेकाभ्यां धर्मलक्षणचिन्तकः ।
लोकद्वयस्य यो वेत्ता पिण्डब्रह्माण्डयोस्तथा ॥ २१ ॥

एकत्वानुभवाचार्यो ब्रह्मात्मैक्योपदेशकः ।
सर्वे तमनुगच्छन्तु पन्थानं तेन दर्शितम् ॥ २२ ॥

प्रेयसः श्रेयसो हेतुं व्यक्तिराष्ट्रात्मनोरपि ।
अयनं बन्धमोक्षस्य पूर्वाचार्यविवर्णितम् ॥ २३ ॥

प्रयोगे सूत्रधारस्य नान्दीवाक्यं शुभं लघु ।
पितामहवचस्तद्वत् सभायाः स्वस्तिवाचनम् ॥ २४ ॥

ततोऽध्यक्षपदाद्रुच्चैर्वोगटिस्टो महाशयः ।
अभापताङ्ग्लभाषायां मेघगम्भीरया गिरा ॥ २५ ॥

स पश्चिमाब्धितीरे स्म वसति क्षुद्रखेटके ।
खिस्तधर्मिकुटुम्बे वै जातो ग्रस्ते विपत्तिभिः ॥ २६ ॥

कृत्वाध्यायं सुविद्याया लेभे बुद्धिबलेन सः ।
विद्यापीठपरीक्षासु फलं परमशोभनम् ॥ २७ ॥

अधिवक्तुः पदं प्राप मुम्बईन्यायमन्दिरे ।
लोकसेवोद्यमेनैव गौरवं सज्जनेष्वपि ॥ २८ ॥

सदस्यत्वं कृतं तेन पालिकामण्डलस्य च ।
मेथास्पर्धीति लोकास्तं नगरेऽपूजयन् जनाः ॥ २९ ॥

अङ्गीकृतेषु दक्षत्वं कौशलं प्रतिपादने ।
निर्भयत्वं सभामध्ये सस्मितं भाषणं तथा ॥ ३० ॥

गुणानां च गणस्तस्मिंस्तिलकेन निरीक्षितः ।
मित्रत्वपदवीं प्राप क्रमात् परिचयस्तयोः ॥ ३१ ॥

तिलकस्याग्रहेणैव जोसेफः संमतिं ददौ ।
पदं श्रेष्ठमलंकर्तुं सभायाः प्रमुखस्य च ॥ ३२ ॥

उद्दीर्य तिलकस्तोत्रं भाषणादौ मनोहरैः ।
वाक्यैरुद्दीपकैरर्थगम्भीरैः प्रमुखोऽवदत् ॥ ३३ ॥

आयातस्तिलको भूमिं जन्मनो जननीं प्रियाम् ।
षड्वर्षसमयं कृत्वा तपो मण्डालये महत् ॥ ३४ ॥

प्रपेदे कृशतां देहः कायक्लेशातिजर्जरः ।
ओजोवर्चोबलानां तु वृद्धिर्जाता प्रभाविणी ॥ ३५ ॥

कर्तव्यप्रेरणां दातुमुद्यद्भानुरिवोदितः ।
संप्राप्तेभ्यः सभासद्भ्यः परिषन्मण्डपेऽधुना ॥ ३६ ॥

प्रणताः स्म वयं तस्मै देशकार्यार्थसिद्धये ।
लोकमान्यधुरीणाय धियो यो नः प्रचोदयात् ॥ ३७ ॥

प्रादुरासीद् महायुद्धं यूरोपे मदमत्तयोः ।
जर्मनीफ्रान्सयोर्मध्ये तिलके गृहमागते ॥ ३८ ॥

लोकप्रियाय वन्द्याय जननेत्रेऽपराधिने ।
तत्संसर्गोऽनर्थमूलं लोकानामिति हेतुना ॥ ३९ ॥

मातृभूमेर्बहिर्गच्छ इत्यादेशकरी किल ।
आसीत् पुरा ग्रीसदेशेऽद्भुता न्यायस्य वै प्रथा ॥ ४० ॥

शान्तिकाले निष्ठुरेयं रीतिः समुचिता गता ।
आदेशं शान्तिकालस्य विप्लवे समुपस्थिते ॥ ४१ ॥

मत्वा तं नोचितं सर्वे लोका राष्ट्रहितैषिणः ।
आनयन् निजनेतारं स्वदेशं मानपूर्वकम् ॥ ४२ ॥

देशाद् बहिर्यापितानां प्रवेशस्याद्भुताः कथाः ।
पुनः स्वदेशे संमानपूर्वकं श्रुतिमङ्गलाः ॥ ४३ ॥

इतिहासेषु दृश्यन्ते राष्ट्रैक्यप्रेमदर्शिकाः ।
ग्रीकानां रोमनानां च जनताराज्यवादिनाम् ॥ ४४ ॥

मण्डालेप्रेषणादेशो दत्त आङ्ग्लाधिकारिभिः ।
षड्वर्षान्ते पुनर्देशं तिलको नैव यास्यति ॥ ४५ ॥

वार्द्धक्येन तथा देहव्याधिभिः क्षीणतां गतः ।
प्रयाति परलोकं वा मंडालेबन्धनालये ॥ ४६ ॥

भारतस्य तु भाग्येन दैवेन ब्रिटनस्य च ।
आङ्ग्लान् मोचयितुं विप्रात् स्वकेभ्यो मार्गदर्शनम् ॥ ४७ ॥

कर्तुं महात्मा तिलक ईश्वरेण सुरक्षितः ।
सूक्ष्मप्रज्ञो राजनीतौ वेदशास्त्रविशारदः ॥ ४८ ॥

म्रियते काकशापाद् न चतुष्पात् कोऽपि भूतले ।
तस्माद् नाश्चर्यमाङ्ग्लानामभवन् वितथा गिरः ॥ ४९ ॥

हिरण्यकशिपुक्लेशैः प्रह्लादोऽन्तं हि नागमत् ।
आविरासीद् नृसिंहोऽसौ स्तम्भे पादाहतेऽरिणा ॥ ५० ॥

न वै मन्दा विजानन्ति मायामूढधियो जनाः ।
धर्मकार्यप्रवृत्तस्य रक्षकः परमेश्वरः ॥ ५१ ॥

मृत्युमूर्ध्नि पदं दत्त्वा स्वधर्माभिरतो जनः ।
प्रजत्येव स्वमार्गेण धीरः सिद्धिं च गच्छति ॥ ५२ ॥

मनस्तोषः शासितानां शासनस्य बलं महत् ।
सेतुर्दृढः स राष्ट्रस्य तरितुं विपदर्णवम् ॥ ५३ ॥

न देशे विद्यते कोऽपि ज्ञाता भारतचेतसः ।
विद्यावैराग्यसंपन्नः कीर्तिमान् तिलकोपमः ॥ ५४ ॥

युद्धसाहाय्योत्सुकान् कर्तुं भारतीयान् महोद्यमम् ।
निष्फलः स भवत्येव शासनं यं करोति यम् ॥ ५५ ॥

स्नेहं विना यथा दीपः विना वारि यथा तरुः ।
श्रद्धां विना यथा पूजा निष्फलत्वाय कल्पते ॥ ५६ ॥

करोति तिलकः सर्वं भारतोत्कर्षवर्धकम् ।
सेव्यं प्रशासनं भूयाद् भारतोत्कर्षदं यदि ॥ ५७ ॥

पुत्रैरनादृतौ नित्यं मन्येते पितरौ वरम् ।
उपदान्तये स्वदुःखस्य मरणं जीवितादिह ॥ ५८ ॥

आयदर्शी प्रजाप्रीतिः शासनस्य हिताय वै ।
शान्तिस्थलापेक्षया तु कालेऽशान्तेऽतिसंकटे ॥ ५९ ॥

संप्राप्स्यन्ति प्रजातोषं युद्धकालेऽधिकारिणः ।
सश्रद्धं यदि कुर्वन्ति तिलकप्रतिपादितम् ॥ ६० ॥

पारतन्त्र्यविनाशोऽस्ति भारतस्येति निश्चितम् ।
समरान्ते स्वराज्यस्य प्रदानेनेति घोषणा ॥ ६१ ॥

प्रशासनेन कर्तव्या लोकसाह्याभिलाषिणा ।
न संदेहो भवेत् तेषां युद्धेऽसत्साह्यकारिणाम् ॥ ६२ ॥

कुर्वन्तु संहताः सर्वे स्वराज्यप्राप्तयेऽधुना ।
संस्थाप्य भारते संघं यत्नमायरिशा इव ॥ ६३ ॥

नेतृत्वं तिलकस्तस्य कुर्याद् नीतिविदां वरः ।
भवेमाखिलराष्ट्रेऽस्मिंस्तच्छासापालका वयम् ॥ ६४ ॥

ताईप्रकरणे तस्य कृतो यत्नो यशोऽमलम् ।
कलङ्कयितुमल्पाप्यः विप्रुलैश्चाधिकारिभिः ॥ ६५ ॥

निराधाराश्च निर्मूला दोषा आरोपिता इति ।
निर्णयः पुरवैर्दत्त उच्चन्यायासनस्थितैः ॥ ६६ ॥

आपेदे तद्यशःकायोऽधिकां जनविलोभिनीम् ।
शोभां तेनोपरागान्ते सूर्याचन्द्रमसौ यथा ॥ ६७ ॥

दृढं संगठनं कृत्वा स्वातन्त्र्यप्राप्तये जनाः ।
यत्नं कुर्वन्तु शान्तेन शास्त्रोक्तेन च वर्त्मना ॥ ६८ ॥

श्रोतारश्चातिमंतुष्टा भाषणेन सभागताः ।
संप्राप्ता प्रेरणा तस्मात् तिलकस्यानुयायिभिः ॥ ६९ ॥

सभासंमतिसंप्राप्त्यै दीर्घा प्रस्तावमालिका ।
पुरस्कृता सुविख्यातैर्जनैरभिष्टानुमोदिता ॥ ७० ॥

स्वीकृता सा सभासद्भिः सामोदं तालिवादनैः ।
स्वाद्वन्नं पैष्टिकं प्राप्तं विचाराय च धीमताम् ॥ ७१ ॥

प्रदर्शितं मतं मान्यैर्बहुभिस्तत्सभात्यये ।
तिलकस्याशिषः प्राप्य सेवायै कृतनिश्चयाः ॥ ७२ ॥

उत्तमाङ्गैः पदं स्पृष्ट्वा चक्रुः सर्वेऽभिवादनम् ।
विचारपुष्टिमापन्ना ययुस्ते स्वगृहांस्ततः ॥ ७३ ॥

संजातः परिषत्सु तैलकमहाराष्ट्रस्य भूमेस्तदा
संसर्गः सुहृदां समानमनसां कर्णाटसौराष्ट्रयोः ।
मुख्यायाश्च विदर्भसंज्ञकभुवः सिन्धुप्रदेशस्य च
प्रोत्कर्षाय समस्तभारतभुवः स्वातन्त्र्यसंप्राप्तये ॥ ७४ ॥

इति माधवविरचिते श्रीतिलकयशोऽर्णवे पुण्यपत्तनपरिषत्समरः अष्टचत्वारिंशस्तरङ्गः ।

# एकोनपञ्चाशत्तमस्तरङ्गः

यज्ज्ञानाम्बुकणं पीत्वा मुनयोऽमृतमाप्नुवन् ।
सा गीता भगवद्वक्त्राद् निःसृताज्ञाननाशिनी ॥ १ ॥

यदा यदा हि धर्मस्य ग्लानिर्भवति भारते ।
कर्तुं तत्पुनरुत्थानं गीताशास्त्रं प्रवर्तते ॥ २ ॥

भिन्नानुपानयोगेन विविधामयनाशिनी ।
वैद्यस्य बुद्धिकौशल्याद् भवत्येका महौषधिः ॥ ३ ॥

श्रीकृष्णार्जुनसंवादे निष्पन्नं भेषजं महत् ।
अज्ञानजन्यरोगाणां प्राणिभ्योऽसुखकारिणाम् ॥ ४ ॥

मनोमालिन्यपुष्टानां नाशायेति च निश्चितम् ।
वदन्ति ज्ञानिनः सर्वे मानवोद्धारचिन्तकाः ॥ ५ ॥

वेदानां विपिने दिव्ये संचरन्ति चतुष्पदाम् ।
रूपेण विविधा विद्या लोकाभ्युदयकारकाः ॥ ६ ॥

तत्रैवोपनिषन्नावश्चतुरर्थपयोधराः ।
विद्याध्यायानुरक्तानां दयास्ताश्च तपस्विनाम् ॥ ७ ॥

दुग्ध्वा ता भगवान् कृष्णो गोकुलानन्दवर्धनः ।
गीतापात्रे च निदधे चिरं तासां पयोऽमृतम् ॥ ८ ॥

अर्जुनः प्रथमो भोक्ता पयसोऽस्य रणाङ्गणे ।
निहताः शत्रवस्तेन जयिनो बन्धवः कृताः ॥ ९ ॥

अवैदिकमतग्रस्तं पाखण्डाच् श्रुतिपारगः ।
ररक्ष शंकराचार्यो गीताज्ञानेन भारतम् ॥ १० ॥

पिण्डब्रह्माण्डयोरैक्यं जीवात्मपरमात्मनोः ।
दर्शयामास सर्वत्र ब्रह्मणोऽन्यद् न विद्यते ॥ ११ ॥

ईशावास्यमिदं सर्वं स्थावरं चाथ जङ्गमम् ।
जन्मस्थितिलयास्तस्य यतो ब्रह्म तदुच्यते ॥ १२ ॥

ब्रह्मण्येव विकारास्ते निराकारे च निर्गुणे ।
लीलयैव समुद्भूतास्तरङ्गा उदकेष्विव ॥ १३ ॥

स्वेच्छयाविष्कृतं नामरूपाभ्यां च स्वलंकृतम् ।
सृष्टिरस्थिरं वस्तु नरो वेषधरो यथा ॥ १४ ॥

भाति सत्यं नाटकान्तं रङ्गपीठविचेष्टितम् ।
प्रयोगान्ते समाप्नोति प्रकृतिं स्वां नटः पुनः ॥ १५ ॥

विस्मृतिर्न स्वभावस्य रङ्गपीठ उपस्थिते ।
भूमिकोचितवेषेण नटे मग्ने स्वकर्मणि ॥ १६ ॥

अस्त्येव निश्चलं ब्रह्म ब्रह्माण्डेऽस्मिन् प्रधावति ।
स्थिरश्चक्रे यथा चाक्षः शश्वद् भ्रमणशालिनि ॥ १७ ॥

अकर्तैव तु कर्तेति जनस्याज्ञस्य भासते ।
अकर्तेति तथा ज्ञानं क्रियाशीलस्य देहिनः ॥ १८ ॥

प्राणी यदि समाप्नोति सार्थकं तस्य जीवितम् ।
वर्ततेऽनु तदा जीवः शिवं विश्वस्य मङ्गलम् ॥ १९ ॥

देवत्वस्य कथं प्राप्तिर्देहिनः कर्मिणो भवेत् ।
गीतायां नन्दपुत्रेण तस्य पन्थाः प्रदर्शितः ॥ २० ॥

विवर्णितं रहस्यं तत् तत्पथप्रतिपत्तये ।
गीतार्थं ज्ञातुमिच्छद्भ्यस्तिलकेन सयुक्तिकम् ॥ २१ ॥

मंडालेबन्धनागारे गीतार्थप्रतिपादकम् ।
तिलको निर्ममे ग्रन्थमिति प्रोक्तं मया पुरा ॥ २२ ॥

द्विरुक्तिर्नोचिता तस्य चर्वितस्यैव चर्वणम् ।
जिज्ञासुभिस्तु कर्तव्यं पूर्वग्रन्थावलोकनम् ॥ २३ ॥

जातं प्रकाशनं तस्य पुण्यपुर्यां यथाविधि ।
अब्देऽस्मिन् गोकपाटाख्ये प्रासादे तिलकालये ॥ २४ ॥

जन्मप्राप्ती रहस्यस्य मंडालेबन्धनालये ।
प्रयासेन समानीतं भारते तिलकेन तत् ॥ २५ ॥

जातः कृष्णो यथा नीतो वसुदेवेन गोकुलम् ।
कंसस्योपद्रवात् सम्यग् रक्षणायात्मनः शिशोः ॥ २६ ॥

प्रकाशनसमारोहस्तथा ग्रन्थोपकारकः ।
द्विजत्वस्याधिकाराय व्रतबन्धः शिशोर्यथा ॥ २७ ॥

न संभवति संपर्को विश्वविद्वद्भिः सह ।
ग्रन्थस्य तद्विधेः पूर्वं निष्णातैर्मूल्यमापने ॥ २८ ॥

विद्यमानमहाराष्ट्र्यां रहस्यं तिलकोऽलिखत् ।
शास्त्रं तत् कर्मयोगस्य विश्वकौतूहलास्पदम् ॥ २९ ॥

भारते विद्यमानासु भाषासु प्रमुखासु च ।
तत्कालानन्तरं शीघ्रं विद्वद्भिरनुवादितम् ॥ ३० ॥

यथा गन्धः पुष्पितस्य मन्दारस्य समन्ततः ।
वात्युद्यानस्थितस्यापि दूरं च घ्राणमोददः ॥ ३१ ॥

पाश्चात्यैश्च पौरस्त्यैस्तत्त्ववित्तार्किकैस्तथा ।
कर्मयोगपरं भाष्यं मुक्तकण्ठं प्रशंसितम् ॥ ३२ ॥

ज्ञानादेव तु कैवल्यं कर्मसंन्यासपूर्वकात् ।
मतमेतत् पूज्यपादैर्गीताभाष्ये प्रदर्शितम् ॥ ३३ ॥

श्रुतियुक्तिप्रमाणाभ्यां खण्डितं तिलकेन तत् ।
कर्मशास्त्रप्रवक्तुस्ते चक्रुः सर्वेऽभिनन्दनम् ॥ ३४ ॥

विदुषां सूक्तिरत्नानां खण्डत्रयनिवासिनाम् ।
करण्डको दर्शनीयः केसरीपुस्तकालये ॥ ३५ ॥

तस्माद्गणं च विस्तीर्णं संप्लुतं प्रलये सति ।
ग्रन्थानां च कपाटानामधःस्थं फलकद्वयम् ॥ ३६ ॥

सहामुद्रितलेखैर्वै मज्जितं प्रलयोदके ।
तृतीये फलके तस्य तिलकाक्षरपुस्तकम् ॥ ३७ ॥

गीतायास्तु रहस्यस्य स्थितं वेष्टनगुण्ठितम् ।
एकाङ्गुलादधस्तस्य रेखा वारां स्थिता स्थिरा ॥ ३८ ॥

स्पृष्ट्वा पीठासनं मूर्ध्ना वारीणि व्यरमन् शनैः ।
तथा कृष्णपदाङ्गुष्ठं कालिन्दी द्वापरे यथा ॥ ३९ ॥

गङ्गोत्रीव पवित्रं तत् स्थानं यत्र व्यराजत ।
तिलकेन स्वहस्तेन लिखितं मूलपुस्तकम् ॥ ४० ॥

आशया ग्रन्थदेवस्य ब्रह्माण्डकरुणानिधेः ।
नारायणावतारस्य प्रलयोपशमोऽभवत् ॥ ४१ ॥

त्रिभुवनभयभाञ्जि कृष्णगीतारहस्यं
मलिनमतिजनानां शोधनं कल्मषस्य ।
अविरतसुखधामप्राप्तये साधनं यद्
विलसतु जनचित्ते तैलकं कर्मशास्त्रम् ॥ ४२ ॥

इति माधवविरचिते श्रीतिलकयशोऽर्णवे गीतारहस्यप्रकाशननामा
एकोनपञ्चाशत्तमस्तरङ्गः ।

# पञ्चाशत्तमस्तरङ्गः

जगतोऽपि जडाद् भूयाद् यशसेऽप्यनुकूलता ।
सत्कार्ये च प्रवृत्तस्य वीरस्य स्वावलम्बिनः ॥ १ ॥

आरुरुक्षुं रविं स्पर्द्धा स्वयत्नादुदयाचलम् ।
मार्गं दर्शयते तस्मा अरुणो वै सुखावहम् ॥ २ ॥

विहाय द्रुमनीडानि ह्युत्पतन्ति पतत्रिणः ।
गायन्ति भास्करस्तोत्रं ननु मन्त्रैः स्वनैर्निजैः ॥ ३ ॥

नभोऽनिलो निर्गताभ्रं कुर्वन् वहति शीतलः ।
तमसो विश्वमुद्धर्तुः परिहर्तुं परिश्रमम् ॥ ४ ॥

स्वयद्गससरोजानि सेवितानि षडङ्घ्रिभिः ।
धारयन्ति सुगन्धीनि सूर्यार्घ्यै जलाशयाः ॥ ५ ॥

अर्पयन्ति प्रसूनानि प्रभातानिलकम्पिताः ।
सूर्याय चोद्यते भक्त्या लता वृक्षाश्रिता गिरौ ॥ ६ ॥

भास्करो वर्धितोत्साहो निसर्गकृतपूजया ।
सृष्टिं सर्वां तमोग्रस्तां प्रबोधयति तेजसा ॥ ७ ॥

त्यक्त्वालस्यं समुत्थाय निजं कर्म समाचर ।
स्पर्द्धार्कः कथयत्येवं सृष्टिं स्थावरजङ्गमाम् ॥ ८ ॥

नत्वात्मानं तस्थुषश्च जगतः सूर्यमारभे ।
यशोऽर्णवस्य पञ्चाशं तरङ्गं पथदर्शकम् ॥ ९ ॥

मोचनाय स्वदेशस्य पराराष्ट्रावलम्बनात् ।
व्यवहारेऽङ्कितत्वाच्च ब्रिटनस्याधिशासनात् ॥ १० ॥

महासभामहाद्वारं तिलकस्यानुयायिनाम् ।
प्रवेशप्रतिषेधार्थमासीत् सुदृढमावृतम् ॥ ११ ॥

तदुद्‌घाटनयत्नस्य मद्रासस्याधिवेशने ।
कृतस्यापयशोगाथा पूर्वग्रन्थे निवेदिता ॥ १२ ॥

मुम्बापुर्यामभूद् राष्ट्रसभाया अधिवेशनम् ।
दिसेंबरान्त्यसप्ताहे मेथामृत्योरनन्तरम् ॥ १३ ॥

लॉर्डसिंहस्तदध्यक्षो नृपानुग्रहमण्डितः ।
पण्डितो वङ्गदेशीयो नेमस्तदलसंमतः ॥ १४ ॥

मेथाभावेन सर्वत्र निरुत्साहपरा स्थितिः ।
सभास्थानोपविष्टेषु ज्येष्ठप्रतिनिधिष्वपि ॥ १५ ॥

तीव्रनेमस्तयोर्भेदं निराकर्तुं समुत्सुकाः ।
न लेभिरे यशः किंचिदैक्यप्रस्थापनोद्यमे ॥ १६ ॥

यन्मार्गेण गतो मेथा गोखले वा विवेकवान् ।
गन्तव्यं तेन मार्गेण नेमस्तपथगामिभिः ॥ १७ ॥

तिलकस्य प्रवेशेन सानुगस्योद्भविष्यति ।
विघ्नो यः सुमहांस्तस्य दुष्करं स्याद् निवारणम् ॥ १८ ॥

भीतिग्रस्ताः समस्तास्ते नेमस्ताः प्रायशस्तदा ।
मेनिरेऽनर्थदां स्वेषां तिलकेन सह स्थितिम् ॥ १९ ॥

तथापि सहसा काचिद् घटनाभीप्सिताभवत् ।
क्षणं विद्युद् यथोदेति कृष्णाकाशेऽभ्रसंवृते ॥ २० ॥

समितिर्या नियुक्तासीद् मद्रासस्याधिवेशने ।
तिलकस्य सपक्षस्य युक्ततायाः समीक्षणम् ॥ २१ ॥

महासभाप्रवेशस्य कृत्वा मतनिवेदनम् ।
राष्ट्रमुख्याय सा सर्वं मुम्बापुर्यां करोत्विति ॥ २२ ॥

तत्समित्याः सभासद्भिर्मुम्बापुर्यां प्रकाशितः ।
समर्थकः प्रवेशस्य मतैक्येन स्वनिर्णयः ॥ २३ ॥

सभासन्नियमग्रन्थिः समित्या शिथिलीकृता ।
स्वीचक्रुः सूचनां सर्वे सभ्यास्तदधिवेशने ॥ २४ ॥

भारते वृत्तपत्राणि प्रमुखाण्यभिनन्दनम् ।
चालकानां तत्सभायाश्चक्रिरे दीर्घदर्शिनाम् ॥ २५ ॥

कालोचितो निर्णयोऽयं सर्वेषां संमतोऽभवत् ।
प्रदीपो भारते शीघ्रं पक्षैश्चास्य विनिर्मितैः ॥ २६ ॥

द्वितीयं दर्शये चिह्नं शुभशंसि भविष्यतः ।
कालस्यासद्भारतस्य विमुक्तेर्दास्यमोचनात् ॥ २७ ॥

आशीर्विशिष्टया देव्या ब्रह्मविद्याप्रवीणया ।
थिओसफीप्रमुखया मान्यया विश्ववन्द्यया ॥ २८ ॥

कृतो यत्नस्त्यागपूर्णं भारतोद्धारहेतुना ।
ख्यातः क्षेत्रे धार्मिके च मुख्यानां राजनैतिके ॥ २९ ॥

पृथ्वीं प्रदक्षिणीकृत्य वेदान्तप्रतिपत्तये ।
अनेकत्र स्थापितानि विद्याकेन्द्राणि भूतले ॥ ३० ॥

आङ्ग्लविद्याप्रभावेण भारतीया विमोहिताः ।
जाता अश्रद्दधानास्ते धर्मग्रन्थोक्तकर्मसु ॥ ३१ ॥

श्रुतिस्मृतिपुराणेषु धर्मः प्रोक्तः सनातनः ।
बुद्धिगम्यो न मुख्यानां तर्केणापि विमर्शतः ॥ ३२ ॥

बुद्धिरेवं समाजस्य शिक्षितेषु प्रतिष्ठिता ।
मेनिरे कर्मकाण्डं ते सत्यज्ञानविडम्बनम् ॥ ३३ ॥

विनिन्दितः श्रुतेः पन्थाः परधर्मोपदेशकैः ।
खिस्तधर्मप्रसारार्थमाङ्ग्लकाले निरन्तरम् ॥ ३६ ॥

धर्मग्लानिं समुत्पन्नां निराकर्तुं समुद्यमाः ।
जाता ये भारते तेषु ब्लाव्हट्स्किबिझांटयोः ॥ ३७ ॥

यत्नः शिक्षितलोकेषु बभूव सुफलप्रदः ।
लङ्काद्वीपे यशः प्राप यत्नोऽरकाटस्य तादृशः ॥ ३८ ॥

धर्मकार्येषु मग्नापि बिझाण्टाचिन्तयद् भृशम् ।
अज्ञानस्य च दैन्यस्य कथं नाशो भविष्यति ॥ ३९ ॥

न स्वराज्यं विना नाशो भारतेऽस्मिन् द्वयोर्भवेत् ।
शीघ्रं यत्नस्तु कर्तव्य इंग्लंदे चात्र नेतृभिः ॥ ४० ॥

पुणेपरिषदः पश्चात् पूर्वं राष्ट्रमहोत्सवात् ।
तदब्दे नवमे मासे बिझांटास्थापयद् नवम् ॥ ४१ ॥

संघं स्वराज्यसिद्ध्यर्थमड्यारे मद्रपट्टने ।
लीगोत्तरं होमरूलमिति तन्नाम घोषितम् ॥ ४२ ॥

न्यूइंडियाभिधे पत्रे दैनिके स्वे जुघोष सा ।
भारतस्य स्वराज्याप्तिरुद्देशः संघनिर्मितेः ॥ ४३ ॥

राष्ट्रीयसंसद्ध्येयस्याविरोधेन समुद्यमम् ।
चालकाः कर्तुमिच्छन्ति भारते ब्रिटने तथा ॥ ४४ ॥

आनुकूल्यं समावाप्तुं नेतॄणां हिन्दवासिनाम् ।
स्वराज्यसंघकार्यार्थं पर्यटद् भारतेऽखिले ॥ ४५ ॥

विद्युद्वेगेन सागच्छत् पूर्वाब्धेः पश्चिमोदधिम् ।
कलकत्तापुरात् साध्वी मुम्बईं सा समागता ॥ ४६ ॥

रवीन्द्रादिसुविख्यातकवीनां प्रतिभावताम् ।
जिनाहार्निमनादीनामानुकूल्यमवाप च ॥ ४७ ॥

विजयिन्या विशालायाः सा यात्रा राजनैतिकी ।
केसरीपत्रलेखेषु तिलकेन समाजिता ॥ ४८ ॥

पश्चिमोत्तरपूर्वेषु दक्षिणे चापि भारते ।
दिगन्तरप्रदेशेषु शाखाः संस्थापितास्तया ॥ ४९ ॥

चातुर्वर्ण्याभिमानिभ्यः श्रेणयोऽप्यन्यधर्मिणाम् ।
पयोनिधौ यथा नद्यस्तथा संघे समाविशन् ॥ ५० ॥

अभिनन्द्य च तं संघं तिलकस्यानुयायिनः ।
अभवन्नविलम्बेन स्वसंघस्थापनोत्सुकाः ॥ ५१ ॥

आगामिनि तरङ्गेऽहं ग्रन्थस्यास्य कथां शुभाम् ।
तदर्थं कृतयत्नस्य वर्णयेऽतिमनोहराम् ॥ ५२ ॥

न सेहे निजशीलस्य दूषणं तिलकः खलु ।
उद्यतायुध एवासीत् सदा दण्डयितुं खलान् ॥ ५३ ॥

निन्दितुं चरितं ये तु ब्रिटिशेषु प्रचेतिरे ।
अकरोत् तिलकस्तेषां प्रत्याघातं समर्पकम् ॥ ५४ ॥

ग्लोबादिवृत्तपत्राणां संपादकमहाशयाः ।
आगम्य शरणं दीना धारयित्वा मुखे तृणम् ॥ ५५ ॥

क्षमस्व तिलकास्मान् मोहत्वाद्न्यायमन्दिरे ।
तवापकृतमस्माभिः सर्वं तत् क्षन्तुमर्हसि ॥ ५६ ॥

पूर्वमेव कथा प्रोक्ता ग्लोबाद्यायोगमूलिका ।
तां वै जिज्ञासवः कुर्युः पूर्वग्रन्थावलोकनम् ॥ ५७ ॥

कारागारे ब्रह्मदेशे न्यवसत् तिलको यदा ।
चिरोलाख्यः सुप्रसिद्धः पत्रवार्ताहरस्तदा ॥ ५८ ॥

ईक्षितुं सूक्ष्मरूपेण संप्राप्तः स परिस्थितिम् ।
प्रेषितो लंदनस्थेन टाइम्सपत्रेण भारतम् ॥ ५९ ॥

भारते दीर्घकालं स यशश्चाभ्यस्तवान् स्वयम् ।
सामाजिकीं राजकीयां धार्मिकीं च परिस्थितिम् ॥ ६० ॥

नेमस्तानां च तीव्राणां क्रान्तिमार्गानुगामिनाम् ।
परिज्ञातुं प्रभावं च यत्नशीलोऽभवत् सदा ॥ ६१ ॥

ददुस्तत्कार्यसिद्ध्यर्थं शासनस्याधिकारिणः ।
साहाय्यं सार्वभौमस्य संमत्यैवेति विश्रुतम् ॥ ६२ ॥

तेन प्रकाशितो ग्रन्थः स्वाभिप्रायसमन्वितः ।
लंदने भारते चैव लोकानामुपलब्धये ॥ ६३ ॥

लिखितं पुस्तके तेन तिलकद्वेषिणा बहु ।
तत्प्रतिष्ठाविनाशार्थमवाच्यं वितथं तथा ॥ ६४ ॥

स्वहस्तधृतदण्डेन शार्दूलं पञ्जरस्थितम् ।
प्रहर्तुं वै प्रवर्तन्ते भीरवोऽपि नराधमाः ॥ ६५ ॥

चिरोलस्य कृतिस्तद्वद्यथा च विगर्हिता ।
प्रहर्तुस्तिलकं बद्धं धर्मयुद्धविदां मते ॥ ६६ ॥

कारागृहनिवासान्ते संप्राप्तेन गृहं पुनः ।
विश्रान्तिसमयान्ते च तिलकेनावलोकितः ॥ ६७ ॥

सत्यापलापसंपूर्णो निजोक्तीनां मतस्य च ।
चिरोललिखितो ग्रन्थो विपर्यासकरः खलु ॥ ६८ ॥

अनुमत्याधिवक्तॄणां मित्राणां तिलको ददौ ।
व्हॅलेंटीनचिरोलाय सशास्त्रं पूर्वसूचनाम् ॥ ६९ ॥

यशो मे मलिनीकर्तुं लिखितानि कुबुद्धिना ।
विद्यन्ते बहुवाक्यानि पुस्तके मुद्रिते त्वया ॥ ७० ॥

भारते चान्यदेशेषु तथैंग्लंदे विशेषतः ।
अस्मन्निन्दाप्रचारार्थं प्रयत्नोऽयं त्वया कृतः ॥ ७१ ॥

कृतानि मद्विधानानि वितथानि ब्रवीषि चेत् ।
सूचनादर्शिते काले याचसे चेत् क्षमामपि ॥ ७२ ॥

वाक्यैरसंशयार्थैश्च मह्यं सरलबुद्धिना ।
कृतान्यायक्षालनार्थं प्रायश्चित्तं करोषि चेत् ॥ ७३ ॥

सत्कार्यार्थप्रदानेन संतोषेण यथाबलम् ।
अन्वेषणाय सत्यस्य दण्डनाय प्रमादिनः ॥ ७४ ॥

विस्मृत्यैव गतं सर्वमवाप्य तव सौहृदम् ।
न्यायालयपथं त्यक्त्वा कुर्वे कर्म स्वभावजम् ॥ ७५ ॥

मुम्बापुर्यां प्रसिद्धस्य वृत्तपत्रशिरोमणेः ।
टाइम्साख्यस्य पत्रस्य लेखकप्रमुखाय च ॥ ७६ ॥

तिलकः प्रेषयामास पूर्वोक्तां पूर्वसूचनाम् ।
उद्धृत्योक्तीस्तथा सर्वा आत्मनोऽपायकारकाः ॥ ७७ ॥

यतस्तेन स्वपत्राङ्के चिरोलस्य च पुस्तकात् ।
आक्षेपार्हा असत्याश्च समुद्धृत्य प्रकाशिताः ॥ ७८ ॥

शोकान्तिका नाटिकेयं न्यायकर्मविडम्बिनी ।
तत्कथाया दुःखदाया नान्दी ह्येषा प्रदर्शिता ॥ ७९ ॥

यथाकालं वर्णयेऽहं तत्संपूर्णकथानकम् ।
तापदं शुद्धचित्तानां कालद्रव्यापहारकम् ॥ ८० ॥

सत्यासत्यविनिर्णयाय समितिर्मन्वादिभिर्निर्मिता
मूलं सैव मनुष्यसंस्कृतिगतेरुद्वाहने चोत्तमम् ।
तस्यामेव पदस्थिता यदि भवेद् निष्ठा मनोः संतते-
र्ब्रह्माण्डस्य समश्नुते मनुजतानन्दस्य काष्ठां पराम् ॥ ८१ ॥

विश्वासस्तिलकस्य सत्यपुरुषे न्यायाभिधे निश्चलः
संजातेऽपि विधौ विरुद्धगतिके देहान्तकालावधिः ।
दीर्घं याप्यतिदीर्घकल्पमपि वा शुद्धस्वरूपेण हि
न्यायः संस्कृतिभारकोऽवतरति स्वस्यैव वै निष्ठया ॥ ८२ ॥

इति माधवविरचिते श्रीतिलकयशोऽर्णवे विरोधप्रकरणोपक्रमनामा पञ्चाशत्तमस्तरङ्गः ।

# एकपञ्चाशत्तमस्तरङ्गः

अभावाद् राष्ट्रभक्तानां तिलकस्यानुयायिनाम् ।
हिन्दराष्ट्रसभा जाता दुर्बला च हतप्रभा ॥ १ ॥

तीव्रनेमस्तयोः सद्यः सन्धीकरणमुत्तमम् ।
भारते सुजना आहुश्चिन्तामप्यत्यपादयः ॥ २ ॥

शिष्टैः परिषदं यातैः पुण्यपुर्यां नियोजिता ।
तत्प्रश्नस्य विचाराय दण्डनीतिविदां त्रयी ॥ ३ ॥

बापटिस्टो बेळवी च तिलकस्य समादरः ।
दातुं परिषदादिष्टा दीर्घं स्वेषां मनोगतम् ॥ ४ ॥

कालेऽल्पे लिखितं वृत्तमेकमन्येन तैस्त्रिभिः ।
यद् यत्संदर्शि लोकानां सन्धियत्नसमर्थकम् ॥ ५ ॥

अस्वस्था अभवन् केचिन् तिलकस्यानुयायिनः ।
अपमानास्पदं मत्वा प्रवेदं तत्समर्थिनम् ॥ ६ ॥

अष्टादशी तदा प्रान्तपरिषत् नैशिनिश्चितम् ।
कर्तव्येऽस्येप्रिले मासि बिल्वग्रामस्थले शुभे ॥ ७ ॥

अध्यक्षस्य पदं तत्र गणेशाय समर्पितम् ।
यस्य नृत्यति सोत्साहं वाचि नित्यं सरस्वती ॥ ८ ॥

तन्मासादिमसप्ताहे जाता लोकोत्तरा सभा ।
पुणेनिवासिनां कर्तुं हार्डिंजगुणाभिनन्दनम् ॥ ९ ॥

आयात आङ्ग्लपुत्रोऽयं लोकाराधनतत्परः ।
रिपनानन्तरं दैवाद् दीर्घकालेन भारते ॥ १० ॥

संस्तुतो तिलकेनैवं हार्डिंजो भाषणे निजे ।
तत्सभायां कृते तेन मुक्तकण्ठं हि धीमता ॥ ११ ॥

आङ्ग्लद्रोहप्रधानेषु तथा देशाभिमानिषु ।
असंतोषो महान् जातस्तिलकस्य तदुक्तिभिः ॥ १२ ॥

शिवरामः काळकर्ता मुंजे नागपुरे तथा ।
कोल्हट्करोऽच्युतो योद्धा संदेशायुधहस्तकः ॥ १३ ॥

कर्णाटके सुप्रसिद्धो देशपांडेकुलोद्भवः ।
गङ्गाधरो दक्षिणाशालोकपाल इव स्थितः ॥ १४ ॥

भोपट्करान्वयो देशभक्तस्तिलकपक्षगः ।
वासुदेवश्चित्रशालाचालकस्तिलकप्रियः ॥ १५ ॥

एते सर्वेऽप्यनिच्छन्तो गन्तुं तिलकवर्त्मना ।
आयाताः सादरं ते तु तिलकस्याश्रयोत्सवम् ॥ १६ ॥

साध्यक्षा लोकमान्यस्य स्वागताय समागताः ।
सहस्राधिकसंख्याका ग्रामस्था स्थानकं प्रति ॥ १७ ॥

अभ्यागता अतिथयो महाराष्ट्रविदर्भयोः ।
पूजिता पुष्पमालाभिः सादरं चाभिवन्दिताः ॥ १८ ॥

अलंकृतेषु मार्गेषु पताकातोरणादिभिः ।
हरिद्वर्णाम्रपत्रैश्च कदलीस्तम्भयुग्मकैः ॥ १९ ॥

वाहिते वाजियुग्मेन रथ एकासनस्थितौ ।
तिलकश्च गणेशश्च नरनारायणोपमौ ॥ २० ॥

कुमाराविव शोभेते स्वर्गस्थौ पौष्करस्रजौ ।
भिषजौ देवलोकस्य संप्राप्ताविव भूतले ॥ २१ ॥

अनुग्रहाय लोकानां धर्ममार्गानुगामिनाम् ।
मनोवाक्कायपापानां दण्डनायापराधिनाम् ॥ २२ ॥

निबद्धाञ्जलिभिर्वृद्धैर्बालकैर्नतमस्तकैः ।
नीराजनकरं स्त्रीभिः पूजितौ राजवर्त्मसु ॥ २३ ॥

राजमार्गे रथे तस्मिँल् लाजावृष्टिं स्थले स्थले ।
अपातयन् पौरबाला उच्चसौधेषु सुस्थिताः ॥ २४ ॥

स्वराज्यं मे जन्मसिद्धं भारतस्येति घोषणा ।
मन्त्रद्रष्ट्रा कृता येन नमस्तन्मन्त्रमूर्तये ॥ २५ ॥

मन्त्रद्रष्टा स्वराज्यस्य ज्ञानाञ्जनशलाकया ।
करोत्युन्मीलितं चक्षुरन्तःस्थं देशवासिनाम् ॥ २६ ॥

चिरं जीव चिरं जीव तिलक प्रियनायक ।
निनादितं नभः सर्वं जयघोषैर्जनैस्तदा ॥ २७ ॥

अलंकृता पुरी सर्वा जयघोषनिनादिता ।
कर्णाटकमहाराष्ट्रभावनैक्यपरिप्लुता ॥ २८ ॥

तयोस्तत्परमोत्साहे भारतोद्धारदर्शनम् ।
जातं तेनातिसंतुष्टाववतीर्णौ रथात् तदा ॥ २९ ॥

सानन्दाश्रुजलापूर्णनेत्रावास्तां प्रजागुरू ।
देशसेवामृतक्लिष्टौ खापर्डेतिलकावुभौ ॥ ३० ॥

गृहे विविशतुः श्रेष्ठौ गृहपत्यभिवन्दितौ ।
संपन्ने वस्तुभिः सर्वैः सुखवासोपयोगिभिः ॥ ३१ ॥

गृहे तस्मिन् सुखासीनौ पूजार्हौ जननायकौ ।
जातातिथ्यौ कृतस्नानपानस्वादिष्टभोजनौ ॥ ३२ ॥

इतरातिथिवासार्थं सुस्थानानीतराणि च ।
प्रापितानि सभासद्भिर्विल्वग्रामनिवासिभिः ॥ ३३ ॥

स्वराज्यप्राप्तियत्नेऽस्मिन्नावश्या संघनिर्मितिः ।
दिसेंबरे निर्णयोऽभूच् शिष्टानां बालपक्षिणाम् ॥ ३४ ॥

आत्मानुयायिवर्गस्य संमतिप्राप्तये कृतम् ।
तिलकेनात्मशिष्याणां विल्वग्रामेऽधिमेलनम् ॥ ३५ ॥

दिनाङ्क एप्रिले मासि चाष्टाविंशे यथाविधि ।
विल्वग्रामे समायान्तु कर्तुं संघविनिर्मितिम् ॥ ३६ ॥

आगताः श्रेष्ठकार्याय तिलकस्य समाज्ञया ।
कर्णाटकमहाराष्ट्रविदर्भस्थानुयायिनः ॥ ३७ ॥

अभवत् संमतस्तेषां द्विसंघरचविनिर्णयः ।
नेतृभिः स्थापितः संघ ऐकमत्येन तैस्तदा ॥ ३८ ॥

याति यत्नः सफलतां प्रारब्धश्चेत् सुपर्वणि ।
ऐकमत्येन शिष्टानां संमत्या चानुयायिनाम् ॥ ३९ ॥

अध्यक्षो बापटिस्टोऽभूद् नृसिंहः कार्यवाहकः ।
सहायकोऽनुमत्यैव गोखले तस्य योजितः ॥ ४० ॥

पञ्च सभ्या उपाध्यक्षाः खापर्डेतिलकावुभौ ।
गङ्गाधरः कन्नडेभ्यो विदर्भेभ्यश्च युग्मकम् ॥ ४१ ॥

मुंजेऽणेयुग्मकं तत्र पूर्वापरविदर्भयोः ।
अनुक्रमादुपाध्यक्षपदे संघस्य स्थापितम् ॥ ४२ ॥

संघस्य तिलकस्यास्य पश्चाज्जन्मावनीतले ।
मद्रासस्थस्य संघस्य स्थापितस्य विशांटया ॥ ४३ ॥

उप्तं बीजं च तत् पूर्वं विलम्बेनोद्गतं भुवः ।
वयोमाने न गण्योऽस्ति गर्भवासावधिर्जनैः ॥ ४४ ॥

आसीत् स्पर्धा तयोर्मध्ये समध्येयानुगावुभौ ।
कार्यसौकर्यसिद्ध्यर्थं द्विधासीदेककल्पना ॥ ४५ ॥

आसीद् न्यू इंडिया पत्रं पूर्वस्य मुखपत्रकम् ।
केसरी च मराठा च पुणेसंघस्य पत्रके ॥ ४६ ॥

प्रजागरार्थं विख्याते पुरग्रामनिवासिनाम् ।
साधने तिलकस्यास्तामिति ज्ञातं च भारते ॥ ४७ ॥

अन्यस्मिन् ग्रन्थभागेऽहं प्रवक्ष्ये शोभनां कथाम् ।
स्वराज्यसंघमन्त्रस्य सुप्रसारप्रचारयोः ॥ ४८ ॥

आकर्ष्टुं चित्तमिच्छामि पाठकानामतःपरम् ।
मण्डपस्थलवार्तायां मोहिन्यां श्रोतृकर्णयोः ॥ ४९ ॥

सभासदः प्रेक्षकाश्च परिषत्स्थानमागताः ।
तिलकाध्यक्षयोः सर्वे दर्शनस्यागतोत्सुकाः ॥ ५० ॥

उपागतं सभाद्वारं तिलकेन पुरस्कृतम् ।
देशपांडेबेळवीभ्यां साञ्जलिभ्यां नमस्कृतम् ॥ ५१ ॥

समर्पितप्रसूनं तत् खापर्डेवंशभूषणम् ।
दृष्ट्वोत्थाय स्वासनेभ्यो जनास्तत्र समागताः ॥ ५२ ॥

आनर्षुर्जयशब्दैश्च तालिकावादनोत्थितैः ।
सभाध्यक्षं पूरयित्वा ध्वनिभिर्व्योममण्डलम् ॥ ५३ ॥

विलोक्योच्चासनस्थं तं गणेशाख्यं सभापतिम् ।
लोका वै मेनिरे साक्षादत्र प्राप्तो गणाधिपः ॥ ५४ ॥

स्वर्गादिह सभास्थानं सर्वविघ्नोपशान्तये ।
स्वराज्याप्तेरुद्यमस्य संपूर्णयशसेऽञ्जसा ॥ ५५ ॥

महोन्नतं शिरस्त्राणं शुशुभे मुकुटोपमम् ।
श्रीमारुत्योः संनिधानाद्वृद्धिसिद्ध्योरुपस्थितिः ॥ ५६ ॥

वाङ्माधुर्ये संप्रतीतं सुमुखत्वं विशेषतः ।
नैपुण्याद् नाट्यविद्यायाः सर्वपूज्यकलानिधेः ॥ ५७ ॥

देवताया गुणानेवं तस्मिन् दृष्ट्वा नरोत्तमे ।
भक्त्याभिवादनं चक्रुः सभास्थानस्थसज्जनाः ॥ ५८ ॥

वेळवी स्वागताध्यक्ष आदौ चक्रे स्वभाषणम् ।
स्वागताय प्रतिनिधिप्रेक्षकाणां मुदान्वितः ॥ ५९ ॥

सुस्वागतं स्यात् सर्वेषामागतानां समास्थलम् ।
दूरतो लोककार्यार्थं राष्ट्रभक्त्यैकधीमताम् ॥ ६० ॥

कर्णाटकप्रदेशोऽयं पादन्यासोत्थधूलिभिः ।
पूतस्तिलकमुख्यानां मन्यते पुण्यवानिति ॥ ६१ ॥

अस्माभिराहृतं भक्त्या स्वीकार्यं तद् महाजनैः ।
सुदाम्नः पृथुका यद्वत् कृष्णेन द्वापरे युगे ॥ ६२ ॥

उदारमनसो यूयं वयमत्यल्पसाधनाः ।
नित्यसंतुष्टवृत्तीनामस्मदल्पं भवेद् बहु ॥ ६३ ॥

संस्तुत्यैवं प्रेक्षकांश्च दूरादागतबान्धवान् ।
कथयामास संक्षिप्य मेलनस्य प्रयोजनम् ॥ ६४ ॥

अष्टादशशततमे पञ्चोनशतकोत्तरे ।
पेशवे वत्सरे जातं लोकानां मेलनं पुरा ॥ ६५ ॥

विख्यग्रामे तदाध्यक्षो वाच्छा देशहिते रतः ।
महासभायाः कार्ये यः सदा मग्नोऽर्थशास्त्रवित् ॥ ६६ ॥

प्रशासनस्य तत्काले दोषद्रष्टातिनिर्भयः ।
भारते योऽङ्कशास्त्रस्य पण्डितो मान्यतां गतः ॥ ६७ ॥

मुम्बय्यां पारसीसंघे वाच्छामेथौ नरोत्तमौ ।
राष्ट्रविश्रुतनेतारौ पौरजानपदप्रियौ ॥ ६८ ॥

तयोर्मध्ये महत् स्थानं प्राप मेथा महामतिः ।
मानी नेमस्तलोकानामध्वर्युरिति पूजितः ॥ ६९ ॥

मृत्युना तस्य देशस्य जाता हानिः सुदुस्तरा ।
तत्कुटुम्बीयशोकांशभाजो भारतवासिनः ॥ ७० ॥

गोपालो गोखलेवंश्यो देशभक्तशिरोमणिः ।
ख्यातः सेवकवर्गस्य निर्माता भारतस्य यः ॥ ७१ ॥

त्यागी ववता सूक्ष्मदर्शी राजनीतिपटुः सुधीः ।
शिक्षणज्ञो रचयिता गणितस्य जनप्रियः ॥ ७२ ॥

रानडेवर्यसंनिष्ठोऽसौ मृदुवाक् ऋतुशीलवान् ।
आङ्ग्लवक्तृत्वसंपन्नो निपुणो दूतकर्मणि ॥ ७३ ॥

संपादितमहाकीर्तिः परलोकं गतोऽधुना ।
तेन मग्ना भारतीया दुस्तरे व्यसनार्णवे ॥ ७४ ॥

प्रयच्छतु सदा शान्तिमात्मने तस्य श्रीपतिः ।
शोकदग्धा वयं सर्वे भक्त्या तं प्रार्थयामहे ॥ ७५ ॥

पुरस्कृतं च वालेन भारतोन्नतिकारकम् ।
राष्ट्रसंसत्प्रवेशस्य निर्णयं लोकसंमतम् ॥ ७६ ॥

कर्तुं नेतृजनाः सर्वे सोत्साहा वै भवन्त्विति ।
संप्रार्थ्यैवं सभासद्भ्यो धन्यवादान् पुनर्ददौ ॥ ७७ ॥

अध्यक्षाभिमुखो भूत्वा समर्प्य सुमनस्स्रजम् ।
तत्कण्ठे सादरं प्राह प्रख्यातो वेल्वयी सुधीः ॥ ७८ ॥

अलंकुर्वन्तु धीमन्तः सभाध्यक्षवरासनम् ।
स्वकीयाननुगृह्णन्तु कृत्वा सन्मार्गदर्शनम् ॥ ७९ ॥

अध्यक्षस्थान आसीनः श्रीगणेशमहाशयः ।
मेघगम्भीरया वाचा प्रारेभे स्वाभिभाषणम् ॥ ८० ॥

तिलकं प्रणिपत्यादौ कृत्वा तद्बुद्धिगौरवम् ।
असीमत्यागशूरत्वं च भारतीयोपकारिणीम् ॥ ८१ ॥

तस्य शंसन् समुद्दिश्य तस्मिन्मण्डपसंस्थितान् ।
स उवाच जनान् सर्वान् भारतोत्कर्षचिन्तकान् ॥ ८२ ॥

धन्या यूयं वयं धन्या देशोद्धारचिकीर्षया ।
तिलकोक्तिं श्रोतुकामाः प्राप्ताः कर्णाटकं प्रति ॥ ८३ ॥

अध्यक्षस्थानमादाय कर्णाटकमहाजनैः ।
कृतानातिथ्यसत्कारान् राष्ट्रमात्रे समर्पये ॥ ८४ ॥

नार्होऽस्म्यहं गौरवस्य गुणानां निवहस्य वा ।
बेळवीभिर्येर्णितस्य निजस्वागतभाषणे ॥ ८५ ॥

सभाकार्यविरोधोऽपि जनैः कश्चिन्न प्रदर्शितः ।
प्रशासनस्य व्यग्रत्वाद् युद्धे जागर्तिकेऽधुना ॥ ८६ ॥

गच्छति व्यर्थतां सर्वैस्तिलकस्य समुद्यमः ।
विनाशयन्ति तत्कार्यं क्रुद्धाः सर्वेऽधिकारिणः ॥ ८७ ॥

युद्धापकारको यत्न आङ्ग्लशत्रुपुरस्कृतः ।
निन्दन्ति तत्सभां नित्यमेवं भारतशत्रवः ॥ ८८ ॥

विघ्नाभिभूतमार्गोऽयं त्याज्यः सुज्ञविवेकिभिः ।
संप्रतीति जनाः केचिदाहुः प्राप्तस्थितेर्वशाः ॥ ८९ ॥

अयुक्तं जल्पनं सर्वमुपर्युक्तं मते मम ।
कुत्रापि प्रगतेः पन्था अक्लेशो नैव विद्यते ॥ ९० ॥

कष्टसाध्यं सुखं यत् तद् मानवोन्नतिकारकम् ।
प्राप्तं यच्च विनायासमधःपाताय कल्पते ॥ ९१ ॥

जठरस्थजलस्यापि कम्पनं यस्य दुःसहम् ।
स्वराज्यान्दोलनं तस्य संमतं न कदाचन ॥ ९२ ॥

सार्वभौमाङ्ग्लसाम्राज्ये घटकाः कानडादयः ।
सर्वैः सह विचाराणामाङ्ग्लानां मन्त्रिमण्डलम् ॥ ९३ ॥

विनियोगं युद्धकाले करोतीत्यनुभूयते ।
देशस्थितिर्युद्धजन्या भाविनी तैश्च चिन्त्यते ॥ ९४ ॥

कानडादिप्रदेशेषु स्वयंशासनपद्धतिः ।
साम्राज्यप्रश्नचर्चायां भागिनः सन्ति मे सदा ॥ ९५ ॥

तादृशी योग्यता देया भारतायेति निश्चितम् ।
इत्याङ्ग्लमन्त्रिवर्गाय साग्रहं च निवेदितुम् ॥ ९६ ॥

आवश्यकमहं मन्ये संस्थायाश्च विनिर्मितिः ।
कोटिसंख्याधिकाः सन्ति पटे यस्याः सभासदः ॥ ९७ ॥

महाकार्ययशःप्राप्तिः संघशक्तिमपेक्षते ।
भूयाल्लोपो देशकार्ये तीव्रनेमरतपक्षयोः ॥ ९८ ॥

महासभाप्रवेशाय सर्वे राष्ट्रीयपक्षिणः ।
आनुकूल्येन कुर्वन्तु राष्ट्रैक्येच्छाप्रदर्शनम् ॥ ९९ ॥

दास्यव्याधेर्विनाशाय मतैक्यं हि महौषधम् ।
नेतॄणां भारतीयानां भिन्नपक्षाभिमानिनाम् ॥ १०० ॥

नद्यो भिन्ना यथा सर्वा विलीयन्ते महोदधौ ।
ऐक्याब्धौ पक्षभेदौघा लीनाः सन्तु तथाधुना ॥ १०१ ॥

अध्यक्षभाषणं लोकाः प्राशंसन् समयोचितम् ।
सर्वे ते ह्यन्वमोदन्त तदुक्तं चैक्यगौरवम् ॥ १०२ ॥

तदन्ते विषया भिन्ना विचाराय पुरस्कृताः ।
तेषां करोमि निर्देशं मुख्यानामेव केवलम् ॥ १०३ ॥

वेदासैन्ये प्रवेशः स्याद् यूनां भारतवासिनाम् ।
गुणानां नियमोक्तानां पूर्तिमत्त्वात् तदर्थिनाम् ॥ १०४ ॥

क्षत्रवृत्तिपराः केचित् केचित् क्षात्रपराङ्मुखाः ।
अनिष्टोऽयं कृतो भेदः व्यर्थो भारतवासिनाम् ॥ १०५ ॥

विमोचनं शासनेन बन्धनागारवासिनाम् ।
कर्तव्यमविलम्बेन जनमाशाभिलाषिणा ॥ १०६ ॥

स्वयंसैनिकसेनाया भारतस्याभिगुप्तये ।
विघूदये विनिर्माणं मित्रराष्ट्रहितस्य च ॥ १०७ ॥

दोमरूलान्दोलनाय भारतस्थापियोजना-
विनिर्मित्यै स्थापितव्यं विदुषामेकमण्डलम् ॥ १०८ ॥

स्थानप्रान्तप्रदेशानां हितार्थं लोकनेतृभिः ।
अन्येऽपि विषयास्तत्र चर्चिता निश्चिता अपि ॥ १०९ ॥

महासभाप्रवेशस्य प्रश्नो विषयसंसदि ।
विवादितो दीर्घकालं तिलकस्यानुयायिभिः ॥ ११० ॥

सर्वेषां संमतिः प्राप्ता चान्ते चालेन धीमता ।
महाकष्टेन संप्राप्तमैकमत्यमिति श्रुतम् ॥ १११ ॥

सहस्रास्तेन संजाता नगरग्रामवासिनः ।
प्रेक्षकास्तिलकस्यासन् भाषणं श्रोतुमुत्सुकाः ॥ ११२ ॥

नैकभाषिकपत्राणां वार्तावाहा विचक्षणाः ।
अमेरिकायुरोपस्था भारतस्थाश्च लेखकाः ॥ ११३ ॥

बिल्वग्रामं समागच्छन् ज्ञातुं निर्णयमुत्सुकाः ।
संसच्चेतृसदस्यानां तिलकोक्तेरनन्तरम् ॥ ११४ ॥

चक्रतृणासुप्तं पीठं संप्राप्तस्तिलको यदा ।
बिभ्रद्रक्तशिरस्त्राणः श्वेतवासा विशुद्धधीः ॥ ११५ ॥

जयघोषस्तालिकानां नादश्च तुमुलोऽभवत् ।
स घोषो हितशत्रूणां हृदयानि व्यदारयत् ॥ ११६ ॥

देवासुरैः समुद्रस्य सायासं मन्थनं कृतम् ।
अमृतस्यैव संप्राप्त्यै न रत्नान्वेषणाय तु ॥ ११७ ॥

अमृतप्राशनादेव ते देवा बलिनोऽभवन् ।
पराजयाय दैत्यानां सामर्थ्यं च समाप्नुवन् ॥ ११८ ॥

हितो मतः सन्धिरेव देवैः स्वप्रतिपक्षिभिः ।
अमृतावाप्तियत्नस्य यशसे शक्तिलिप्सुभिः ॥ ११९ ॥

अयं च सन्धिसिद्धान्तस्तिलकेन पुरस्कृतः ।
शंसामि तस्य तात्पर्यं देववाण्यां यथामति ॥ १२० ॥

महासभाप्रवेशस्य विचाराय विनिर्मिता ।
समितिस्तन्निर्णयाय सभा दद्यात् स्वसंमतिम् ॥ १२१ ॥

सन्धिरिष्टोऽस्ति राष्ट्रस्थपक्षयोर्देशसेविनोः ।
स्वदेशहितदृष्ट्या च परिस्थितिसमीक्षया ॥ १२२ ॥

नियमेषु सभायाश्च सूचितं शोधनं च यत् ।
सदोषमपि तद् ग्राह्यं सद्यो बालानुयायिभिः ॥ १२३ ॥

प्रवेशानन्तरं कार्यो यत्नो दोषनिवारणे ।
स्थापितव्यं तदर्थं हि विधिपण्डितमण्डलम् ॥ १२४ ॥

बेळवी बापटिस्तद्वत् खापर्डे तिलकस्तथा ।
केळ्करो नरसिंहश्च भवेयुस्तत्सभासदः ॥ १२५ ॥

परिस्थितिर्वै देशस्य तिलकेन समीक्षिता ।
भाषणक्षणपर्यन्तं सुरतस्याधिवेशनात् ॥ १२६ ॥

जाता क्षीणबला राष्ट्रसमितिर्भारतेऽधुना ।
खिन्नोऽस्मि न च ग्रस्तोऽस्मि निराशाजनितामयैः ॥ १२७ ॥

न राष्ट्रीयसभायाश्च अभवन् शक्तिसंयुताः ।
नागा यथा म्लनवीर्या आसन् स्वातन्त्र्यघोषकाः ॥ १२८ ॥

तेषां ह्रस्वः स्फुलिङ्गो वै प्राज्वलद् ग्रीष्मभानुवत् ।
विमानिता दुराराध्यैर्यदा मेथानुयायिभिः ॥ १२९ ॥

प्रशासनेन सर्वत्र कृतं दण्डावलम्बनम् ।
आन्दोलनं स्वराज्यस्य भूतं तेनैव निष्प्रभम् ॥ १३० ॥

लोकशक्तिर्दैवतेव द्विरूपेण प्रतीयते ।
क्वचित् सौम्यं क्वचिद् घोरं रूपं धत्ते जनेषु सा ॥ १३१ ॥

एकशक्तेः स्वरूपे द्वे भवतोऽन्योन्यपोषके ।
तत्संयोगो बुद्धिमद्भिः कर्तव्यो देशसेवकैः ॥ १३२ ॥

शक्तित्रयता शास्त्रकृद्भिरुत्साहप्रभुमन्त्रजा ।
सुरतोपप्लवाद् शिष्टा मन्त्रशक्तिस्तु केवला ॥ १३३ ॥

सभायां प्रतिवर्षं सा पुच्छदिग्गतिवर्तिनी ।
अधिष्ठानस्य शून्यत्वादन्यशक्तिद्वयस्य तु ॥ १३४ ॥

अधोगतिं प्रापतुस्ते स्वायत्नाक्षमतामुभे ।
नैराश्यमन्धकूपेऽथ तद्दैन्यं वर्णनातिगम् ॥ १३५ ॥

अकर्मतासमुत्पत्तौ कष्टेनास्तित्वरक्षणम् ।
कृतं ताभ्यां महद् भाग्यं मन्येऽहं भारतस्य तत् ॥ १३६ ॥

शक्तित्रयं च संधातुं प्रस्तावोऽयं पुरस्कृतः ।
भूयाद् शक्तित्रयोपेता भारतीयसभा पुनः ॥ १३७ ॥

मत्योपायांश्च संप्रेक्ष्य नीरक्षीरविवेकतः ।
गुणदुग्धप्रभूताय प्रदेयुर्निजसंमतिम् ॥ १३८ ॥

त्यजेयुर्दोषभूयिष्ठाञ् जलानीव मरालवत् ।
गुणदोषविवेकेन मार्गे भजति पण्डितः ॥ १३९ ॥

शरीरे क्षीणरक्तस्य रोगिणोऽन्तःप्रवेशनम् ।
विशुद्धनवरक्तस्य कारयेत् सचिकित्सकः ॥ १४० ॥

ताडनं पयसामेव व्यर्थ एव परिश्रमः ।
रोगनाशाय वैद्यस्य प्रयत्नस्तद्विना कृतः ॥ १४१ ॥

तेजोहीनत्वमापन्ना भारतीयसभाधुना ।
तेजस्वितासमुत्पत्तिः कथं तस्यां भवेदिति ॥ १४२ ॥

सभायाः सूत्रधारेषु विद्यन्ते बहुसंख्यया ।
निष्पक्षपातिनः सुज्ञा देशस्थितिसमीक्षकाः ॥ १४३ ॥

उत्सुकाः स्वागतं कर्तुमस्मन्मित्रानुयायिनाम् ।
भारतीयसभास्थाने सादरं हर्षनिर्भराः ॥ १४४ ॥

तेषामेव प्रयत्नेन सभाद्वारमपावृतम् ।
किंचिदस्मत्प्रवेशाय मुम्बय्यामधिवेशने ॥ १४५ ॥

अस्मत्पक्षसभासद्भिश्चेतरैर्देशसेवकैः ।
सद्बुद्धेर्दर्शकं तेषां सहकार्यस्य संप्रति ॥ १४६ ॥

पाणिं पुरस्कृतं मित्रैर्नमस्तैः स्वागताय नः ।
गृहीत्वा पाणिभिः सर्वैरस्तत्पक्षीयबन्धुभिः ॥ १४७ ॥

हस्तान्दोलनमस्माभिः कार्यमेवेति मे मतिः ।
स्वराज्यान्दोलनस्यैवं कुर्याम समुपक्रमम् ॥ १४८ ॥

भवद्भिरभिगन्तव्यं लखनौराष्ट्रसभां प्रति ।
सभाकार्ये यशःसिद्धिरुपस्थित्यैव संभवेत् ॥ १४९ ॥

मातृदर्शनयोगोऽयं चिरकालात् समागतः ।
सिद्धा भवन्तु सेवायै कर्तुमात्मसमर्पणम् ॥ १५० ॥

साशङ्काश्चात्र ये सन्ति सुहृदो ये विरोधकाः ।
तानहं प्रार्थये कर्तुं स्वविचारप्रदर्शनम् ॥ १५१ ॥

सर्वानुमतिसिद्ध्यर्थं प्रयतेऽहं यथामति ।
आक्षेपाणां खण्डनाय समाधानाय शङ्किनाम् ॥ १५२ ॥

कालोचिताभिः कृत्वान्ते भाषणस्य सदुक्तिभिः ।
अन्योक्तश्रवणोत्कण्ठस्तिलकः स्वासने स्थितः ॥ १५३ ॥

व्यासपीठं समागत्य बहवः संमतिं ददुः ।
तिलकोक्तिः सभामध्ये न केनापि विरोधिता ॥ १५४ ॥

उपातिष्ठन् जनाः स्तोतुं निन्दितुं च पुरागताः ।
स्पर्धां प्रदर्शयामासुस्तिलकं च प्रशंसितुम् ॥ १५५ ॥

मुंजेऽयं नागपूरस्थश्चाच्युतो मुम्बईगतः ।
परांजपे पुण्यपौरश्चान्ये साहाङ्कवृत्तयः ॥ १५६ ॥

जगर्जुः संमतिं चोच्चैरात्मनो वल्गुभाषणैः ।
प्रतस्थिरे सभास्थानाद् निबद्धा ऐक्यरज्जुभिः ॥ १५७ ॥

सूत्रधारः परिषदः कर्णाटकधुरंधरः ।
गङ्गाधरः ख्यातकीर्तिर्ददौ संसन्निमन्त्रणम् ॥ १५८ ॥

साबर्मतिमठस्थाय गान्धये त्यागमूर्तये ।
आगन्तव्यमलंकर्तुं सभास्थानं सहानुगैः ॥ १५९ ॥

अवलोक्य समारम्भं गङ्गाधरमुपागतम् ।
दर्शनेनैकमत्यस्य हृष्टोऽहं गान्धिरब्रवीत् ॥ १६० ॥

ब्रह्मास्त्रेण मृतः स्वमातुरुदरे पाण्डोः कुलस्याङ्कुरो
मेने द्रोणसुतः परंतु विभुना कृष्णेन संजीवितः ।
द्रौण्यस्त्रप्रतिकारकं करगतं दिव्यं स्वचक्रायुधं
क्षिप्त्वा पार्थसुतप्रियोदरगतो गर्भस्तदा रक्षितः ॥ १६१ ॥

तद्वद् दण्डभयेन भारतजनस्वाराज्ययत्नो मृतो
मेने त्वाङ्ग्लगणः परंतु तिलकः संजीवयामास तम् ।
बिल्वग्रामसभासु भिन्नमतयोः सुश्लाघ्यसंध्युद्यमा-
दैक्यं चाखिलभारते समुदितं तद्दिव्यवाग्वैभवात् ॥ १६२ ॥

इति माधवत्रिविरचिते श्रीतिलकयशोऽर्णवे बिल्वग्रामपरिषद्वृत्तान्तनामा
एकपञ्चाशस्तरङ्गः ।

## द्वापञ्चाशत्तमस्तरङ्गः

सुवार्ता प्रकटीकर्तुं संघस्य शुभजन्मनः ।
विल्वग्रामे सभायां वै भाषणं तिलकोऽकरोत् ॥ १ ॥

*श्रीगणेशो विदर्भस्थो वक्तुः प्राणा बहिश्चराः ।*
उपाविशद् महाभागः सभाध्यक्षपदासने ॥ २ ॥

तत्सभास्थानमायाताः सहस्राणि सहस्रशः ।
नरा नार्यश्च ग्रामस्थाः सर्वधर्मानुयायिनः ॥ ३ ॥

लिङ्गायतेषु ये मुख्यास्तचक्रिरे ते परिश्रमम् ।
कार्यक्रमं सभायाश्च कर्तुं लोकमनोहरम् ॥ ४ ॥

द्वेषिणः संघकार्यस्य वर्तन्ते लिङ्गधारिणः ।
इति ब्रुवन्तो लोकास्तु सभां दृष्ट्वा निरुत्तराः ॥ ५ ॥

लिङ्गधारिण आयाता यसयाचार्यपन्थिनः ।
ब्राह्मणाः क्षत्रिया वैश्याः शूद्रा हरिजना अपि ॥ ६ ॥

विलुप्तोऽभूज् जातिभेदो धर्मभेदोऽपि तत्स्थले ।
तिलकं संमुखं दृष्ट्वा जगन्नाथं यथोत्कले ॥ ७ ॥

सभास्थानं समुत्फुल्लं सहस्राननकाननम् ।
नानावर्णशिरस्त्राणपुष्पशोभाभिरञ्जितम् ॥ ८ ॥

उच्चासनस्थितस्तस्मिन् वनोपमसभास्थले ।
सादृश्यं तिलको लेभे हरेः करिशिरोभिदः ॥ ९ ॥

समारेभे सभाकार्यं सभाध्यक्षो महाशयः ।
विनोदप्रचुरैर्वाक्यैरर्थगर्भैः प्रसन्नवाक् ॥ १० ॥

विद्यते विश्वविख्यातः पण्डितस्तिलकाभिधः ।
धन्यता च विषयस्तस्य स्वराज्यप्राप्त्युद्यमः ॥ ११ ॥

संयोगोऽयं महानत्र रत्नकाञ्चनयोरिव ।
सुदुर्लभः सुखं प्राप्तो दैवयोगात् समासदाम् ॥ १२ ॥

उपाकर्मादिकार्येषु पञ्चगव्यं द्विजः पिबेत् ।
कायवाङ्मनसां शुद्ध्या उपाध्यायस्य शासनात् ॥ १३ ॥

आहरेद् विविधा इष्टीस्तत्पश्चाच्च यथाविधि ।
धारणं यज्ञसूत्रस्य ब्रह्मयज्ञं समन्त्रकम् ॥ १४ ॥

कर्मान्तेऽवभृथस्नानं पुरोडाशस्य सेवनम् ।
आचार्यादाशिषः प्राप्य विन्देच्च कृतकृत्यताम् ॥ १५ ॥

पञ्चगव्यसमं ज्ञेयं भाषणं मम सज्जनैः ।
पेयं कष्टेन कर्मादावात्मभूत्यभिलाषिभिः ॥ १६ ॥

गङ्गेवावभृथस्नाने तिलकस्य सरस्वती ।
उपदेशः पुरोडाशः सेव्यः सर्वसभासदाम् ॥ १७ ॥

श्रीकृष्णतनयः प्राह रहस्यं मुर्नि प्रति ।
अत्राद्योपस्थितान् लोकानुपदेष्टुं त्वमर्हसि ॥ १८ ॥

भृङ्गेण पोषितः कीटः भृङ्गत्वं विन्दते स्वयम् ।
नित्यं भृङ्गस्य रूपस्य चिन्तनादिति कथ्यते ॥ १९ ॥

निदिध्यासात् स्वराज्यस्य प्रपेदे तिलकः स्वयम् ।
तन्मयत्वं स्वराज्येन न्यायतो भृङ्गकीटयोः ॥ २० ॥

सेनापतिर्यथा स्कन्दो देवानां स्वर्गवासिनाम् ।
भारते तिलकस्तद्वद् देशभक्तदलाग्रणीः ॥ २१ ॥

तदाज्ञाकारिणः सर्वे वयं भारतवासिनः ।
युयुत्सवः करे धृत्वा शिरस्तत्कार्यसिद्धये ॥ २२ ॥

आश्वासनं ददाम्येते त्वदादिष्टेन वर्त्मना ।
सर्वत्यागेन गन्तारः स्वराज्याय धृतव्रताः ॥ २३ ॥

सभाध्यक्षः श्रीगणेश उक्त्वैवं समुपाविशत् ।
आसने व्यासपीठस्थे महार्हे च सुखप्रदे ॥ २४ ॥

तत्पश्चात् तिलकं प्राप्तं व्याख्यानस्थानसंनिधिम् ।
आदृत्य सहसा लोकाः स्वागतार्थं समुत्सुकाः ॥ २५ ॥

चक्रिरे गर्जनामुच्चैस्तिलकस्य जयोऽस्त्विति ।
तन्निनादः सभाकाशं व्याप्य व्योमपथं गतः ॥ २६ ॥

निनादोऽसौ स्वागतस्य क्रमादुपशमं गतः ।
आत्मनः प्रशांतिं प्रापुः सभास्थानसभासदः ॥ २७ ॥

दर्शनात् पूर्णचन्द्रस्य प्रोद्गतोर्मिर्महोदधिः ।
अन्ते यद्वत्समाप्नोति शान्तिं लोकनवाञ्छिताम् ॥ २८ ॥

वक्ष्ये निर्मितसंघस्य स्वरूपं सप्रयोजनम् ।
देशबान्धवबोधाय ज्ञानार्थं चाधिकारिणाम् ॥ २९ ॥

स्वराज्यसंघ इत्यस्य ह्यभिधानं यथाक्रमम् ।
स्वराज्यप्राप्तिरुद्देशो घोषितस्तद्विधातृभिः ॥ ३० ॥

वर्तमे भारते राज्यं तस्मिन् स्वत्वं न विद्यते ।
तदुत्पत्त्यै यत्नशीलः संघोऽयं सततं भवेत् ॥ ३१ ॥

प्रजानां शासनार्थं च राज्यशक्तिर्द्विधा भवेत् ।
अव्यक्तव्यक्तरूपाभ्यां भूपमन्त्रिसमाख्यया ॥ ३२ ॥

मायाविनो मन्त्रिणश्च भागिनो गुणदोषयोः ।
यथा निन्दन्त्यपहृताः शंसन्त्युपहृतास्तथा ॥ ३६ ॥

विचलन्ति पथो न्याय्याद् मन्त्रिणो मोहलोलुपाः ।
अलिप्तत्वादकर्तृत्वाद् न दोषः परमात्मनि ॥ ३७ ॥

ब्रह्मस्थानगतः सम्राट् संपूज्यः सर्वभारते ।
न कारणं विरोधस्य प्रजायास्तस्य वर्तते ॥ ३८ ॥

लोकस्य सुखदुःखानां हेतुस्तदधिकारिणः ।
प्रचरन्ति श्वेतकाया भारते दण्डधारिणः ॥ ३९ ॥

नियुङ्क्ते तान् निजपद आङ्ग्लीयं मन्त्रिमण्डलम् ।
नाधिकारो भारतस्य नियुक्तावधिकारिणाम् ॥ ४० ॥

अधिकारिनियुक्त्यै च हिन्दस्थं मन्त्रिमण्डलम् ।
कुर्याद् यथा कानडादिप्रदेशेषु करोति ह ॥ ४१ ॥

कानडाऽस्ट्रेलियादीनां स्थानं बन्धुपदोपमम् ।
आङ्ग्लराष्ट्रकुटुम्बेऽस्मिन् गण्यते नीतिकोविदैः ॥ ४२ ॥

स्वातन्त्र्यं शासनस्यास्ति संपूर्णं तन्निवासिनाम् ।
प्रमाणं निर्णयस्तेषां मन्त्रिणां गृहकर्मसु ॥ ४३ ॥

हस्तक्षेपस्याधिकारो नाङ्ग्लमन्त्रिगणे स्थितः ।
बलाहतस्वराज्यस्य रूपमेतद् मयोदितम् ॥ ४४ ॥

सर्वे कुर्वन्ति कार्याणि विभक्ता इव बान्धवाः ।
इंग्लंडं प्रति सर्वेषां ज्येष्ठबन्धुमिवादरः ॥ ४५ ॥

आकाङ्क्षा भारतीयानां भूयात् तद्योग्यताऽसता ।
स्वातन्त्र्यगिरियात्रायाः प्रथमं तच्छुभं पदम् ॥ ४६ ॥

विजेता जितराष्ट्रस्य मन्यते पालकोऽस्म्यहम् ।
सज्ञानीकरणं तस्य कर्तव्यं प्रथमं मम ॥ ४७ ॥

एवं जिताङ्कितत्वं स समर्थयति शाश्वतम्।
सज्ञानीकरणं दूरं याति क्षितिजसंनिभम्॥ ४८॥

नरस्याज्ञानमर्यादा ह्यष्टादशवयोवधिः।
एकविंशतिवर्षाणां कालो वा गण्यते बुधैः॥ ४९॥

राष्ट्रस्य कालमर्यादा सज्ञानारम्भपर्वणः।
कृता केनापि विदुषा नीतिशास्त्रे न लभ्यते॥ ५०॥

कालायनं चाशुभस्य तच्च विघ्नेन योजयेत्।
इति स्वीक्रियते नीतिराङ्ग्लराज्यस्य चालकैः॥ ५१॥

सज्ञानोऽहं दुःसहं मे दास्यपञ्जरजीवनम्।
यतते बन्धमोक्षाय विहगः पञ्जरस्थितः॥ ५२॥

आक्रोशो जितराष्ट्रस्य दास्यान्ताय निशम्यते।
शिष्टराष्ट्रैः क्षणे यस्मिंस्तस्मिन्नक्षन्द्रशास्ययः॥ ५३॥

स्वराज्यसंघनिर्मित्या राष्ट्राणि प्रति भारतम्।
उच्चैः शक्नोति गदितुं स्वदास्यक्लेशयातनाः॥ ५४॥

उद्दीप्तभावनावेगात् स्वास्थ्यभङ्गोऽभिजायते।
प्रशासनस्याधिकारे रक्तशोषणभीषणे॥ ५५॥

मन्मते सुगमः पन्थाः कर्तव्या महती फटा।
निर्विषेणोरगेणेव जनैः स्वातन्त्र्यलोलुपैः॥ ५६॥

निर्विषस्यापि सर्पस्य फटाटोपं भयङ्करम्।
अवलोक्य पलायन्ते प्राणिनो भयकातराः॥ ५७॥

नावरुन्धन्ति ते मार्गं मृगा वन्यास्तृणाशनाः।
गन्तुकामस्य सर्पस्य काननस्थं बिलं निजम्॥ ५८॥

उदात्तं ध्येयमस्माकं निर्दोषं साधनं तथा।
विशन्तु निर्भयाः संघे जनाः स्वातन्त्र्यलिप्सवः॥ ५९॥

उप्तबीजस्तरुर्धत्ते कालेनैव यथा फलम्।
शीतातपातिवृष्ट्यादिविघ्नेभ्यो यदि रक्षितः ॥ ६० ॥

वयं सर्वे तरोस्तस्य रक्षका इव संस्थिताः।
विरलस्य भवेद् भाग्यं भोक्तुं तस्य फलं स्वयम् ॥ ६१ ॥

भवितारः पुत्रपौत्रा अस्माकं फलभागिनः।
आशायुक्तधियः सर्वे कुर्वन्तु तरुरक्षणम् ॥ ६२ ॥

स्थानं स्वयं देवलोके निरासक्तस्य योगिनः।
न तथाप्यश्नुते योगी देहत्यागं विनामृतम् ॥ ६३ ॥

स्वे स्वे कर्मण्यभिरतः संसिद्धिं लभते नरः।
विश्वस्यैतत् प्रभोर्वाक्यं वर्तितव्यं जनैः सदा ॥ ६४ ॥

पीत्वा वाक्यामृतं लोकास्तिलकाननिःसृतम्।
साह्यं कर्तुं विनिश्चिक्युः कार्ये तेन पुरस्कृते ॥ ६५ ॥

विल्वग्रामे तिलकवचनैर्बोधिता देशभक्ताः
कृष्णार्भीमातटगतमहाराष्ट्रदेशेषु चेदः।
गोदावर्यास्तटगतविदर्भेषु वर्धाप्रणीता-
वैणापूर्णाविमलसलिलापूतभूपूत्तरासु ॥ ६६ ॥

इति माधवविरचिते श्रीतिलकयशोऽर्णवे बिल्वोपदेशनामा द्वापञ्चाशत्तमस्तरङ्गः।

## त्रिपञ्चाशत्तमस्तरङ्गः

गृहाभिमुखवर्त्मभिस्त्वनलयाहनाधिष्ठितैः
पुरीं स्वसहकारिभिः परिषदः स्थलात् प्रस्थितैः ।
स्वसंघदृढताप्तये कृतमतीव वाङ्मन्थनं
सुखेनगतिमांस्तदा खलु स्वराज्यसंघोऽभवत् ॥ १ ॥

मथितार्थो विचारस्य संचारैस्तु महात्मनः ।
आयद्यको दक्षिणस्य प्रान्तेषु स्यादिति स्थितिः ॥ २ ॥

स्वसंघदार्ढ्यनिष्पत्त्यै कर्णाटकविदर्भयोः ।
आन्ध्रवङ्गकलिङ्गेषु सिन्धुगङ्गातटेष्वपि ॥ ३ ॥

कर्तव्या परिषत् पौरैर्नगरेऽहमदाभिधे ।
काले समीपे तत्रस्थैर्निश्चितं स्नेहिभिस्तदा ॥ ४ ॥

भवेत्केळकरस्तस्याः सभाध्यक्षोऽतिबुद्धिमान् ।
तत्र यातु महाभागस्तिलको लोकनायकः ॥ ५ ॥

निमन्त्रितः पौरमुख्यैः संघकार्यहितेच्छुभिः ।
उपदेशाः स्वमन्त्रस्य चोद्देशाः संघनिर्मितेः ॥ ६ ॥

अज्ञानस्येति लोकानां विनाशो हेतवस्त्रयः ।
तिलकस्तद्धेतुपूर्त्यै करोत्येवाभिभाषणम् ॥ ७ ॥

अधिकारः स्वराज्याप्तेर्जन्मसिद्धोऽस्ति देहिनः ।
तत्प्रयत्नप्रतीकारं न कश्चित् कर्तुमर्हति ॥ ८ ॥

द्रष्टा स्वराज्यमन्त्रस्य तिलको मानवानृषिः ।
ज्ञानार्कस्योदयात् तस्य विनश्यति तमोऽञ्जसा ॥ ९ ॥

दातव्यं तेन लोकेभ्यो ज्ञानं सुलभया गिरा ।
प्राप्तव्यं सहकार्यं च भारतोद्धारकर्मणि ॥ १० ॥

प्राप्य पुण्यपुरीं शीघ्रं खापर्डेतिलकावुभौ ।
विश्रान्त्यर्थं गतावल्पकालं सिंहगडालयम् ॥ ११ ॥

जिल्हासंसन्निमित्तेन सर्वेऽपि व्यवसायिनः ।
पौरा जानपदा याता अहंमद्नगरं प्रति ॥ १२ ॥

आकर्षिता असंख्याता दलिता ग्रामवासिनः ।
तिलकोऽद्युत्सवं मन्ये वास्यत्येवेति वार्तया ॥ १३ ॥

यथाकालं समायातस्तिलकोऽध्यक्षसंयुतः ।
नगरस्थानकं पौराः स्वागतार्थं समाययुः ॥ १४ ॥

पुरप्रमुखमार्गेषु तोरणध्वजशोभिषु ।
रथारूढो जनैः सर्वैर्नीतो बालोऽभिवन्दितः ॥ १५ ॥

न वाहितस्तुरङ्गाभ्यां रथो बालस्य वर्त्मसु ।
युवकैर्वाहितः सर्वैः स रथो बालपूजकैः ॥ १६ ॥

जगन्नाथस्य यात्रायां यान्त्रिका रथवाहकाः ।
रथस्थानां देवतानां यथा भक्तिसमन्विताः ॥ १७ ॥

धृत्वा कराभ्यां ते रज्जुं गमयन्ते रथे जडम् ।
कुर्वन्ति तेन संजातं मत्वा धन्यं स्वजीवितम् ॥ १८ ॥

रथस्थं वामनं दृष्ट्वा पूर्वपापं विनश्यति ।
इत्युक्त्योर्ध्वः स्वसद्मस्थान् देवानर्चन्ति भाविकाः ॥ १९ ॥

तथा भावनया लोकाः प्रेरितास्तिलकप्रभुम् ।
ऊहुरथ्यान् भ्रामयित्वा नगरेऽन्यत्र तद्रथम् ॥ २० ॥

चितळे स्वागताध्यक्षस्तस्मै मालां समर्प्य च ।
सादरं तत्करं धृत्वा व्यासपीठं निनाय तम् ॥ २३ ॥

श्रोतारः सर्वेभ्यो जातिभ्यश्चानुयायिनः ।
धर्माणामपि सर्वेषां प्रापुः संसत्स्थलं प्रति ॥ २४ ॥

तिलकोऽपि समायातः कंचित् कालं सभागृहम् ।
तद्व्याख्यानं पृथग् जातं सायं पण्यचतुष्पथे ॥ २५ ॥

बिल्वग्रामे चर्चितानां विषयाणां च भाषणे ।
ऊहापोहः सभासद्भिः कृतो जिल्हाधिवेशने ॥ २६ ॥

भारतस्थितिमालोच्य देशदुःखनिदानवित् ।
चिकित्सां सूचयामास नरसिंहो स्वभाषणे ॥ २७ ॥

निर्मूलनाय तद्व्याधेः स्वराज्याप्तिर्महौषधम् ।
अमर्षीत् तिलको द्रष्टा संघस्थापनपर्वणि ॥ २८ ॥

एवं प्रदर्शितं वर्त्म नृसिंहेन स्वभाषणे ।
चकार विस्तरं तस्य तिलको निजभाषणे ॥ २९ ॥

सायं विराटसभाध्यक्षो वाकुकीलश्चौकरोऽभवत् ।
वयोवृद्धः स्थितप्रज्ञो ग्रामस्थजनवन्दितः ॥ ३० ॥

चौकरस्तिलकं स्तुत्वा प्रार्थयामास सादरम् ।
वाचैतानुगृह्णातु सभास्थानागतान् जनान् ॥ ३१ ॥

निमन्त्रितो जनैः सर्वैर्नगरं प्रेमपूर्वकम् ।
आतिथ्येनातिसंतुष्टो धन्यवादान् ददाम्यहम् ॥ ३२ ॥

संमानितः पूर्वमेव स्वागतातिथ्यकर्मभिः ।
स्वराज्यसंघसाहाय्यं करोमि खलु याचनाम् ॥ ३३ ॥

देयानि संघसाहाय्यं मनस्तनुधनानि ह ।
देवानाममृतप्राप्तिर्जाता तत्तपसा चिरम् ॥ ३४ ॥

द्रव्यबुद्धिशरीराणां शक्तेर्दानं तपः स्मृतम् ।
सर्वस्वार्पणकर्तारो लभन्ते ब्रह्मणः पदम् ॥ ३५ ॥

आप्नुवन्त्यैहिकं लाभं न तत्राश्चर्यकारणम् ।
पुण्यं सर्वं त्यागमूलं ततः शान्तिस्ततः सुखम् ॥ ३६ ॥

संघनिर्दिष्टमार्गोऽयं निर्दोषः सुज्ञसंमतः ।
प्रवर्तितोऽधुनास्माभिर्भारतोत्कर्षचिन्तकैः ॥ ३७ ॥

अवलोक्य सभां हीनामात्मप्रियसखैश्च ताम् ।
तिलकः शोकसंविग्नः प्राह गद्गदया गिरा ॥ ३८ ॥

मित्रवर्यो देशपांडे देशभक्तः सुबुद्धिमान् ।
दिवं नीतो निर्घृणेन मृत्युना पाशधारिणा ॥ ३९ ॥

तस्य पश्चाद् धुरीणत्वं महाभागेन स्वीकृतम् ।
चितळेवंशजातेन विदुषा स्थिरबुद्धिना ॥ ४० ॥

उपस्थिता जना अद्य पौरजानपदा इह ।
दृश्यन्ते प्रेरिताः सर्वे भारतोद्धारचेतसा ॥ ४१ ॥

कृत्वाभिनन्दनं तेषां भगवन्तं नमाम्यहम् ।
कुरु करोतु स्थिरं तेषां चैतन्यं तद् नवोदितम् ॥ ४२ ॥

कामये देशकार्यार्थं निर्भयाः सत्यवादिनः ।
युवानो बालवृद्धाश्च युवत्यश्च भवन्त्विति ॥ ४३ ॥

प्रतिपाद्य द्विव्याख्याने तिलको लोकनायकः ।
विख्यातां पुण्यनगरीं जगामानुजनैः सह ॥ ४४ ॥

वर्षेऽस्मिँल्लोकमान्यस्य वयसः परिपूर्तता ।
भवितेति समारोहः कर्तव्यो भारते जनैः ॥ ४५ ॥

प्रादुरासीद् विचारोऽयं देशसेवकमण्डले ।
प्राप्ताः पुण्यपुरीं मुख्यास्तदर्थमनुयायिनः ॥ ४६ ॥

मुम्बय्याश्च महाराष्ट्रात् कर्णाटकविदर्भतः ।
सौराष्ट्रात् सिन्धुदेशाच्च देशभक्ताः समाययुः ॥ ४७ ॥

कार्यक्रमो निश्चितस्तैरुत्सवस्य सुविस्तृतः ।
व्याख्यानानि तथा चर्चा देवताराधनानि च ॥ ४८ ॥

अन्नवस्त्रादिदानानि संगीतं च कलाविदाम् ।
प्रार्थना सर्वधर्माणां पूज्यस्थानेषु सज्जनैः ॥ ४९ ॥

आयुरारोग्यवृद्ध्यर्थं तिलकस्य महात्मनः ।
एकसप्ताहपर्यन्तं करणीयो महोत्सवः ॥ ५० ॥

यवत्मालग्रामवासी परांजपेकुलसंभवः ।
उवाच नृहरिर्नूनं तिलकस्यानुगः सुधीः ॥ ५१ ॥

विदुषां वै विचाराय सूचयामि यथामति ।
तिलकस्य महासेवा विश्रुताखिलभारते ॥ ५२ ॥

तेन चीर्णं तपो घोरं त्रिंशद्वत्सरसंमितम् ।
उत्थानाय प्रसुप्तस्य भारतस्य दिवानिशम् ॥ ५३ ॥

स्थापयित्वा नवं संघं स्वराज्यस्य प्रचोदिताः ।
प्राप्तये बान्धवाः सर्वे काले निकटवर्तिनि ॥ ५४ ॥

केसरीपत्रसंस्थाया नियेत्नेन कृतो व्ययः ।
आन्दोलनार्थं विशतं द्रव्यस्येति विपश्चिताम् ॥ ५५ ॥

द्रव्यस्य नवकार्यायावश्यकः संग्रहो भवेत् ।
समारम्भदिने तस्मै दातव्या गुरुदक्षिणा ॥ ५६ ॥

रूपकाणामेकलक्षं लक्ष्यं समुचितं भवेत् ।
संमतिं प्रार्थये चात्र युष्माकं दीर्घदर्शिनाम् ॥ ५७ ॥

श्रुत्वा तदद्भुतं वाक्यं युक्तिमद् रोमहर्षणम् ।
केचित् प्रदर्शयामासुः संमतिं तालिवादनैः ॥ ५८ ॥

नरसिंहादयः सभ्या मुंजेगङ्गाधरादयः ।
कर्णाटकविदर्भस्था अब्रुवन् साधु साध्विति ॥ ५९ ॥

रूपकाणामेकलक्षं संचेतुं हि विशेषतः । -
महाराष्ट्रे भवेद् योग्यः कालो मासत्रयावधिः ॥ ६० ॥

श्रुतिरम्योऽपि संकल्पो साध्यो भवति वा न वा ।.
इति चिन्तायुताः केचिद् व्यवहारपरायणाः ॥ ६१ ॥

तथाप्यनुमतिं सर्वे ददुस्तां सूचनां प्रति ।
कंचित् कालं समालोच्य ह्येकाग्रमनसा स्थितिम् ॥ ६२ ॥

महाजनाः पुण्यपुर्यास्तिलकस्यानुयायिनः ।
चक्रिरे सूचिकामेकां स्वयंस्फूर्त्यानुदानिनाम् ॥ ६३ ॥

सप्तसहस्ररूप्याणां विनायासेन संग्रहः ।
अत्यन्ताल्पावधौ जातस्तेन सर्वेऽपि नन्दिताः ॥ ६४ ॥

निश्चितं जुलईमासे त्रयोविंशो दिनं शुभम् ।
इति प्रकाशितं पत्रे समितेरधिकारिभिः ॥ ६५ ॥

सप्ताहोऽपि न संपूर्ण उपलब्धोऽनुयायिनाम् ।
दूरस्थानां पुणेपुर्याः कर्तुं द्रव्यस्य संग्रहम् ॥ ६६ ॥

प्रकाशितं सर्वमान्यैर्धुरीणैः पत्रकं शुभम् ।
एतं दिग्दर्शनं तत्र देयेति गुरुदक्षिणा ॥ ६७ ॥

भक्त्यार्चन्तु गुरुं सर्वे भारतोद्धारचिन्तकाः ।
तिलकं द्रव्यदानेन षष्ठ्यब्दीपूर्णतादिने ॥ ६८ ॥

पत्राण्याधःस्थले येषां स्वाक्षरी नामदर्शिनी ।
आसीद् वै वर्णनं तेषां संक्षेपेण करोम्यहम् ॥ ६९ ॥

पटवर्धनकुले जातः तपस्वी योगविद्वरिः ।
अण्णानाम्ना सुप्रसिद्धो महाराष्ट्रे चिकित्सकः ॥ ७० ॥

दानशूरेषु खापर्डे कलौ कर्णो यथा पुरा ।
विदर्भेषु ख्यातकीर्तिस्तिलकस्य सुहृत् प्रियः ॥ ७१ ॥

गणेश इति विख्यातो विधिज्ञानां शिरोमणिः ।
तिलकेन न्यायकार्ये मुख्यमन्त्रीति वर्णितः ॥ ७२ ॥

सातारानगरे ख्यातः करंदीकरवंशजः ।
स्नेहेनाभाषितो बाल्यात् तिलकेन सखेति यः ॥ ७३ ॥

नेनेकुलसमुत्पन्नोऽभिधयाण्णेति विश्रुतः ।
कुशलो व्यवहारज्ञो मुम्बापुर्यां प्रतिष्ठितः ॥ ७४ ॥

विल्वग्रामाग्रणीः प्राणास्तिलकस्य बहिश्चराः ।
शिरोमणिस्तैलकानामासीद् गङ्गाधराभिधः ॥ ७५ ॥

नागपूरे बाळकृष्णो नेत्ररोगचिकित्सकः ।
निःसीमस्तिलकप्रेमी मुंजेवंशविभूषणम् ॥ ७६ ॥

नीतं वयो समर्थस्य वाग्भाण्डारस्य संग्रहे ।
स्थापितं मन्दिरं येन देवोपाह्वः स शंकरः ॥ ७७ ॥

उक्ते दिने पुण्यपुर्यां भारते चाखिले जनाः ।
उच्चैरङ्गीरयामासुस्तिलकाख्यानकं शुभम् ॥ ७८ ॥

संपादितः सुप्रभाते ब्राह्मणैः श्रुतिवित्तमैः ।
विधिः षष्ट्यब्दपूर्त्यर्थं यथाशास्त्रं समन्त्रकम् ॥ ७९ ॥

प्रातर्विप्रैः प्रदत्ताशीर्न्यैस्ता मन्त्राक्षता अपि ।
देवतानां दर्शनाय प्रतस्थे तिलको गृहात् ॥ ८० ॥

पुण्यग्रामाधिविप्रेशां देवीं योगेश्वरीं क्रमात् ।
प्रणम्य मन्दिरं गत्वा विप्रेभ्यो दक्षिणां ददौ ॥ ८१ ॥

व्याजेन दत्तपूजायाः त्रिदेवी यत्र पूज्यते ।
प्रफ़दाने यशी विद्या यत्र दिव्येन तेजसा ॥ ८२ ॥

परार्थाय रता यस्य मनोवाक्कायशक्तयः ।
यद् महर्षितपः पूतं पावनं च मनीषिणाम् ॥ ८३ ॥

तस्याश्रमपदं प्राप्त आशिषामभिलाषया ।
कर्मयोगी भाष्यकारस्तिलकः प्रश्रयानतः ॥ ८४ ॥

पुरतो योगिनं दृष्ट्वा स्वासनस्थं विनायकम् ।
ज्ञानवृद्धं तपोवृद्धं पदप्रणतवत्सलम् ॥ ८५ ॥

आयुर्वेदेऽपि निष्णातमाल्योपाधिभिषग्वरम् ।
दैव्यासुरीमानुषीणां चिकित्सानां च कोविदम् ॥ ८६ ॥

कृताह्निकविधिं दत्तभक्तवृन्देन सेवितम् ।
मुनिं प्रसन्नवदनं प्रणनाम कृताञ्जलिः ॥ ८७ ॥

तीर्थसंचारसत्कल्पपुण्ययोस्तस्य पादयोः ।
तस्याशिषोऽपेक्षमाणो निधाय निजमस्तकम् ॥ ८८ ॥

स्वासनादपि चोत्थाय तिलकं परिषस्वजे ।
दीर्घायुश्चिन्तयन् प्राह जीवैव त्वं शतं समाः ॥ ८९ ॥

कृतमेव महाकार्यं तव प्रेरणया जनैः ।
प्राप्नुवन्तु जना दीर्घं कालं त्वन्मार्गदर्शनम् ॥ ९० ॥

नम्रवाक् तिलको बाष्परुद्धकण्ठोऽश्रुलोचनः ।
विनायकाय गुरवे ददौ सादरमुत्तरम् ॥ ९१ ॥

माता पिता पितृव्यश्च रामकृष्णो विदां वरः ।
केरुनानाभिधश्छत्रे गणितज्ञशिरोमणिः ॥ ९२ ॥

विष्णुशास्त्री जिन्सिवाले मर्यंबो माधवस्तथा ।
मम पूज्या गताः सर्वे दिवमेते तथेतरे ॥ ९३ ॥

मद्भाग्याद् दैवाद्भाग्याच्च भवानेवावशिष्यते ।
भवत्पदनमस्काराः पूज्यांस्तानपि गच्छतु ॥ ९४ ॥

मालाकारो यथा वृक्षमूलमेवाभिषिञ्चति ।
तेन सर्वस्य वृक्षस्य भवत्येवाभिषिञ्चनम् ॥ ९५ ॥

तदुक्त्वा च पुनः कृत्वा नमस्कारं निववृते ।
स्वगृहं यत्र संप्राप्तो सानुयायिसुहृद्गणः ॥ ९६ ॥

विदर्भात् प्रस्थिताः सभ्याः समारम्भदिदृक्षवः ।
संदेशं प्रेषयामासुः प्रदातुं पूर्वसूचनाम् ॥ ९७ ॥

पूर्वेद्युर्वै विदर्भस्था बहवः पुण्यपत्तनम् ।
प्राप्ता अग्निरथैस्तैस्तैस्तिलकस्यानुयायिनः ॥ ९८ ॥

खापर्डे ठेंगडी चाहमेकाग्निरथसंस्थिताः ।
समारम्भदिने प्राप्ताः प्रातः पुण्यपुरीं प्रति ॥ ९९ ॥

तत्रैको व्यत्ययो जातो दुर्दैवेनाप्यकल्पितः ।
तेनाहं धुण्डिराजश्च स्थानके वै चिरं स्थितौ ॥ १०० ॥

आसीनः प्रथमश्रेण्यां खापर्डे ह्यग्नियानके ।
धुण्डिराजो द्वितीयायामहं चान्तरकक्षके ॥ १०१ ॥

उपर्युक्तस्थानयक्षा आकल्याणं वयं स्थिताः ।
कल्याणस्थानकेऽस्माकमवदयं वाहनान्तरम् ॥ १०२ ॥

आग्रहाद् धुण्डिराजस्य द्वितीयश्रेणिभागहम् ।
खापर्डे तु यथापूर्वं प्रथमायामुपाविशत् ॥ १०३ ॥

कुशलो यन्त्रविद्यायां नागपूरस्य भूषणम् ।
ठेंगडी धुण्डिराजाख्यो विदर्भेषु सुविश्रुतः ॥ १०४ ॥

श्रमिकाणां विपत्तीनां परिहाराय तत्परः ।
आङ्ग्लश्रमिकराष्ट्रीयवाङ्मयोपासकस्तथा ॥ १०५ ॥

श्रीमद्भिर्नागपूरस्थैर्बुद्धिवंशस्य दीपकैः ।
विश्वासार्हो नियुक्तोऽसौ यन्त्रोद्यमनिरीक्षणे ॥ १०६ ॥

आदिष्टः स्वामिना धुण्डिर्नेतुमाभरणानि च ।
सुवर्णरत्नयुक्तानि स्वच्छीकरणहेतुना ॥ १०७ ॥

लक्षार्धरूप्यमूल्यानि पुण्यपत्तनगामिना ।
निहितानि स्वयं तानि पेटिकायां च धुण्डिना ॥ १०८ ॥

पेटिका चान्यवस्तूनि कल्याणस्थानके तदा ।
भारकक्षे स्थापितानि धुण्डिराजेन धीमता ॥ १०९ ॥

द्वितीयश्रेणिकक्षायां रथस्य स उपाविशत् ।
अहं च तस्यां कक्षायामविशं सहगः खलु ॥ ११० ॥

प्राप्ते वह्निरथे पुण्यपत्तनस्थानकं प्रति ।
धुण्डिराजोऽधतीर्यागाद् भारकक्षं स सत्वरम् ॥ १११ ॥

वस्तून्यन्यानि लब्धानि नोपलब्धा च पेटिका ।
सुरक्षिता तेन यस्यां महार्हाभरणादयः ॥ ११२ ॥

आगत्याकथयत् सर्वं मह्यं धुण्डिर्यदा मया ।
पृष्टः स भाररक्षार्थे पत्रिका या च दीयते ॥ ११३ ॥

दर्शितव्या त्वया तस्मै स्थानकस्याधिकारिणे ।
धुण्डिराजः प्रत्युवाच मत्समीपे न पत्रिका ॥ ११४ ॥

रक्षितानि मया तत्र पेटिकादीनि तत्क्षणे ।
गृहीता संमतिर्नैव लिखिता वापि मौखिकी ॥ ११५ ॥

न वा मया कोऽपि दृष्टो रक्षकस्तत्र तत्क्षणे ।
भारादिरक्षकस्यैव जातं न स्मरणं तदा ॥ ११६ ॥

प्रमुखाय स्थानकस्य गतौ गदितुमापदम् ।
श्रुत्वा तच्छान्तचित्तेन प्रमुखोऽसौ तदावदत् ॥ ११७ ॥

विपण्णं धुण्डिराजं वै पेटिकावर्णनं कुरु ।
वर्णिता पेटिका तेन संतुष्टः प्रमुखोऽभवत् ॥ ११८ ॥

यत्र वहिरथोऽतिष्ठत् पुणेकल्याणवर्त्मनि ।
संदेशाः प्रेषितास्तत्र पेटिकान्वेषणाय च ॥ ११९ ॥

आगतः प्रतिसंदेशः स्वल्पकालादनन्तरम् ।
अस्ति लोणावळास्थाने पेटिकैकोक्तलक्षणा ॥ १२० ॥

प्रहेतव्यश्च द्रष्टुं तामभिज्ञाता सुसत्वरम् ।
गतस्ततो धुण्डिराजो तदेव स्थानकं प्रति ॥ १२१ ॥

पेटिकां पिहितां दृष्ट्वा यथापूर्वं सुरक्षिताम् ।
निवेदितं तत् सर्वेभ्यो ये सभायामुपस्थिताः ॥ १२२ ॥

उपलब्धा पेटिका मे नो हानिः कापि मे ततः ।
आह्लादिता जनाः सर्वे धुण्डिप्रेषितवार्तया ॥ १२३ ॥

*अकल्पितस्य विघ्नस्य परिहारेण मोदिताः ।*
विलम्बेन समारम्भं गतोऽपि सुसभाजितः ॥ १२४ ॥

कार्यक्रमसमाप्तिश्च तथा धुण्डेरुपस्थितिः ।
अजायतामेककाले तद्दिने कार्यमण्डपे ॥ १२५ ॥

*लिखितं यद् नृसिंहेन समारोहस्य वर्णनम् ।*
तस्मादुल्लेखनीयांशं संक्षेपेण वदाम्यहम् ॥ १२६ ॥

अण्णाख्यो ब्राह्मणश्रेष्ठः सभापतिपदे स्थितः ।
सभायां स्वप्रभावेण शुशुभे यांऽशुमानिव ॥ १२७ ॥

मानपत्राण्यर्पितानि त्रीणि पौरजनैस्त्रिभिः ।
संस्कृताङ्ग्लमहाराष्ट्रभाषास्वपस्थितैस्तदा ॥ १२८ ॥

संस्कृतं मानपत्रं च पठितं रामशास्त्रिणा ।
आङ्ग्लं च वेळणीनाम्ना विल्वग्रामनिवासिना ॥ १२९ ॥

मराठ्यां लिखितं यद् वै मानपत्रं च विस्तृतम् ।
पठितं नरसिंहेन सोत्साहं जनसंसदि ॥ १३० ॥

वर्णयित्वा गुणान् सर्वान् स्नेहबद्धा उपस्थिताः ।
गुरुं तं प्रार्थयामासुः स्वीकार्या स्वल्पदक्षिणा ॥ १३१ ॥

बहुधोपकृता दीर्घं भवद्भिर्देशबान्धवाः ।
भक्तिसेवे नायकस्य जनानां धर्म एव च ॥ १३२ ॥

कृतज्ञताप्रतीकं न उपहारोऽयमल्पकः ।
स्वीकार्यं एव विज्ञप्तिः साग्रहं स्नेहिनामिति ॥ १३३ ॥

खरेवंश्यो दाजिनामा सतीर्थ्यस्तिलकस्य यः ।
अधिवक्ता सुविख्यातो विधिविज्ञानपण्डितः ॥ १३४ ॥

सभाजनार्थं मित्रस्य प्रथमं समुपस्थितः ।
स्वागताय सभासद्भिः कृतं तैस्तालिवादनम् ॥ १३५ ॥

यशसो दुन्दुभेर्नादः श्रूयते यस्य सर्वतः ।
कृतं क्लेशापमानादि हंहो तस्याधिकारिभिः ॥ १३६ ॥

इतिहासेन विश्वस्य तत्त्वं तद् दर्शितं मुहुः ।
दृश्यते प्रत्ययस्तस्य नित्यं सन्मित्रजीवने ॥ १३७ ॥

साभिमानः प्रसन्नेन मनसा चाभिवादये ।
सुहृदः प्रार्थयेऽहं वै दीर्घमायुर्निरामयम् ॥ १३८ ॥

समदुःखसुखा वृत्तिः समलोष्टाश्मकाञ्चना ।
रहस्ये शंसिता या सा स्वयं नित्यमुपासिता ॥ १३९ ॥

तिलकेनेति सान्तेदां रघुनाथस्तदावदत् ।
तनयः पाण्डुरङ्गस्य करंदीकरवंशजः ॥ १४० ॥

श्रौतस्मार्तविधिज्ञोऽसौ मार्तण्ड इव भास्वरः ।
काशीनाथ इति ख्यातो घाईक्षेत्रस्थपण्डितः ॥ १४१ ॥

आसीदसौ प्रतिनिधिः शास्त्रिवर्गस्य भारते ।
आयुर्भवतु दीर्घं ते सुखशान्तिविवर्धकम् ॥ १४२ ॥

कार्णाटको देशपांडे वाग्मी गङ्गाधरोऽब्रवीत् ।
स्फूर्तिदं बालसंदेशं दिव्यं राष्ट्रोपकारकम् ॥ १४३ ॥

इतरेषां भाषणेषु तिलकस्य गुणस्तुतिः ।
आसीत् खलु यथार्था सा गीतैव बहुधा जनैः ॥ १४४ ॥

उपायनान्युत्तमानि ददुर्बालाय ते जनाः ।
कानिचित् स्वल्पमूल्यानि सुदामा पृथुकान् यथा ॥ १४५ ॥

अनन्तरं नृसिंहेन प्रोच्चैरुद्घोषितं तदा ।
अनुज्ञातः समित्याहं तिलकाय समर्पये ॥ १४६ ॥

संपूर्णदक्षिणाद्रव्यं रूप्याणां लक्षसंमितम् ।
संगृहीतं च भक्त्या यत् सच्छिष्यैश्चानुयायिभिः ॥ १४७ ॥

दिवि दुन्दुभयो नेदुर्ववर्षुः सुमवृष्टयः ।
ब्राह्मणा मन्त्रघोषेण गायकाः सारिगस्वनैः ॥ १४८ ॥

अपूरयन् ब्रह्मगोलं ध्वनिभिः शुभशंसिभिः ।
भारतोद्धारकार्याय बालो जीव्याच् शतं समाः ॥ १४९ ॥

जयतात् तिलकश्चेति सृष्टिरेवावदत् स्वयम् ।
स्वागतायेति संजाता भावना भारते नृषु ॥ १५० ॥

तारकोऽयं सुप्रभातात् पूर्वं दृष्टो महोज्ज्वलः ।
स्वातन्त्र्यार्कोदयस्याहो प्रेप्सितस्य निदर्शकः ॥ १५१ ॥

गायत्स्वेवं गुणांस्तस्य प्रेक्षकेपूरसपस्थले ।
मानपत्रोत्तरं दातुं तिलकः पुरतः स्थितः ॥ १५२ ॥

उवाच तिलकः सभ्यांस्तदादरभरानतः ।
धन्यवादार्थं स्वरचनां तदा गद्गदया गिरा ॥ १५३ ॥

सिद्धं वै मानपत्रेण कतो सन्ति सुहृदयः ।
येऽन्येषां पर्वतायन्ते परमाणुसमान् गुणान् ॥ १५४ ॥

धन्यवादान् व्याहरामि शब्दैरल्पाक्षरैरपि ।
कुर्वन्त्वत्र भवन्तस्तत् सौजन्येन च दुष्करम् ॥ १५५ ॥

मानपत्रं स्वीकरोमि ह्युपचारोऽयमद्य वै ।
स्वीकरोमि न तु द्रव्यं न करोमि प्रतिग्रहम् ॥ १५६ ॥

निधिर्लोकार्थसिद्ध्यर्थं मत्समीपे सुरक्षितः ।
ममापि तुलसीपत्रं मया तस्मिन् निधीयते ॥ १५७ ॥

निधिद्रव्यस्य दातृभ्यो ददाम्याश्वासनं शुभम् ।
विनियोगो भवेत् तस्य लोककार्याय नान्यथा ॥ १५८ ॥

कर्तव्योऽनुग्रहः सर्वैः स्वीकृत्य मम सूचनाम् ।
इत्याह तिलकस्तेभ्यः सभ्येभ्यः साग्रहं यदा ॥ १५९ ॥

सर्वे निःस्पृहतां तस्य वर्णयामासुरादरात् ।
सूचनायै ददुस्तस्य संमतिं शुद्धमानसाः ॥ १६० ॥

आवाहनं मातृभूमेर्भारतीयं जनं प्रति ।
भवन्तु दास्यमोक्षाय सुसिद्धा मनुवंशजाः ॥ १६१ ॥

भवन्त्वेते राष्ट्रदेवाः सर्वे भारतवासिनः ।
लुप्तभेदाः स्नेहबद्धा राष्ट्रकार्यैकमानसाः ॥ १६२ ॥

उद्यमस्य कृतस्यास्य फलं निःसंशयं भवेत् ।
भक्तानां निरपेक्षाणां देशकार्यधियामिति ॥ १६३ ॥

एवमुक्त्वा समास्थाने नीतमन्तं स्वभाषणम् ।
तिलकेनातिगम्भीरं लोककर्तव्यबोधकम् ॥ १६४ ॥

ततः पश्चात् सभाध्यक्षो महोत्सवविसर्जनम् ।
जातमित्यब्रवीद् दत्त्वा तिलकायाशिषः पुनः ॥ १६५ ॥

गायन्तस्तद्गुणान् सर्वान् प्रेक्षका निलयं ययुः ।
पुरीमलंकृतां प्रेक्ष्य दीपमालाप्रकाशिताम् ॥ १६६ ॥

श्रुतिमतिचरितेनामोदिता यस्य देवाः
कपटकुटिलवृत्त्या दुर्जनैः पीडितो यः ।
प्रणयवितरणे यद्दृष्टिरासीत् समाना
तिलक इव स भाले शोभते भारतस्य ॥ १६७ ॥

*इति माधवविरचिते श्रीतिलकयशोऽर्णवे षष्ठ्यब्दीपूर्तिसमारोहनामा त्रिपञ्चाशत्तमस्तरङ्गः ।*

## चतुष्पञ्चाशत्तमस्तरङ्गः

तिलकस्य गतां वृद्धिं दृष्ट्वा लोकेषु मान्यताम् ।
विवेकसेतुर्निर्भिन्नः क्रोधाब्धेरधिकारिणाम् ॥ १ ॥

केनोपायेन तिलकं स्वतन्त्रमपि दुर्बलम् ।
सत्वरं शक्यते कर्तुं शासनस्याधिकारिभिः ॥ २ ॥

इति चिन्ताग्निसंतप्ताश्चितारूढशया इव ।
प्रशासनस्य मुख्यस्था अधीशाश्चोपदेशकाः ॥ ३ ॥

स्थापनेन स्वराज्याप्त्यै स्व० संघस्य नवापदः ।
यत्नैर्न्युत्पादिता लिप्सोर्युद्धाय जनसंमतिम् ॥ ४ ॥

प्रशासनस्य साहाय्यं मित्रराष्ट्रजयाय वै ।
तिलकेन मुहुः प्रोक्तं कर्तव्यमिति संप्रति ॥ ५ ॥

अधिकारपदं सैन्ये देयमेवाङ्ग्लिकैः समम् ।
क्षात्रधर्मगुणोपेतभारतीयाय सत्वरम् ॥ ६ ॥

विश्वासाद् वर्धते निष्ठा विश्वासादादरस्तथा ।
विश्वासाद् वर्धते चैक्यं यशःप्राप्तिस्ततः सुखम् ॥ ७ ॥

तिलकस्य विचारौघो ज्ञात एवाधिकारिभिः ।
पूर्वग्रहेण दुष्टास्तु तत्स्वीकृत्यै न ते क्षमाः ॥ ८ ॥

मलयुक्तो यथादर्शः प्रतिबिम्बाय नोचितः ।
दोषयुक्तो तथा प्रज्ञा संस्कारार्हा न विद्यते ॥ ९ ॥

प्रान्ताधीशो मन्त्रिणश्च निश्चिक्युर्वाङ्नियन्त्रणम् ।
अवश्यं तिलकस्येति तद्द्वेषभ्रष्टबुद्धयः ॥ १० ॥

द्वाविंशेऽहनि मासस्य जुलैनाम्नो ददौ स्वयम् ।
प्राधिपश्चे स्वास्थ्यरक्षाप्रमुखो न्यायमन्दिरे ॥ ११ ॥

तिलको बेळगावे च नगरे निजभाषणे ।
शासकं गर्हयामास तथा शासनपद्धतिम् ॥ १२ ॥

तेनाप्रीतिः शासनस्य महाराष्ट्रेऽप्यवर्धत ।
राजद्रोहाख्यापराधी तिलकोऽभूदसंशयम् ॥ १३ ॥

तथापि शासनं तस्य देहदण्डं न वाञ्छति ।
तिलकाय प्रदेयाज्ञा कर्तुं भाषणसंयमम् ॥ १४ ॥

वर्षमेकं शासनेन प्रार्थिपत्रे निवेदितम् ।
अन्यच्च तेन कर्तव्यं शासनस्यास्त्यभीप्सितम् ॥ १५ ॥

वाक्संयमस्य काले च दातव्यं प्रतिभूद्वयम् ।
सहस्रगुणितं पञ्चाशद्रूप्यं यत् प्रदायि तत् ॥ १६ ॥

यदुक्तं प्रार्थिनः पत्रे न तत्तिलककृत्पदम् ।
स्वामी यन्त्रालयस्यास्ति संपन्नस्तिलकः स्वयम् ॥ १७ ॥

केसरीवृत्तपत्रस्य प्रचारोऽपि फलप्रदः ।
जनास्ते प्रददुर्लक्षं वर्धापनदिनोत्सवे ॥ १८ ॥

न्यायाधीशप्रेषितं तमादेशं तिलकं प्रति ।
बोधाय पाठकानां च संक्षेपेण वदाम्यहम् ॥ १९ ॥

कालं समादिशद् न्यायाधीश आदावुपस्थितम् ।
दिने प्रोक्ते तथा काले पुण्यपुर्न्यायमन्दिरे ॥ २० ॥

प्रार्थिपत्रोत्तरं दातुमाविष्कर्तुं सकारणम् ।
अनिवार्यं कथं वा तत् प्रमाणं तत्समर्थनम् ॥ २१ ॥

हॅंचनामा पुण्यपुर्यां यूरोपादागतो नरः।
योजितः शासनेनासौ न्यायाधीशस्य कर्मणि ॥ २४ ॥

गायूडरः पुरतस्तस्य निदधे प्रार्थिपत्रकम्।
प्रवर्तिताविलम्बेन सूचना न्यायमूर्तिना ॥ २५ ॥

दिनत्रयं सूचना सा तिलकाय न दर्शिता।
ययौ स्वास्थ्यस्याधिकारी तिलकस्य गृहं गतः ॥ २६ ॥

दर्शयामास तिलकं सूचनां तामम‌ङ्गलाम्।
तिलकः स्वाक्षरीं चक्रे तत्संप्राप्तिनिदर्शिकाम् ॥ २७ ॥

षण्ढ्यब्दपूर्तेर्बालस्य समारोहाय सद्मनि।
संकुलस्तन्निवासोऽभूत् पूजार्हातिथिभिस्तदा ॥ २८ ॥

ज्ञातमेतद् रक्षकाणामपि मुख्याधिकारिणाम्।
उत्सवस्य दिनं योग्यं मेनिरे ते कुबुद्धयः ॥ २९ ॥

हॅंचादेशं स्वयं दत्त्वा तिलकं गर्हितुं तदा।
तिरस्कृत्यातिथीन् सभ्यांश्चोत्सवाय समागतान् ॥ ३० ॥

आसुरीं वृत्तिमापन्ना मलविघ्नाभिकाङ्क्षिणः।
आङ्ग्लभृत्याः पदस्थास्ते विचेरू राक्षसा इव ॥ ३१ ॥

दाजीदादाह्वयं वैद्यः शिवरामादयस्तदा।
समारोहार्थमायाता जोशीकेळकरादिभिः ॥ ३२ ॥

साश्चर्यं च सहोद्वेगमपश्यन्नधिकारिणाम्।
उपस्थितिं समारोहस्थाने प्रक्षोभकारिणीम् ॥ ३३ ॥

मनःसंयमनं कृत्वा तूष्णीं भूत्वा व्यलोकयन्।
बुद्ध्या यद्विधाश्चेष्टाः कृतास्तैर्मर्कटोचिताः ॥ ३४ ॥

विपरीतं च तत् सर्वं मेनिरे स्थिरबुद्धयः।
स्वास्थ्यरक्षणसंयोऽर्थं प्रवृत्तः स्वास्थ्यनाशने ॥ ३५ ॥

काले तस्मिन् स्थले तस्मिन् यस्मिन् हि भविताद‍रः।
तिलकस्यापमानं च गत्वा कुर्मस्तदालयम् ॥ ३६ ॥

एवं कृतप्रतिज्ञास्ते कदर्थीकृतसत्पथाः।
मलस्थानमिव श्वानः प्राविशंस्तिलकालयम् ॥ ३७ ॥

अन्तःक्षुब्धाः बहिःशान्ताः सुप्तानलनगा इव।
शुचकाः स्थविराश्चासन् स्तब्धा सर्वेऽपि संयताः ॥ ३८ ॥

अन्योन्यमवदन् सर्वे निर्गतेष्वधिकारिषु।
मतिभ्रंशो विनाशस्य पूर्वचिह्नमिति स्मृतम् ॥ ३९ ॥

कीटग्रस्तो यथा वृक्षः स्वल्पकालेन नश्यति।
शासनं मत्सरग्रस्तं तद्वच् शीघ्रं विनश्यति ॥ ४० ॥

आक्षिप्तो येन कोपेन तिलकः स्वास्थ्यरक्षकैः।
अभियोगे च तेनैवावामाक्षिप्तावुभौ पुरा ॥ ४१ ॥

लेखकश्च तपस्वी च यवत्माळनिवासिनौ।
नियन्त्रितौ वर्षमेकं मध्यप्रान्ताधिकारिभिः ॥ ४२ ॥

अभियोगे नागपूरश्रेष्ठन्यायासनस्थितः।
विविन् बोसोऽतिविख्यातः पण्डितो निर्णयं ददौ ॥ ४३ ॥

स निर्णयो वाजिना च दादाभ्यां च विलोकितः।
किंचित् तस्योपयुक्तत्वं जातं साक्षिपरीक्षणे ॥ ४४ ॥

न्यायालये संप्रदत्ते प्रार्थिपत्रेऽधिकारिणा।
पक्षकालावधिश्चासौ व्यतीतः प्रगतिं विना ॥ ४५ ॥

साक्षिणां वै समारब्धं वेलिंगेन परीक्षणम्।
प्रार्थिपक्षापेक्षितानामागस्टे सप्तमेऽहनि ॥ ४६ ॥

आसीद् वै प्रथमो दात्रे द्वितीयष्ठाकुराभिधः।
आद्यो लघुलिपिज्ञश्च सभाव्याख्यानलेखकः ॥ ४७ ॥

संचरन्ति यथा दूता यमराजस्य भूतले।
लिखन्तः प्राणिनां सर्वाश्चेष्टा लघुतमाक्षरैः ॥ ४८ ॥

तथैव वै शासनस्य दूता राज्ये दिवानिशम्।
संकेतभाषया चेष्टा दैनंदिन्यामवर्णयन् ॥ ४९ ॥

शङ्कास्पदानां लोकानां शासनस्य विरोधिनाम्।
लोकधुरीणानां स्वातन्त्र्यध्येयवादिनाम् ॥ ५० ॥

गृहे तथाप्तसंवादे व्याख्यानेषु सभास्थले।
वचनानि च वै तेषां लघुलिप्या लिखन्ति ते ॥ ५१ ॥

लघुलिप्या च लिखितं तिलकस्य सुविश्रुतम्।
व्याख्यानं तत् लिपिकेन प्रमाणार्थं पुरस्कृतम् ॥ ५२ ॥

अभियक्त्रा प्रतिपृष्टौ तिलकस्य यथाविधि।
ज्ञातुं तेषां महाराष्ट्र्यां लिपिलेखनपाटवम् ॥ ५३ ॥

द्वितीयस्यापि नैपुण्यं महाराष्ट्र्याङ्ग्लभाषयोः।
भाषान्तरितशब्दानां युक्तत्वं चार्थवाहने ॥ ५४ ॥

समाप्तमह्नि नवमे लेखनं प्रार्थिसाक्षिणाम्।
ततोऽलिखद् न्यायमूर्तिस्तिलकस्य निवेदनम् ॥ ५५ ॥

अभियक्ता जिना प्राह न्यायाधीशमनन्तरम्।
नैच्छत् तिलको दातुं साक्षिणः स्वसमर्थकान् ॥ ५६ ॥

प्रार्थिपक्षस्याभियक्ता वेनिंगो निजभाषणम्।
समारेभे दर्शयितुं दोषांस्तिलकभाषणे ॥ ५७ ॥

अत्र प्रमादा बहवो यदि भाषान्तरे कृताः।
न वाक्यार्थो भवेद् भिन्नः प्रमादैस्तैः कदापि च ॥ ५८ ॥

तद्भाषणस्य संक्षेपमहमद्य करोमि वै।
छिद्रमविष्टः किरणो रविबिम्बं यथा भुवि ॥ ५९ ॥

भारतस्य स्थितिस्तेन दास्यशब्देन वर्णिता ।
उत्पादितं दास्यमाङ्ग्लैस्तिलकः प्राह भारते ॥ ६० ॥

नेयमत्युक्तिरेवास्ति मिथ्योक्तिः किंत्वसंशयम् ।
निर्मातुमाङ्ग्लसंबन्धे वृत्तिं हि द्वेषमूलिकाम् ॥ ६१ ॥

अभ्यर्थना स्वराज्यस्य संघस्य स्थापनापि या ।
वैधावैधत्वचर्चां तां करिष्ये न तयोरिह ॥ ६२ ॥

तदर्थमप्यसंबद्धं भाषणस्य प्रयोजनम् ।
नास्त्येवेति च मन्येऽहं शासनाप्रीतिवर्धनम् ॥ ६३ ॥

स्वीकृताप्रीतिटीका विधिशास्त्रज्ञनिन्दिता ।
तथाप्याह स बेर्निगो यथार्था सेति तत्त्वतः ॥ ६४ ॥

दोषाविष्करणं यत्र केषांचिदधिकारिणाम् ।
तत्र हेतुः संभवति यत्तु शासनशोधनम् ॥ ६५ ॥

विनिर्देशो भवेद् यत्र निन्दाप्रचुरभाषया ।
प्रान्तस्याधिपतेश्चापि सर्वेषामधिकारिणाम् ॥ ६६ ॥

तत्र निष्पद्यते द्वेषः शासनस्याखिलस्य च ।
राजद्रोहापराधो भवेत् तेनेत्यसंशयम् ॥ ६७ ॥

नियन्त्रितं भारतशासनं स-
द्विंग्लंडदेशस्थितमन्त्रिसंघे ।
पंतप्रधानेन नियोजितेन
समासदैकेन ब्रिटिशसभायाः ॥ ६८ ॥

निरङ्कुशाधिकारित्वं तस्येति तिलकोऽब्रवीत् ।
वस्तुस्थितिविपर्यासः कृतस्तेन स्वभाषणे ॥ ६९ ॥

मर्यादा मन्त्रिणः शक्तेः पारंपर्येण निश्चिताः ।
जानन्त्याङ्ग्लविधानज्ञाः संप्रदायविदस्तथा ॥ ७० ॥

उपस्थितेऽत्र तिलक उचितं स्यात् तदुत्तरम् ।
स्वभाषणोत्थशङ्कानां समाधानाय मन्मते ॥ ७१ ॥

युक्तिवादः प्रतिनिधेर्वैधोऽप्यसमञ्जसः ।
अब्रवीत् सहसोत्थाय जिना विधिविदां वरः ॥ ७२ ॥

भवद्भिर्नोत्तरं देयं शङ्कानां न्यायमन्दिरे ।
करिष्येऽहं च तत्सर्वं भवद्भिर्यद् निरूपितम् ॥ ७३ ॥

एवं संप्रार्थितो बालो मयादौ प्रथमे दिने ।
एवं प्रत्युत्तरं दत्वा स्वासनस्थो जिनाभवत् ॥ ७४ ॥

प्रशासनाधिपस्तैवमुक्त्वान्ते न्यायकारिणम् ।
अवदत् प्रार्थनापत्रे प्रदेयं याचितं च यत् ॥ ७५ ॥

उपविष्टे तु बेर्निग उदतिष्ठत् तदुत्तरम् ।
*द्वितिहासुत्तप्रतिद्वन्द्वी तिलकस्य समर्थकः ॥ ७६ ॥*

भाषणानां समग्राणामाशयो ज्ञायते कथम् ।
सुयोग्यसाधनाभावात् संप्रति न्यायमूर्तिना ॥ ७७ ॥

अधिकारपदस्थानां निर्भयं दोषदर्शनम् ।
व्याख्यानेषु तु बालस्य प्राधान्येनैव विद्यते ॥ ७८ ॥

एकस्मादधुना तेषां तद्युक्तत्वं प्रदर्शये ।
विश्वासोऽस्ति दृढोऽस्माकं भवन्न्यायविवेकयोः ॥ ७९ ॥

अत एव करिष्यामि तद्व्याख्यानसमर्थनम् ।
वक्तुर्मे पक्षकारस्य निर्दोषत्वप्रसिद्धये ॥ ८० ॥

व्याख्यानटिप्पणीः कर्तुं प्रेषिता लघुलेखकाः ।
मनोव्रूरवैव गच्छन्ति तिलकप्रतिकूलया ॥ ८१ ॥

प्रविशन्ति समास्थानं स्वास्थ्यरक्षणहेतुना ।
दलस्य स्वास्थ्यरक्षायाः सैनिका बहुसंख्यया ॥ ८२ ॥

प्रशासनमनोवृत्त्या भवत्येव प्रदर्शनम् ।
तिलकद्वेषकारिण्याः संप्राप्तानां सभास्थलम् ॥ ८३ ॥

लिख्यते केवलं तत्र कठोरं भाषणेषु यत् ।
यद्बुधोपेक्ष्यते सौम्यं मृदु वा लघुलेखकैः ॥ ८४ ॥

दीर्घीकरणयत्नश्च लघुलेखस्य तापदः ।
संभ्रमात् स्मृतिदोषाश्च प्रमादोत्पत्तिकारकः ॥ ८५ ॥

एभिरन्यैश्चान्तरायैर्दुष्करं सत्यशोधनम् ।
संदर्भरहितैर्वाक्यैः पदैर्वा न कदाचन ॥ ८६ ॥

प्रवक्तुराशयज्ञानं स्याद् श्रोतुः पाठकस्य वा ।
तस्य हेतुपरिज्ञाने सामग्रन्थावलोकनम् ॥ ८७ ॥

एकान्ते मननं तस्य निराग्रहविवेचनम् ।
आलोचनं प्रसङ्गस्य परिस्थित्या विलोकनम् ॥ ८८ ॥

आवश्यकानि चैतानि भवेत् सुलभ आशयः ।
स्पष्टो यथा ह्यामलको निजहस्ततलस्थितः ॥ ८९ ॥

आङ्ग्लीयैर्भारतेऽस्माकमधिकारपदस्थितैः ।
ध्रियते या शासनस्य शक्तिः सा हिन्दवासिभिः ॥ ९० ॥

प्राप्तव्यैवेति युद्धान्ते जगाद तिलको मुहुः ।
अस्तु सिंहासने सम्राट् लंदने जनपूजितः ॥ ९१ ॥

न प्रारब्धं क्रान्तिचक्रं शान्तमार्गावलम्बनम् ।
उच्चैरुद्घोषितं तेन सभामध्ये स्वभाषणे ॥ ९२ ॥

निर्मात्रिका स्वराज्यस्य पार्लमेंटाभिधा सभा ।
इति स्वभाषणे स्पष्टं सभायां तिलकोऽब्रवीत् ॥ ९३ ॥

गौरवार्थं न वै वाञ्छो द्वेष्टि ब्रिटनवासिनम् ।
यूरोपामेरिकाख्यं वा नरं वाफ्रिकजनम् ॥ ९४ ॥

भारते प्रथमश्रेण्यामधिकारपदस्थिताः ।
आङ्ग्लीयाः प्रायशः सर्वे हंहो शासननीतितः ॥ ९५ ॥

संचालकाः शासनस्य पद्धतीनां प्रवर्तकाः ।
पद्धतीनां ततो गर्हा तेषां भवति दुःसहा ॥ ९६ ॥

त एव जनका आसन् प्रणाल्या भारतेऽखिले ।
कारणं तद् विषादस्य ज्ञातव्यं न्यायमूर्तिना ॥ ९७ ॥

तालिध्वनिः प्रमाणं न व्याख्याने प्रेक्षकैः कृतः ।
राजद्रोहमनोवृत्तेरुद्भवस्य सभास्थले ॥ ९८ ॥

नैव सिद्धः कोऽपि दोषः प्रार्थिपत्रप्रदर्शितः ।
निर्दोषस्तिलकस्तस्मादित्येव न्यायनिर्णयः ॥ ९९ ॥

प्रवर्तितं विश्वयुद्धं दीनस्वातन्त्र्यरक्षकम् ।
वाक्स्वातन्त्र्यं प्रधानाङ्गं तस्येति श्रूयते बुधैः ॥ १०० ॥

निर्णयेन भवेद् रक्षा तत्त्वस्यास्येति कामये ।
न्यायाधीशप्रदत्तेन न्यायशास्त्रानुसारिणा ॥ १०१ ॥

जिना चक्रे भाषणान्तं शंसितस्तिलकानुगैः ।
तस्य वादपटुत्वार्थं मासस्य दशमेऽहनि ॥ १०२ ॥

समादिशज्ज् जनान् सर्वान् न्यायाधीश उपस्थितान् ।
वासरे द्वादशे मास आगस्टे निर्णयं ददे ॥ १०३ ॥

उक्ते दिनेऽपि संप्राप्ता बहवस्तिलकानुगाः ।
शुश्रूषवो मतं न्यायाधीशस्य न्यायमन्दिरम् ॥ १०४ ॥

शुचितवादो विर्निगस्य न्यायाधीशस्य संमतः ।
श्रोतॄणामभवत् स्पष्टं निर्णयांशस्य वाचनात् ॥ १०५ ॥

सामग्र्येण समालोच्य भाषणानि मतं मम ।
अस्त्येव तिलको दोषी राजद्रोहापराधकृत् ॥ १०६ ॥

अनेनैवापराधेन तिलको दूषितः पुरा ।
द्विवारं न्यायमुख्येन प्रेषितो बन्धनालयम् ॥ १०७ ॥

नेष्यते दण्डनं तस्य प्रान्तेशेन दयालुना ।
अपेक्ष्यतेऽब्दपर्यन्तं निवृत्तिस्तस्य भापणात् ॥ १०८ ॥

स्वयं च तेन दातव्यं पत्रकं स्वाक्षरीयुतम् ।
सहस्रं विंशतिगुणं निजशायित्वदर्शकम् ॥ १०९ ॥

द्वयं प्रतिभुवोः स्यादेकैको दशसहस्रदः ।
चक्रुः सर्वे यथादिष्टास्त्रयस्ते न्यायमन्दिरे ॥ ११० ॥

सत्यहस्तानि पत्राणि प्रदाय तिलकादयः ।
तथैव प्रेक्षकाः सर्वे निर्जग्मुर्न्यायमन्दिरात् ॥ १११ ॥

सन्दोपो निर्णयस्तस्यावरन्यायपतेरिति ।
निजनिर्दोषितासिद्ध्यै श्रेष्ठन्यायालयं प्रति ॥ ११२ ॥

अवश्यं गमनं मेने तिलको न्यायकोविदः ।
तन्निर्णयाक्षेपपत्रमुच्चन्यायासनेऽर्पितम् ॥ ११३ ॥

आगस्टे पञ्चलेनाम्ना त्रयोविंशे दिने तदा ।
स्वीकृतं पूर्णचर्चायै न्यायमूर्तिद्वयेन तत् ॥ ११४ ॥

पक्षद्वयाधियन्तॄणां भापणार्थं नियोजितः ।
न्यायकर्माधिपुरुषेणाष्टमो वारो नवेश्वरे ॥ ११५ ॥

न्यायमूर्ती स्वासनस्थौ शहार्थचलराभिधौ ।
पक्षद्वयाधियन्तॄणां श्रोतुं पक्षसमर्थनम् ॥ ११६ ॥

पूर्वोक्तयुक्तिवादस्य पुनरुक्तिरिहाभवत् ।
उभयोः पक्षयोर्ज्येष्ठाधियन्त्रोः समर्थने ॥ ११७ ॥

पुनरुक्तिभयादुक्तं वदामि न सविस्तरम् ।
तस्य संक्षिप्तरूपेण मुख्यतत्त्वानि दर्शये ॥ ११८ ॥

आरडीनापसिद्धान्ताः प्रमादा इति स्वीकृतम् ।
अधोन्यायालयेशेन प्रोक्ता ये निजनिर्णये ॥ ११९ ॥

स्ट्राचीकृताप्रीतिमाप्यस्वीकृतिर्नोचिताभवत् ।
अप्रमाणमिति व्यक्तं तदुच्चन्यायसंस्थया ॥ १२० ॥

शासनाधिकृतोभेदः योऽधिपक्षपा प्रदर्शितः ।
सर्वथा सोऽपि मन्तव्यो न्यायाधीशेन निर्णये ॥ १२१ ॥

आक्षिप्तजनदोषस्य हेतोः कुर्याद् विनिश्चितिम् ।
तद्भाषणानि पूर्णानि वाचयित्वा निराग्रहम् ॥ १२२ ॥

आसीद् पालस्य यै हेतुः शुद्ध एवेति भाषणे ।
मतं प्रदर्शितं न्यायमूर्तियुग्मेन निर्णये ॥ १२३ ॥

दण्डन्यायालयादेशो न योग्य इति वै मतम् ।
सुव्यक्तं न्यायमूर्तिभ्यां शब्दैः स्पष्टैश्च निश्चितैः ॥ १२४ ॥

बालकस्य घातिनी स्वराज्यसंघरूपिणः
शासनस्य दुष्टबुद्धिपूतना समागता ।
दण्डरूपमुल्बणं विषं बिभर्ति या स्तने
सत्यदानतत्परा ददौ च तन्मुखे स्तनम् ॥ १२५ ॥

अर्भकः पपौ पयो गराग्वितं स्तनस्थितं
प्राणवायुपञ्चकं मृतासुरी च तत्क्षणम् ।
संघबाल आययौ बहिर्विहाय तच्छवं
न्यायदेवसंस्तुतो जयोऽस्तु घोषणाम्बरे ॥ १२६ ॥

इति माधवविरचिते श्रीतिलकयशोऽर्णवे स्वराज्यसंघविजयनामा चतुष्पञ्चाशत्तमस्तरङ्गः ।

## पञ्चपञ्चाशत्तमस्तरङ्गः

तिलकस्यानुकूलेन निर्णयेन प्रमोदिताः ।
शशंसुः सकलाँल्लोका जिनादिविधिपण्डितान् ॥ १ ॥

न्यायाधीशद्वयस्यापि चक्रिरे तेऽभिनन्दनम् ।
ययोर्यैर्निर्णयाज्जाता वाक्स्वातन्त्र्यस्य घोषणा ॥ २ ॥

संघकार्यप्रसारस्य मार्गो निष्कण्टकोऽभवत् ।
युयुत्सूंश्चोदयामास यात्रायै च स निर्णयः ॥ ३ ॥

अभिनन्दनसंदेशवृष्टिस्तिलकवेश्मनि ।
जलधारेव मेघस्य दिनत्रयमखण्डिता ॥ ४ ॥

प्रफुल्ला भारते लोका निर्णयेन तदा तथा ।
ग्रीष्मे पयोऽभिषेकेण कानने तरवो यथा ॥ ५ ॥

आवश्यको हि संचारस्तिलकस्येति तेऽब्रुवन् ।
निमन्त्रणं ददुः केचित् कर्णाटकविदर्भयोः ॥ ६ ॥

दृष्ट्वोपयुक्ततां तस्य स्वीकर्तुं तद् मनो दधे ।
स्थलानि कानिचिद् मुख्यैः कर्णाटकविदर्भयोः ॥ ७ ॥

गमनार्थं निश्चितानि संघकार्याधिकारिभिः ।
मुद्रितं तिलकादेशात् प्रवासपरिपत्रकम् ॥ ८ ॥

विनिर्मातुं संघदार्ढ्यं द्रव्यं संचेतुमेव च ।
स्वराज्याप्तिप्रयत्नस्य दातुं प्रबलचोदनाम् ॥ ९ ॥

द्विधा कालो विभक्तोऽभूत् पूर्ववर्ती तथोत्तरः ।
अधिवेशनकालस्य लखनौराष्ट्रसंसदः ॥ १० ॥

तरङ्गेऽस्मिन् वर्णयेऽहं लखनौस्थानमेलनम् ।
स्वदेशोन्नतिरक्तानामासीद् यत्र सुदर्शनम् ॥ ११ ॥

ऊनविंशशते शाकेऽधिके षोडशसंख्यया ।
सभाया हिन्दराष्ट्रस्य जातं चेन्नाधिवेशनम् ॥ १२ ॥

तापीतीरे गता भङ्गमस्माकं राष्ट्रदेवता ।
साङ्गा सशक्तिका तीरे गोमत्याः सायुधाभवत् ॥ १३ ॥

महासभाया वै मूर्तिः खण्डिता सुरते पुरा ।
तद्भक्तानां प्रवाहोऽपि तेनातिकृशतां गतः ॥ १४ ॥

भाले तिलकवैगुण्याद् नारी सौभाग्यवर्जिता ।
नादरार्हा कुलीनापि यथा मङ्गलकर्मसु ॥ १५ ॥

तथा तिलकहीनत्वात् सभाङ्गनाप्यनादृता ।
अवधायद्वयर्षाणां भारते नष्टवैभवे ॥ १६ ॥

समायातः शुभः कालः लखनौसंज्ञके स्थले ।
संयोगस्य वियुक्तानां स्वबन्धूनां सुमङ्गलः ॥ १७ ॥

युक्ता प्रतिनिधित्वे ये ते भक्ता राष्ट्रसंसदः ।
कर्णाटकमहाराष्ट्रविदर्भेभ्यः प्रतस्थिरे ॥ १८ ॥

होमरूलस्पेशलाख्यविशेषाग्निरथेन वै ।
लखनौपुरं गन्तुकामा बहवस्तिलकानुगाः ॥ १९ ॥

मुम्बय्यामुद्गतं स्रोतो देशभक्त्या प्रपूरितम् ।
मार्गे प्राप विशालत्वं देवनद्याः प्रवाहवत् ॥ २० ॥

पयोष्णी संगता यत्र तापीसंपूतवारिभिः ।
स्थले भुसावळे तस्मिन् विदर्भप्रेरिता नदी ॥ २१ ॥

सेवकानां भारतस्य मुम्बानद्यां समाविशत् ।
संयोगो हर्षदः सोऽभूत् त्रिवेणीसंगमोपमः ॥ २२ ॥

विशेषाग्निरथे प्राप्ते प्रशस्तं स्थानकं प्रति ।
लोका उदीरयामासुस्तिलकस्य जयोऽस्त्विति ॥ २३ ॥

मुहूर्तद्वयपर्यन्तं नादेनापूरितं नभः ।
न हि कस्याप्यन्यशब्दो जातः श्रवणगोचरः ॥ २४ ॥

तिलकस्यासने वृष्टिः सुमनानां तदाभवत् ।
स्रजां विविधवर्णानां प्रसूनानां च राशयः ॥ २५ ॥

गणेशबालसंयोगस्तद्भक्तानन्दवर्धनः ।
सुदुर्लभस्तत्र जातो यथोमेशरमेशयोः ॥ २६ ॥

आसन् मुख्या रथे तस्मिंस्तिलकस्यानुयायिनः ।
कर्णाटकमहाराष्ट्रविदर्भेषु निवासिनः ॥ २७ ॥

ध्वजः स्वराज्यसंघस्य स्थापितोऽग्निरथोपरि ।
साठेऽभिधैः स्थानके वै तदा संघस्य चालकैः ॥ २८ ॥

गीतमुच्चस्वरैः सर्वै राष्ट्रगीतं सुमङ्गलम् ।
वन्देऽहं मातरं शब्दत्रयेणापूरितं नभः ॥ २९ ॥

प्रस्थितो जययात्रायै नूनं तिलक उत्तराम् ।
पथि स्वच्छजिनीयुक्तः पौरजानपदावृतः ॥ ३० ॥

विदर्भादागताः केचिद् द्वितीयश्रेणियात्रिकाः ।
नोचितं लेभिरे स्थानं पूर्वं यच्च विनिर्णितम् ॥ ३१ ॥

केचित् पुण्यपुरीशिष्टास्तेषां स्थानेषु संस्थिताः ।
पृष्टः साठे मया किं न स्वप्रश्येत परागमनम् ॥ ३२ ॥

अधोमुखोऽवदत् साठे यात्राकार्यधुरंधरः ।
समयेऽस्मिन् न तावत्र किंचित् प्रष्टुं समुत्सहे ॥ ३३ ॥

दशास्पदं विदर्भस्थान् मध्यमश्रेणियात्रिकान् ।
समाश्वास्य तान् सर्वान् कथयन्नाह मां प्रति ॥ ३४ ॥

तथैव यदि शक्यं चेदागच्छतु भवानपि ।
एतैः सह स्वल्पकालं वार्तालापसुखाय च ॥ ३६ ॥

कविवर्यो डाउसंज्ञो वर्तते तेषु बुद्धिमान् ।
काव्यशास्त्रविनोदस्य लाभोऽपि भवतां भवेत् ॥ ३७ ॥

तेभ्यो यदधिकं द्रव्यं प्राप्तं मध्यमभाटकात् ।
शीघ्रं भवद्भिस्तत् सर्वं प्रतिदेयमयाचितम् ॥ ३८ ॥

उक्त्वाहं मध्यमश्रेण्यां मित्रैः सह यदा स्थितः ।
प्रसन्ना अभवन् सर्वे विषण्णाः प्रथमं यदि ॥ ३९ ॥

वादोऽसौ संशयोत्पादी साम्ना चान्तं गतो यदा ।
उपलब्धा मया शान्तिर्निद्रा च सुखदायिनी ॥ ४० ॥

खांडवास्थानकं प्राप्तो रथः प्रातर्यदा तदा ।
पेयं चहादिकं दत्तं तत्रस्थैस्तिलकानुगैः ॥ ४१ ॥

अतिथिभ्यः प्रवासिभ्यः सर्वेभ्यः प्रेमपूर्वकम् ।
स्रजं समर्पयामासुस्तिलकाय च गुच्छकम् ॥ ४२ ॥

रथस्थैर्बहुभिर्दृष्टः सातपुडाख्यपर्वते ।
द्रौणिना मणिहीनेन पूत आशीर्गडाभिधः ॥ ४३ ॥

स्वस्थानेषु स्थितेष्वेव प्रवासे हरदां प्रति ।
खांडवास्थानकाद् मार्गे विशेषानलवाहने ॥ ४४ ॥

नभोमध्यगते भानौ स्थानकं हरदाभिधम् ।
स्वनं कुर्वन् रथो यातो जनानुत्साहयन्निव ॥ ४५ ॥

महाप्रदर्शनं दृष्टं सुरम्यं स्थानकाङ्गने ।
पत्रपुष्पफलादीनां रङ्गावलिसुशोभिते ॥ ४६ ॥

साल्पेकरादिभिर्मित्रैः प्रार्थितास्तिलकादयः ।
अवातरन् रथात् सर्वे कर्तुं षड्रसभोजनम् ॥ ४७ ॥

तुण्डयोदनं च वटकं तैलान्नं चान्द्ररोचकम् ।
जिलेबिस्वादुमिष्टान्नं भक्षितं च यथारुचि ॥ ४८ ॥

आतृप्तिभक्ष्यैः कैश्चित् कर्णाटकविदर्भयोः ।
सीताकान्ताभिरामस्य नामस्मरणपूर्वकम् ॥ ४९ ॥

ताम्बूलं भोजनान्ते च मुखशुद्ध्यै प्रवासिने ।
आतिथ्यकुशलैर्दत्तं प्रत्येकं तैः समञ्जसैः ॥ ५० ॥

समायातान् समाधातुं स्थानकप्राप्तबान्धवान् ।
अनुगृह्णातु बोधेन प्रार्थितस्तिलकस्तदा ॥ ५१ ॥

तिलकोऽल्पाक्षरं वाक्यमुवाच विपुलार्थकम् ।
यत्नवान् यश आप्नोति स्वराज्यासिमहोद्यमे ॥ ५२ ॥

राष्ट्रोद्धारस्य कार्यस्य भारः सर्वजनोपरि ।
तस्मादावश्यको यत्नः सर्वेषामेव सर्वथा ॥ ५३ ॥

गोवर्धनोद्धारणाय गोपालैः स्वकरस्थिताः ।
उच्छ्रिता यष्टिकाः सर्वैः श्रीकृष्णसहचारिभिः ॥ ५४ ॥

कृष्णाङ्गुलीं बलं सर्वं प्रविष्टं व्रजवासिनाम् ।
रक्षितं गोकुलं तेन महापर्जन्यसंकटात् ॥ ५५ ॥

इंद्र एव पराभूतः संहत्या व्रजवासिनाम् ।
भवन्तु संहताः सर्वे संहतिः कार्यसाधिका ॥ ५६ ॥

स्वभाषणं समाप्यैवं तिलकः स्वानुयायिभिः ।
आरुरोह रथं शीघ्रं कर्तुं स्वासनसंश्रयम् ॥ ५७ ॥

इटारसीदुर्शंगाबादभोपालविदिशाबिना- ।
शासीत्यादिस्थानकेषु लोकैर्यालोऽभिनन्दितः ॥ ५८ ॥

पुष्पहारैश्चोपहारैः सुफलानां च सत्कृतः ।
दक्षे वितरणं तेषां फड्नीसोऽनन्तनामकः ॥ ५९ ॥

आविवेश रथोऽस्माकं प्रभाते नववादने।
स्थानकं थानपूराख्यं गङ्गातीरस्थमुत्तमम् ॥ ६० ॥

व्यापारोद्यमकेन्द्रं तत् श्रेष्ठं यच्चोत्तरापथे।
द्रष्टुं याता असंख्यातास्तिलकं राष्ट्रनायकम् ॥ ६१ ॥

स्वीचक्रुस्ते तदातिथ्यं सत्कारं तिलकादयः।
तिलकेनाग्रहात् तेषां कृतं तत्राल्पभाषणम् ॥ ६२ ॥

ऊचुरुच्चैर्जनाः सर्वे प्रस्थितेऽग्निरथे ततः।
जयतात् तिलको नेता वन्दे मातरमित्यपि ॥ ६३ ॥

मध्याह्नसमयात् किंचित् पूर्वमग्निरथोऽविशत्।
लखनौस्थानके भव्ये संघध्वजसुशोभितः ॥ ६४ ॥

सध्वजे तै रथे दृष्ट्वा जगर्जुर्जयघोषणाः।
तिलकस्य स्वागताय सहर्षं पुरवासिनः ॥ ६५ ॥

अम्भोनिधिरिवोद्वेलः प्रासरल् लोकसागरः।
क्षुब्धो भूमिं स्थानकस्य सशब्दोऽन्तर्बहिःस्थिताम् ॥ ६६ ॥

परीवृतो रथो लोकैः कृताश्च सुमवृष्टयः।
तिलकस्थितकक्षान्तःप्रविष्टैर्दर्शनोत्सुकैः ॥ ६७ ॥

सेवकैः स्थानकायातैः खापर्डेतिलकावुभौ।
वाहनं प्रति कष्टेन नीतौ प्राङ्गणसंस्थितम् ॥ ६८ ॥

सूतश्चक्रसमीपस्थो विद्युद्यन्त्रस्य चालकः।
वेगं दातुं तदा येते तिलकेन प्रचोदितः ॥ ६९ ॥

प्रार्थितः स जनैः शब्दैर्मा त्वं चालय वाहनम्।
चक्रात् स्वहस्तमुत्थाप्य स तूष्णीं वाहने स्थितः ॥ ७० ॥

छिन्नं शस्त्रेण चक्रस्य रबरावरणं खलु।
लोकैस्तथापि तत्कर्म तदानीमभिनन्दितम् ॥ ७१ ॥

अधो यातावुभौ पूज्यौ तस्माद् वै यन्त्रवाहनात् ।
संप्रविष्टौ समानीतमन्यत् तुरगवाहनम् ॥ ७२ ॥

अस्मास्वपि तदा जातं शिष्टानां साधु संमतम् ।
विचारः कर्महेतोर्हि न्यायस्य निकषो भवेत् ॥ ७३ ॥

प्रश्नोऽयमतिगम्भीरो कूटः शास्त्रविदामपि ।
गीतासु भगवानाह गहना कर्मणो गतिः ॥ ७४ ॥

मानदण्डो न्यायविदां कर्माकर्मविनिर्णये ।
कर्तुर्हेतोर्विचारेण भिन्नत्वं नित्यमाप्नुयात् ॥ ७५ ॥

ऐच्छन् लोकाः स्वयं वोढुं तिलकारूढवाहनम् ।
तदर्थं ते विदुः सर्वे मोचितं यन्त्रवाहनम् ॥ ७६ ॥

अत एव जनैः सर्वैः यन्त्रहानिरुपेक्षिता ।
वाहनस्य द्वितीयस्य लोकैरश्वौ विमोचितौ ॥ ७७ ॥

धृत्वा सूत्रं स्वहस्तेन प्रोढुं तिलकवाहनम् ।
उत्साहेन रथो नीतो ललनीराजवर्त्मसु ॥ ७८ ॥

षण्डध्वनिः समुद्भूतो वाद्येभ्यस्तुमुलो गतः ।
कर्णभेदी दुन्दुभिभ्यो भुवमापूर्य चाम्बरम् ॥ ७९ ॥

नादं शङ्खाश्च घण्टाश्च देवावाहनलक्षणम् ।
निपादोच्चस्वनं चक्रुराध्मातास्ताडिता जनैः ॥ ८० ॥

समुत्थितो रजोराशिर्भुवो दौत्याय चागमत् ।
दुःस्थितेर्लोकपालेभ्यः प्रजायाः कथनाय नु ॥ ८१ ॥

पूजा विरचिता पुष्पधूपदीपैश्चतुष्पथे ।
नरपुङ्गवयोर्भक्त्या पौरैर्वन्यरथस्थयोः ॥ ८२ ॥

प्रत्युद्गतोऽर्धमार्गे वै मालवीयो महामनाः ।
कण्ठे समार्पयद् मालामुभयोः स्वागताय च ॥ ८३ ॥

विशापितो मालवीयो वाहने समुपाविशत् ।
विरेजिरे भ्राजमाना ब्रह्मविष्णुशिवोपमाः ॥ ८४ ॥

त्रिगुणत्वं त्रिवेण्यास्तदभिव्यक्तं तदा रथे ।
पावनत्वं च गङ्गायाः कालिन्द्याः कृष्णवर्णता ॥ ८५ ॥

गुप्ता च सह्यद्रिवाहिन्याः सरस्वत्या गतिर्हि सा ।
शुभशंस्यभवद् योगः दैवीयस्य च भाविनः ॥ ८६ ॥

अवलोक्य त्रयीं पुण्यां भक्त्यावनतकन्धराः ।
जनाः प्रासादसौधस्थाश्चक्रुः प्रेम्णाभिवादनम् ॥ ८७ ॥

अवाकिरंश्च पुष्पाणि लाजाः स्वादुफलानि च ।
दीपान् नीराजयामासुरथो यात्वा रथान्तिकम् ॥ ८८ ॥

प्राप्तुं स्थानं व्यतीयाय सार्धघण्टामितोऽवधिः ।
तिलकस्य निवासाय समित्या पूर्वयोजितम् ॥ ८९ ॥

धर्मशाला श्रेष्ठिमुख्यछेदिलालविनिर्मिता ।
सर्वेषां सुखवासाय सुविशालापि न क्षमा ॥ ९० ॥

उपस्थितान् जनान् बालो निबद्धाञ्जलिरब्रवीत् ।
आतिथ्येन वयं प्रीता लखनौपुरवासिनाम् ॥ ९१ ॥

देशोन्नत्यै लकूनवीभिरैक्यसंपादनाय च ।
भवितव्यं यत्नशीलैरित्यहं प्रार्थये मुहुः ॥ ९२ ॥

सभासदो विदर्भस्थाः प्रार्थिताः कार्यकारिभिः ।
विस्तविद्यालयं गन्तुं गोमतीतीरसंनिधम् ॥ ९३ ॥

भवतां न समावेशं विधातुमिह शक्नुमः ।
शालायाः स्थलसंकोचादब्रुवन् कार्यकारिणः ॥ ९४ ॥

गतास्तत्र विदर्भस्थाः सदस्या राष्ट्रसंसदः ।
तत्र तेषां निवासोऽपि प्रायशोऽभूद् हितप्रदः ॥ ९५ ॥

एकस्मिन्नेव विस्तीर्णे निवासोऽभूत् सभागृहे ।
सुखावहः समुचितः शताधिकसभासदाम् ॥ ९६ ॥

प्रबन्धो भोजनस्यापि शाकाहारोपजीविनाम् ।
सुलभश्चाल्पमूल्येन कृतः समितिसेवकैः ॥ ९७ ॥

विदर्भेस्यसदस्येषु बलवंतः सुविश्रुतः ।
चन्द्रपूरस्थोऽधिवक्ता कृती देशमुखान्वयः ॥ ९८ ॥

दक्षो दीर्घप्रवासेऽपि ब्राह्मण्यप्रतिपालने ।
आनीतः पाकनिष्पत्त्यै विप्रस्तैलङ्गदेशजः ॥ ९९ ॥

परिधाय महावस्त्रं बुभुजेऽन्नं कृताह्निकः ।
तत्प्रवासे दाजिवाख्यः सहभोजी सुहृद्वरः ॥ १०० ॥

संमीलिता भारतस्य देशसेवापरायणाः ।
सहस्रद्वयसंख्याका मण्डपे राष्ट्रसंसदः ॥ १०१ ॥

प्रतिमाभिः पूर्वगानामध्यक्षाणां सुशोभितः ।
ऐक्यप्रशंसिभिर्वाक्यैः स्वातन्त्र्योत्साहवर्धनैः ॥ १०२ ॥

मण्डपोऽलंकृतन्यासपीठयुक्तोऽतिशोभनः ।
आस्तां सिंहासने श्रेष्ठेऽध्यक्षयोर्यत्र सुन्दरे ॥ १०३ ॥

आसनानि परिष्ठानां रक्षितानि तदन्तिके ।
नेतृणां च प्रसिद्धानां प्रान्तसंस्थाधिनायताम् ॥ १०४ ॥

जगन्नारायणोऽध्यक्षोऽतिथिस्वागतसंसदः ।
समानयत् सभाध्यक्षं समारोहेण मण्डपे ॥ १०५ ॥

अग्रिमश्चरणं वृद्धं नेतृवृन्दपुरस्कृतम् ।
उत्थिताः सहसा सर्वे मण्डपस्थमसासदः ॥ १०६ ॥

आत्मा राष्ट्रसभाया यः सुरेन्द्रो राष्ट्रगीष्पतिः ।
पण्डितो मालवीयश्च वन्दितो हिन्दुबन्धुभिः ॥ १०७ ॥

मद्रासस्था विशांटाख्या देवी यस्याः सरस्वती ।
त्रिखण्डमण्डिता पूता भारतोद्धारवाहिनी ॥ १०८ ॥

मुम्बईस्थो जिना विद्वानिस्लामीयविभूषणम् ।
अधिपस्तावुभौ येन विशांटतिलकौ समौ ॥ १०९ ॥

श्रीनिवासाभिधः शास्त्री श्रेष्ठो भारतसेवकः ।
वैद्यः श्रीभारताचार्यो विद्वद्वर्येषु पूजितः ॥ ११० ॥

रङ्गनाथो विदर्भस्थः खापर्डे च बहुश्रुतः ।
हिन्दश्रीभालतिलकस्तिलको लोकवन्दितः ॥ १११ ॥

अनुक्ताश्चेतरे पूज्या व्यासपीठे विरेजिरे ।
वन्दे मातरमित्येतत् संगीतं मधुरस्वरैः ॥ ११२ ॥

प्रथमेऽहनि राष्ट्रीयसभाया अधिवेशने ।
भाषणे स्वागताध्यक्षो जगन्नारायणोऽब्रवीत् ॥ ११३ ॥

दर्शनाद् राष्ट्रभक्तानां तिलकस्य विशेषतः ।
जात आनन्दसंदोहो रसनावर्णनातिगः ॥ ११४ ॥

तेषां पादरजःपूता गोमतीतटमेदिनी ।
तन्मया देशभक्त्याभूद् रामभक्त्या यथा पुरा ॥ ११५ ॥

चतुर्दशे वत्सरान्ते श्रीरामः स्वपुरीं ययौ ।
तदानन्दाम्बुधौ मग्ना यथा साकेतवासिनः ॥ ११६ ॥

मातृत्रयीबन्धुयुग्मवसिष्ठादिपुरोधसः ।
सीतासौमित्रिसंयुक्तरामचन्द्रावलोकनात् ॥ ११७ ॥

प्रहृष्टास्तद्वदेवाद्य वयं तिलकदर्शनात् ।
संयोगोऽयं चिरं भूयात् सीतारामप्रसादतः ॥ ११८ ॥

कृतोऽभवतां यत्नः सुखवासाय सेवकैः ।
विपुलं तत्र वैगुण्यमस्तीति शप्यते मया ॥ ११९ ॥

यच्च न्यूनं स्वागतेऽस्मिन् क्षन्तव्यं तच्च सज्जनैः ।
क्षमाशीलैश्च दोषाणां गुणानां पक्षपातिभिः ॥ १२० ॥

अन्येषां विषयाणां हि स्वागताध्यक्षभाषणे ।
सामान्यत्वाच्च सर्वेषामुल्लेखं न करोम्यहम् ॥ १२१ ॥

वङ्गदेशे लब्धकीर्तिरम्बिकाचरणाभिधः ।
मुमुमुदारो वयोवृद्धो विख्यातो भारतेऽखिले ॥ १२२ ॥

विज्ञापितः सुरेन्द्रेण सोऽलंकर्तुं सभापतेः ।
पदं चानुमतः सर्वैरुत्थाय स्वासनाद् गतः ॥ १२३ ॥

अलंकर्तुं पदं श्रेष्ठं सर्वलोकाभिवन्दितः ।
तालिकोच्चनिनादेन जयशब्दैर्मुखोद्‌गतैः ॥ १२४ ॥

अध्यक्षपददानेन भव्येन स्वागतेन च ।
आतिथ्येन प्रभूतेन त्रिधा वद्धो यथा नृपः ॥ १२५ ॥

स्थितश्चोपकृतः स्निग्धैर्भवतां प्रेमरज्जुभिः ।
समाश्वासितसाह्योऽहं महाकार्यं समारभे ॥ १२६ ॥

जीर्णोद्याने फरैस्वानां तापीतीरेऽधिवेशने ।
विवादेनातिसंतप्ता वियुक्ता बान्धवाः पुरा ॥ १२७ ॥

संयुक्ता नववर्षान्ते केसर्यागेऽतिशोभने ।
लखनौपुर्यां सुरम्यायामलकायां हि भूतले ॥ १२८ ॥

संयुक्ता वा वियुक्ता वा सर्वदा बन्धवो वयम् ।
अस्तु तच्च शाश्वतं चैक्यमितीशं प्रार्थये सदा ॥ १२९ ॥

जाता ये भारते पुण्ये किं वा येषां च पूर्वजाः ।
भारते चानुरक्ता ये जनन्यां बालका इव ॥ १३० ॥

विभिन्ना अपि धर्मेण सन्ति भारतपुत्रकाः ।
हिन्दुखिस्तमहंमोदधर्माणामत्र संगमः ॥ १३१ ॥

परहस्तगता लक्ष्मीः संपाद्या वै प्रयत्नतः ।
तथा स्वराज्यप्राप्तिश्च कर्तव्यैक्यबलाज्जनैः ॥ १३२ ॥

उपस्थितया मण्डपेऽस्मिन् राष्ट्रभक्तशिरोमणेः ।
तिलकस्योपलब्धोऽस्ति विरोधानां समन्वयः ॥ १३३ ॥

खैस्तमुस्लिमहिन्दूनां तथान्येषां च धर्मिणाम् ।
कार्यः संधिर्विचारेण स्वदेशहितहेतुना ॥ १३४ ॥

द्वे कार्ये वै सभासद्भिः प्राधान्येनाधिवेशने ।
कर्तव्ये साग्रहं ब्रूमो वयमाध्यक्ष्ययोजिताः ॥ १३५ ॥

विस्मृत्य मतभेदं ये मिलिता राष्ट्रजीवने ।
त्रिवेणीवैकरूपा सा धारा वहतु संततम् ॥ १३६ ॥

आकाङ्क्षा भारतीयानां स्वराज्यध्येयसाधिका ।
एकरूपैव कर्तव्या सर्वपक्षसमर्थिता ॥ १३७ ॥

सभापतेर्भाषणान्ते प्रदीर्घं तालिवादनम् ।
प्रेक्षकैश्च सभासद्भिः कृतमाभारदर्शकम् ॥ १३८ ॥

प्रथमस्य दिनस्याभूदन्तः कार्यक्रमस्य च ।
भाषणस्यावसानेन राष्ट्रसंसत्सभापतेः ॥ १३९ ॥

निर्वाचनं सदस्यानां विषयांश्च परीक्षितुम् ।
जातं प्रतिनिधिस्थाने प्रान्तशाखाविनिश्चिते ॥ १४० ॥

यिदर्भेभ्यस्तदा केचित् सदस्या इति घोषिताः ।
श्रुत्वा मन्नाम तत्सूच्यामानन्दो मे महानभूत् ॥ १४१ ॥

मुम्बईप्रान्तशाखाया जातं निर्वाचनं यदा ।
क्षुल्लको मतभेदोऽभूद् गांधिस्तत्र समागतः ॥ १४२ ॥

निर्वाचिताः समित्यर्थं जनाः पञ्चाधिका दश ।
तीमा द्वयं तथा सप्त तेषु नेमस्तपक्षिणः ॥ १४३ ॥

गांधिकेळकराभ्यां सा चर्चिता नाममालिका ।
एकोभयानुकूल्येन नामसूचिर्विनिश्चिता ॥ १४४ ॥

नेमस्तानां संमतं चेदागच्छामि निवेदितुम् ।
इत्युक्त्वा स गतस्तस्मात् स्थानाद् गांधिर्महामनाः ॥ १४५ ॥

परंतु न स आयातः प्रोक्तकालावधौ पुनः ।
निर्वाचने नृसिंहस्तु पूर्वनामावलिं ददौ ॥ १४६ ॥

तिलकस्तत्सभाध्यक्षः सभाकार्यमचालयत् ।
समाविष्टं नाम गांधेर्मतैस्तिलकपक्षिणाम् ॥ १४७ ॥

नेमस्तेषु तदा कैश्चित् तत्सावेशं विरोधितम् ।
नाशक्नवमहं वेत्तुं तद्विरोधस्य कारणम् ॥ १४८ ॥

गांधिं यद्यपि शंसन्ति बाह्यतो राजकारणे ।
नीतिमानप्यकुशलो महात्मास्तीति तन्मतम् ॥ १४९ ॥

यत्नाद्धृतोऽपरः कोऽपि मण्डपस्तत्र शोभनः ।
रचितो नाम यत्रासीत् स्थानं विषयसंसदः ॥ १५० ॥

नियुक्तसमयात् पूर्वमायातास्ते सभासदः ।
उपविष्टा आसने च स्वे स्वे सर्वे सुखेन वै ॥ १५१ ॥

मुंजे चाहं तदासीनौ मालवीयस्य संनिधौ ।
आश्चर्यचकितो जातोऽहं क्षणे तस्य दर्शनात् ॥ १५२ ॥

बङ्गदेशस्थनेतारः सुरेन्द्रविपिनादयः ।
प्राप्ता यदा सभासद्भिरुत्थानेनातिसत्कृताः ॥ १५३ ॥

आगताश्च महाराष्ट्रात् खापर्डेतिलकादयः ।
जगर्जुर्जयशब्दांस्ते सदस्या व्योमभेदिनः ॥ १५४ ॥

अम्बिकाचरणस्तत्र हृदुपचारात्मकं ददौ ।
व्याख्यानकं स्वागताय नूत्नपूर्वसभासदाम् ॥ १५५ ॥

संयुक्तयोजनाचर्चा दीर्घकालं कृता यदा।
तदैक्यनिर्मितौ विघ्नो महानेक उपस्थितः ॥ १५६ ॥

किं देयं बहुसंख्याकैरल्पसंख्योपतुष्टये।
तिलकेनोत्तरं दत्तं गम्भीरं शास्त्रसंमतम् ॥ १५७ ॥

देयं तदल्पसंख्येभ्यः सिध्येद् येनात्मतोषणम्।
आत्मा वै ह्यैकरूपः स सर्वेषां विश्वधासिनाम् ॥ १५८ ॥

समाजे तिलकस्तस्मिन् गीताभाष्यकरोऽवदत्।
उदात्तं श्रेष्ठमध्यात्मं विश्वव्यापिविलोचनः ॥ १५९ ॥

सदस्या मण्डपस्थास्ते क्षणमुत्सृज्य पार्थिवीम्।
दृष्टिमन्तर्मुखा जाता विलीना ऐक्यदर्शने ॥ १६० ॥

गतमोहा ऊचुरुच्चैरैक्यमेवातिरिच्यते।
संमतास्त्वेव सर्वेषां लीगकांग्रेसयोजना ॥ १६१ ॥

समाप्तं तद् महत् कार्यं शिलान्यासः कृतो ननु।
भारतीयस्वराज्यस्य स्वीकृत्यैकमतेन ताम् ॥ १६२ ॥

दिनेऽन्यस्मिन् सुरेन्द्रोऽसौ विचारार्थमयोजयत्।
तं प्रस्तावं स्वराज्यस्य सभाया अधिवेशने ॥ १६३ ॥

यो राष्ट्रीयसभाधारो यथा स्तम्भः प्रतिष्ठितः।
त्रिंशत्येव च वर्षेषु डिमास्थेनीसियापरः ॥ १६४ ॥

नभोमेदिप्रवाहेण यस्य वाचा विमोहिताः।
भारते चाङ्ग्लभूम्यां च सुधा वक्तृत्वलोलुपाः ॥ १६५ ॥

मेघगम्भीरया वाचा समासद उवाच सः।
तिलकं मण्डपे दृष्ट्वा देहे प्राणमिवागतम् ॥ १६६ ॥

अखिले भारते जाता लोका वै हर्षनिर्भराः।
संबन्धः स्पृहणीयोऽयं प्रार्थये दाम्भनोऽस्त्विति ॥ १६७ ॥

ततः पश्चात् कतिपयैर्विख्यातैर्देशसेवकैः ।
प्रमाणपुष्टितमिस्तत्र प्रस्तावः सोऽनुमोदितः ॥ १६८ ॥

समाहूतो लोकमान्यः सभाध्यक्षमहोदयैः ।
तदा पुष्टिप्रदानाय वक्तृपीठं समागमत् ॥ १६९ ॥

शिरोवस्त्रं रक्तवर्णं धारयन्तं विलोक्य तम् ।
वन्देमातरमित्येतैर्मण्डपोऽभूत् प्रपूरितः ॥ १७० ॥

अपश्यन् मिलितास्तत्र स्वागतोद्गारकारिषु ।
स्वकीया धर्मादिभेदांस्ते हिन्दुमुस्लिमख्रिश्चनाः ॥ १७१ ॥

यन्मुस्लिलक्षरूपे ते भारतस्यैक्यदर्शनम् ।
ददृशुर्देशमोक्षस्य प्ररूढं चाङ्कुरं हृदि ॥ १७२ ॥

स्वीचकार स्वागतं स प्रेक्षकाणां कृताञ्जलिः ।
उवाच तिलकस्तत्र सर्वांस्तान् मण्डपस्थितान् ॥ १७३ ॥

पूजनीय सभाध्यक्ष तथान्ये देशसेवकाः ।
धर्ममातश्चालिबन्ध्वोः श्रोतृवृन्द समागत ॥ १७४ ॥

पश्यतो मातरं त्वद्य नम्रा हृदि समुत्थितः ।
अतिदीर्घवियोगान्ते मोदो मे वर्णनातिगः ॥ १७५ ॥

पितरौ न पितृव्यौ न यद् वै प्रेम प्रदर्शितम् ।
मत्संपदं देशभक्तैर्भारतस्य निवासिभिः ॥ १७६ ॥

जना इंग्लंडदेशस्था राज्यं कुर्वन्ति भारते ।
भारतस्था जनास्तेषां प्रतिकारक्षमा इति ॥ १८० ॥

मनःस्वेतद् दृढं तत्त्वं धार्यं भारतवासिभिः ।
संपादयितुमैक्यं ते तेनैव प्रभवन्ति हि ॥ १८१ ॥

हिन्दभूर्जननी मेऽस्ति संकल्पो जायते यदा ।
सर्वेषां भारतीयानां भारतैक्यं भवेत् तदा ॥ १८२ ॥

न प्रान्तस्य न धर्मस्य जातेर्वर्णस्य वा तथा ।
भिन्नत्वाद् देशबन्धुत्वे बाध्यं न स्यात् कदाचन ॥ १८३ ॥

कृत्वा बुद्धिं विशालां स्वां प्रस्तावप्रोक्तयोजना ।
संमतास्तु हि सर्वेषां स्वदेशोन्नतिमिच्छताम् ॥ १८४ ॥

यया योजनया प्राप्ता हिन्दवो मुस्लिमास्तथा ।
एकपीठं विचारैक्याद् राष्ट्रकार्यार्थतत्पराः ॥ १८५ ॥

न समर्था कवेर्बुद्धिस्तस्या माहात्म्यवर्णने ।
तदैक्यं वै समाधेयं मानवानां हितप्रदम् ॥ १८६ ॥

स्वराज्यमन्दिरद्वारोद्घाटनस्य प्रभावयत् ।
अस्माकमेकमेवैकं साधनं देशबन्धवः ॥ १८७ ॥

मातृभूमिसमुत्पन्ना भारतीयाः सहोदराः ।
अग्रजा हिन्दवस्तत्र मुस्लीमा अनुजा इति ॥ १८८ ॥

औदार्यार्हा भागकालेऽग्रजानामनुजा इति ।
मान्यं मतं पुरातत्त्वविदां शास्त्राभिसंमतम् ॥ १८९ ॥

योजनाङ्गेषु संरक्ष्या दृष्टिः सा स्नेहवर्धिनी ।
यथेष्टफलसिद्ध्यर्थं न्यूनान्यूनमलक्षिणी ॥ १९० ॥

आङ्ग्लहस्तगता शक्तिः कथं संक्रामिता भवेत् ।
हस्तेषु भारतीयानां प्रश्नोऽयं जटिलो महान् ॥ १९१ ॥

ऐक्येनैव सुसाध्यं तज्ज्ञातव्यं हिन्दवासिभिः ।
प्रस्तुते विषमे काले नान्यो मार्गोऽस्ति बान्धवः ॥ १९२ ॥

केवलं मुस्लिमेभ्योऽयं भारते यदि दीयते ।
अधिकारः शासनस्य सर्वैस्तत्संमतं मम ॥ १९३ ॥

हिन्दूनां हि तथान्येषां प्रविभागविनिश्चयम् ।
विधातुमधिकारस्य संधिसिद्धिर्न दुष्करा ॥ १९४ ॥

संसाध्यः सर्वपक्षाणां कलहोपशमो गृहे ।
विवेकिभिर्विवेकेन सप्रतीतिर्यदाम्यहम् ॥ १९५ ॥

तस्माद् ये योजनादोषाः सर्वेऽपि क्षुल्लका इति ।
मत्वा सभासदो दद्युरनुकूलं मतं स्वयम् ॥ १९६ ॥

एवमभ्यर्थितो लोको मेघगम्भीरया गिरा ।
सभाजितस्तालिकाभिर्निनायान्तं स भाषणम् ॥ १९७ ॥

तस्मिन् लखनऊभूते गतेऽन्तमधिवेशने ।
नेतारः संगतास्तत्र परिषत्संघवादिनाम् ॥ १९८ ॥

देव्या विशांट्या स्थानमध्यक्षीयमलंकृतम् ।
उपातस्थुश्च सर्वे ते तिलकश्चानुयायिनः ॥ १९९ ॥

लखनौसभाविशिष्टत्वं तिलकेन प्रदर्शितम् ।
कुराणवेदयोरैक्यं सिद्धं प्रथमतः खलु ॥ २०० ॥

स्वराज्यमेवमसार्कं साध्यं ध्येयविनिश्चयः ।
साध्यसाधनयोर्योगः स्पृहणीयो न संशयः ॥ २०१ ॥

रामस्वाम्यादिनेतारः स्वराज्यस्य प्रशशंसुः ।
तथा संघस्य माहात्म्यं विशांटानुज्ञया तदा ॥ २०२ ॥

नेतारः सर्वपक्षाणामभिप्रशचारणस्तथा ।
तिलकं द्रष्टुमायाताः कुशलप्रश्नकाम्यया ॥ २०३ ॥

तिलकस्याग्रहाज्जाताः सर्वे मुस्लिमबन्धवः ।
लाभाधिकत्वसंपन्ना इति रोषस्य कारणम् ॥ २०४ ॥

तिलकं प्रति हिन्दूनां केषांचित् स्वल्पधीमताम् ।
महासभा तु हिन्दूनामासीत् तेषां नवोदिता ॥ २०५ ॥

तैस्तत्र प्रार्थितो बालोऽगच्छद् हिन्दुसभोत्सवम् ।
संतोषाय च सर्वेषां कर्मयोगी प्रवर्तते ॥ २०६ ॥

मानापमानयोस्तुल्यस्तुल्यो मित्रारिपक्षयोः ।
कुर्वन्नेवेह कर्माणि द्वन्द्वातीतो विमत्सरः ॥ २०७ ॥

ग्रीष्मार्कातपदग्धजीवसुखदा वृक्षस्य छायेव या
मग्नानामिव सिन्धुवारिषु यथा नौकोपलब्धिः सुखा ।
शङ्काचञ्चलचेतसां नु मनसः स्थैर्याय सिद्धार्थवाग्
जाता राष्ट्रसभास्थले तिलकधीः सर्वार्थसंपादिनी ॥ २०८ ॥

लख्नौसंज्ञनितान्तसुन्दरपुरीराष्ट्रीयसंसत्स्थले
दिव्यं प्राप यशः सभागतगणो राष्ट्रीयकार्योत्सुकः ।
मन्येऽसौ परिपाक एष तपसो गाङ्गाधरेर्योगिनः
षड्वर्षावधिचिन्तनस्य च गिरां कृष्णस्य काराश्रमे ॥ २०९ ॥

इति माधवविरचिते श्रीतिलकयशोऽर्णवे लख्नौराष्ट्रीयसभासमारोहवर्णननामा
पञ्चपञ्चाशत्तमस्तरङ्गः ।

# षट्पञ्चाशत्तमस्तरङ्गः

तिलकस्य यशः श्रुत्वा लखनौराष्ट्रसंसदि ।
आबालवृद्धलोकानां हृदयेषु समुत्थिता ॥ १ ॥

लालसा पूजनस्य व्याख्यानश्रवणस्य च ।
अभिलाषा पूजनस्य निजग्रामेषु चोत्कटा ॥ २ ॥

निमन्त्रणं जना दातुं कानपूरात् समागताः ।
तिलकं प्रार्थयामासुः सादरं भावनोत्सुकाः ॥ ३ ॥

आगच्छन्तु महाभागा अनुगृह्णन्तु बान्धवान् ।
उपदेशेन पन्थानं दर्शयन्तु हितप्रदम् ॥ ४ ॥

ओमित्याह प्रसन्नात्मा तिलकः सज्जनाग्रहात् ।
अविलम्बेन कर्तव्यं प्रवासावश्यकं च यत् ॥ ५ ॥

आगमिष्यामि कानपूरमद्य मित्रसमन्वितः ।
ददावाज्ञामनन्ताय प्रवासार्थं स्वमन्त्रिणे ॥ ६ ॥

ततो रथेन संप्राप्तावनुयायिजनैः सह ।
स्थानकं कानपूरस्य खापर्डेतिलकावुभौ ॥ ७ ॥

शृङ्गारिता कानपूरनगर्यल्पावधावपि ।
तिलकस्य स्वागताय कानपूरनिवासिभिः ॥ ८ ॥

ऊहुः स्वयं तदारूढं समारोहेण वर्त्मसु ।
गायन्तो राष्ट्रगीतानि रथं विद्यार्थिनस्तदा ॥ ९ ॥

पायस्यप्रान्तविख्यातो वृद्धो विश्वंभराभिधः ।
नेताध्यक्षपदं सार्थं स्वीचकार सभागृहे ॥ १० ॥

तदा राष्ट्रसभाकार्यतात्पर्यं तिलकोऽब्रवीत् ।
आङ्ग्लवाण्यां सभासद्भ्योऽनभिज्ञेभ्योऽपि तद्गिरः ॥ ११ ॥

तच्चाशृण्वन् स्वासनस्था भित्तिचित्रार्पिता इव ।
तदन्ते तालिकानादं चक्रुरादरनिर्भराः ॥ १२ ॥

आवश्यकी स्वराज्यस्य संप्राप्तिरिति निश्चयः ।
कृतः श्रेष्ठैर्लोकवन्द्यैर्नरैर्लखनऊसंसदि ॥ १३ ॥

विनामृतं न तिष्ठन्ति स्वर्गेऽपि सुखिनोऽमराः ।
न सन्ति सुखिनो भूम्यां लोकाः स्वातन्त्र्यवञ्चिताः ॥ १४ ॥

सभामुपस्थिता लोकाः सहस्राणि सहस्रशः ।
प्रमाणं तत्पात्रतायाः स्वराज्यस्येति मे मतम् ॥ १५ ॥

हिन्दूनां संमतं यद्धि गुणकर्मविभागशः ।
चातुर्वर्ण्यं देवसृष्टमाङ्ग्लैस्तद् वै विलोपितम् ॥ १६ ॥

वर्णत्रयाधिकाराश्च हृता इंग्लंड्वासिभिः ।
अवशिष्टं शूद्रकर्म सर्वेषां हिन्दवासिनाम् ॥ १७ ॥

लुप्ताधिकारसंप्राप्त्यै स्वराज्यं प्रार्थ्यते जनैः ।
पुनःसंस्थापनार्थाय चातुर्वर्ण्यस्य भारते ॥ १८ ॥

प्रयत्नोऽयं समारब्धः श्रेष्ठैर्भारतनेतृभिः ।
सहकार्यमपेक्षेऽस्मिन्नखिलानां समुद्यमे ॥ १९ ॥

कथामेकां वक्तुकामो बाल्ये यासीच् श्रुता मया ।
एकः कश्चिदजापाल आनिनाय वनाच् शिशुम् ॥ २० ॥

व्याघ्रस्य वर्धयामास सोऽजापुत्रैश्च तं ततः ।
अजवंशेऽहमुत्पन्न इति मेने स्वयं शिशुः ॥ २१ ॥

एकदा स गतो यूथे जलं पातुं जलाशयम् ।
यूथमध्ये तदातिष्ठदजापुत्रैः परावृतः ॥ २२ ॥

अजाजिघांसया तत्र प्राप्तो व्याघ्रो भयंकरः ।
पलायनपराः सर्वे दृष्ट्वा तमजपुत्रकाः ॥ २३ ॥

व्याघ्रीपुत्रोऽपि संत्रस्तः पलायनपरोऽभवत् ।
वनव्याघ्रो विस्मितोऽभूद् बालव्याघ्रस्य चेष्टितैः ॥ २४ ॥

गत्वा तत्संनिधिं प्राह किमर्थं त्वं पलायसे ।
कुत्र गच्छसि वत्स त्वं कस्त्वं मह्यं निवेदय ॥ २५ ॥

अजापालगृहं यामि ह्यजापुत्रोऽस्मि तात वै ।
यूथमध्यस्थिताः सर्वे बन्धवो मेऽवदच्छिशुः ॥ २६ ॥

आत्मरूपं प्रजानीहि दृष्ट्वात्मानं जलाशये ।
उवाच व्याघ्रस्तं मौढो जलाशयतटस्थितः ॥ २७ ॥

दृष्ट्वा तच्छिशुना ज्ञातं व्याघ्रसारूप्यमात्मनः ।
विनष्टस्तत्क्षणे मोहो योऽजापालेन निर्मितः ॥ २८ ॥

अहं व्याघ्र इति ज्ञात्वा त्यक्त्वाजानां च यूथकम् ।
व्याघ्रेण स वनं शीघ्रं प्रविवेशात्मरूपवित् ॥ २९ ॥

कानडास्ट्रेलियादीनां यशोन्वितसमुद्यमैः ।
प्रोत्साहिताः स्वराज्यार्थे निश्चिक्युर्हिन्दवासिनः ॥ ३० ॥

वयं चापि स्वराज्यस्य योग्याः संप्राप्तयेऽधुना ।
आदियास्वजपानोऽपि प्राप स्थानं महत्तमम् ॥ ३१ ॥

प्रार्थयेऽहं सभास्थानस्थितान् सर्वजनानिह ।
भगवन्तं प्रार्थयध्वं राष्ट्रकार्यस्य सिद्धये ॥ ३२ ॥

समाप्य कानपूरस्य कार्यं सर्वं विनिश्चितम् ।
मित्रद्वयेन तिलकः कालिकानगरं ययौ ॥ ३३ ॥

पुणेपुरीं जग्मुरन्ये ततश्च सहकारिणः ।
प्रचाराय स्वराज्यस्य भारते मन्त्रतन्त्रयोः ॥ ३४ ॥

स्थानके पत्रिकाकार्यालयसंचालको युवा ।
प्राप्तो बालस्वागतार्थं कश्चिद् घोषकुलोद्भवः ॥ ३५ ॥

गृहं प्राप्तान् मोतिलाल् गृहद्वारपुरः स्थितः ।
सुस्वागतं वान्धवेभ्य इति प्रेम्णा जगाद सः ॥ ३६ ॥

मोतिनालिङ्गितो बालः खापर्डे चाभिवन्दितः ।
जोशी नमस्कृतो द्वाभ्यां पाणिभ्यां तेन सादरम् ॥ ३७ ॥

अष्टवर्षाधिकः कालो व्यतीतः पूर्वदर्शनात् ।
बालस्य मोतिबन्धोश्च निर्व्याजप्रेमिणोस्तयोः ॥ ३८ ॥

गाढालिङ्गनबद्धौ तौ रामकैकेयसंनिभौ ।
दृश्येते मिलितौ तत्र वियोगानन्तरं जनैः ॥ ३९ ॥

न्यवसन् मोतिलालस्य घोषस्य सद्मने त्रयः ।
दिनत्रयं कथालापांश्चक्रुर्हर्षसमन्विताः ॥ ४० ॥

मोतीलालमहाशयस्य सुहृदो घोषस्य सद्मागतो
गीताभ्यासविशुद्धबुद्धितिलको द्रष्टुं सखायं स्वयम् ।
तद्वन्धोः शिशिरस्य वङ्गविषये ख्यातिश्च लोकेऽभवद्
नित्यं यो दिनपत्रिकामृतमदाद्‌लीलामृतं निष्ठया ॥ ४१ ॥

जातो लोकगुरुर्विशुद्धचरितो धर्मात्मबुद्धिः सदा
तस्मिन् पूज्यमतिं चकार तिलको ज्येष्ठे यथा भ्रातरि ।
घोषस्याप्तजनेषु तस्य परमा स्नेहार्द्रवृत्तिस्ततः
स्मृत्वा स्वर्गतमग्रजं नयनयोरस्राम्बुधारास्रवत् ॥ ४२ ॥

विद्वद्द्वयसमागमोऽतिसुखदः प्राग्जन्मपुण्योद्भवो
मोतीलालगृहे दिनद्वयमिते कालेऽभवच्च शोभनः ।
वार्तालापविचित्रविषयैः प्रमुदिता विद्याकलाभूषिताः
प्राप्ता दर्शनहेतुनापि च जना गाङ्गाधरेस्तस्य च ॥ ४३ ॥

आगच्छंस्तिलकं द्रष्टुं मोतीलालगृहं प्रति ।
बहवो वङ्गदेशीया सदाचारानुवर्तिनः ॥ ४४ ॥

तेषां केचिद् देशभक्ताः केचिद् वेदविशारदाः ।
वेदान्तपारगाः केचिद् नव्यन्यायविदां वराः ॥ ४५ ॥

गीतारहस्यसिद्धान्तचर्चा बहुविधाभवत् ।
निर्बन्धं पण्डिताश्चक्रुर्व्याख्यानाय बृहत्स्थले ॥ ४६ ॥

सुहृद्भिर्ब्रह्मदेशस्थैर्व्याख्यानाय निमन्त्रणम् ।
प्रदत्तं समयाभावात् स्वीकर्तुं तिलकोऽक्षमः ॥ ४७ ॥

साङ्गोपाङ्गविचारमन्थनमभूद् राष्ट्रोदयोत्कर्षदं
नीतिन्यायविवेकतर्कघटितं तज्ज्ञैः समुज्जृम्भितम् ।
दृश्यं भारतभाविसंस्कृतिमयं विद्वज्जनैश्चिन्तितं
दीनोद्धारपरं च भाविजनताराज्यस्वरूपं तथा ॥ ४८ ॥

ऐक्योत्पादनसाधनं समुचितं हिन्दूमुसल्मानयो-
र्लघ्नीतिक्रमतस्य सर्वसुजनैर्देशे प्रसारोद्यमः ।
हित्वालस्यमपायकारकमिति प्राज्ञैः प्रतिज्ञापरैः
कर्तव्योऽस्त्यविलम्बनेन सकलैर्भूमातृसेवाव्रतैः ॥ ४९ ॥

अभयनययुतास्ते भारतीया भवन्तु
परकृतमधिराज्यं भारते पापमूलम् ।
भवतु खलु निलातं सर्वलोकप्रयत्नै-
रिति तिलकरहस्यं ब्रह्मजेभ्यः प्रदत्तम् ॥ ५० ॥

दत्त्वैवं निजसंदेशं तिलकः ससुहृद् गतः ।
गन्तुमिच्छन् नागपूरं ह्यावरास्थानकं प्रति ॥ ५१ ॥

समर्पिताः पुष्पमाला ह्यावरास्थानके जनैः ।
रथस्थदेशभक्तेभ्यो विनीतैः प्रश्रयान्वितैः ॥ ५२ ॥

श्यामसुन्दरमुख्याश्च युवका देशसेवकाः ।
जयं प्रोदीरयामासुः स्थानकात् प्रस्थिते रथे ॥ ५३ ॥

वासुकाकाभिधो जोशी खापर्डे तिलकस्तथा ।
समाययुर्नागपूरं मध्याह्ने पञ्चमे दिने ॥ ५४ ॥

दर्शनार्थं स्वागतार्थं चाव्रजन् स्थानकं जनाः ।
असंख्याः प्राङ्गणे तस्थुरुत्सुकाः पुष्पपाणयः ॥ ५५ ॥

हारान् समर्पयामासुर्जुघुषू राष्ट्रघोषणाः ।
राजवीथिषु मुख्यासु प्रोहुस्तिलकवाहनम् ॥ ५६ ॥

तोरणानि विचित्राणि स्वागतायोच्छ्रितानि च ।
महार्हपत्रयुक्तानि नानाफलयुतानि च ॥ ५७ ॥

कुलस्त्रियो रौप्यपात्रे दीपकैर्दक्षिणार्चिभिः ।
आर्तिक्यं चक्रिरे भक्त्या स्थाने स्थाने महापथे ॥ ५८ ॥

हंसापुर्याः समारभ्य चादित्यशुभनामिकाम् ।
पुरीमुल्लङ्घ्य माहाले प्राप्ता वैद्यगृहं प्रति ॥ ५९. ॥

कृतं सेवकसेनायास्तस्मिन् स्थाने विसर्जनम् ।
न्यवसत् तिलकस्तस्मिन् नारायणगृहे तदा ॥ ६० ॥

अतिथीनां च सर्वेषां स्नानपानाद्यभोजनम् ।
तत्राभवद् यथापूर्वं कृष्णस्य विदुरालये ॥ ६१ ॥

बालस्य नैष्ठिको भक्तो वैद्यो नारायणाभिधः ।
चीर्णं तेन स्वदेशार्थं कारावासतपो महत् ॥ ६२ ॥

गोपालरावबुट्टीनां प्रासादे तिलको गतः ।
सुहृत्समन्वितः सायं निवासाय तदाग्रहात् ॥ ६३ ॥

उवास तिलकस्तत्र समित्रः स दिनद्वयम् ।
गोपालोऽतिथिसंमानाय दक्षः सानुचरोऽभवत् ॥ ६४ ॥

अणेबापटमालन्या यवतमालनिवासिनः ।
निर्बन्धं प्रार्थयामासुः स्वग्रामागमनाय च ॥ ६५ ॥

प्रार्थना बालमिश्रस्य स्वीकृता बापटस्य सा ।
तिलकेनाल्पकालार्थं कष्टेन महता तदा ॥ ६६ ॥

सायंकाले च महती चिट्णीसोद्याननामके ।
स्थलेऽतिविस्तृते जाता सभा नगरवासिनाम् ॥ ६७ ॥

गौरोपाह्वो हरीसिंगो विधिशास्त्रविशारदः ।
ख्यातकीर्तिरलंचक्रे सभापतिपदं तदा ॥ ६८ ॥

सभास्थाने समायाता नेमस्तपथगामिनः ।
घोसो विपिनकृष्णाख्यः पण्डितो दीक्षितस्तथा ॥ ६९ ॥

तिलकस्तुतिपद्यानि ताम्हन्करकविः स्वयम् ।
पपाठोच्चैः समारम्भे प्रमोदाय सभासदाम् ॥ ७० ॥

अध्यक्षस्याज्ञयोवाच बालः प्राप्तसभासदः ।
नगरे नागपूरेऽस्मिन् महाक्रान्तिरजायत ॥ ७१ ॥

पक्षभेदः शिथिलित ऐक्यमङ्कुरितं नवम् ।
संधिप्रवृत्तिगतया विग्रहो विलयं गतः ॥ ७२ ॥

सामान्योऽपि समाप्नोति देवत्वमिति मानवः ।
प्रयत्नेनावदत् कृष्णो गीतायामर्जुनं सखा ॥ ७३ ॥

यान्ति देवव्रता देवान् पितॄन् यान्ति पितृव्रताः ।
अर्थस्तु वचनस्यास्य मन्तव्यः क्षेमकाङ्क्षिभिः ॥ ७४ ॥

न ह्यध्यात्मानुभूत्यर्थं केवलं च मुमुक्षुभिः ।
प्रतीतं तद् भवेदित्यमैहिकोदयलिप्सुभिः ॥ ७५ ॥

ते वै देवव्रताः सन्ति सद्गुणान् ये उपासते ।
न शिलाप्रतिमापूजा श्लोके तस्मिन् निदर्शिता ॥ ७६ ॥

गुणध्यानेन भक्तस्य तदाधारगुणाकृतिः ।
याति भक्त्या तन्मयत्वं तथा देवस्य सेवकः ॥ ७७ ॥

प्रार्थना मत्कृता होया तरुणानां सुखाय वै ।
वृद्धानां बालकानां च मातृभूमिहितैषिणाम् ॥ ७८ ॥

हिन्दूयवनयोरैक्यं घटितं गोमतीतटे ।
दुराग्रहि सिडेन्हाममनः कातरतां गतम् ॥ ७९ ॥

न भारताय दातव्यमाङ्ग्लैः किंचिदतःपरम् ।
उद्घोषित्ते लंडनस्थवृत्तपत्रे विरोधकः ॥ ८० ॥

हिन्दभूमे राजनीतिप्रगतेः स्वार्थसाधकः ।
शत्रुर्लोभी कृष्णसर्पः परवित्तापहारकः ॥ ८१ ॥

देशोद्धाराय यै भाव्यं करिष्यते न भारते ।
जनेन यत्नशीलेन यशस्तमनुगच्छति ॥ ८२ ॥

एवमुक्त्वाधसानं स व्याख्यानस्याकरोद् यदा ।
वन्दे मातरमुद्घोष्य दर्शिता संमतिर्जनैः ॥ ८३ ॥

दिनेऽन्यस्मिन् समाहूतास्तिलकश्च सुहृज्जनाः ।
अभ्यंकरमहोरेण भोजनाय स्वसद्मनि ॥ ८४ ॥

मोरो स्वागतमातिथ्यं चक्रेऽतिथिजनस्य सः ।
कृत्वा हि भोजनं तत्र तिलकः स्थानकं गतः ॥ ८५ ॥

श्लोकाको मध्यदेशस्थसचिवालयनायकः ।
प्रान्तस्याधिपतेर्मुख्यः कार्यवाह इति श्रुतः ॥ ८६ ॥

स्वकार्यार्थं नागपूरस्थानकं प्रत्युपस्थितः ।
अपश्यत् न स्वनेत्राभ्यामादृतं तिलकं जनैः ॥ ८७ ॥

न लेभेऽग्निरथं गन्तुं मार्गे कंचित् क्षणावधि ।
मार्गस्य पूर्वव्याप्तत्वालोकैस्तिलकदृष्टृभिः ॥ ८८ ॥

आसीनोऽग्निरथे स्थाने तदर्थं यत् सुरक्षितम् ।
तिलको धामणग्रामं यथाकालं समागमत् ॥ ८९ ॥

श्रेष्ठिभिर्धनिकैर्लोकैः स्थानके स्वागतं कृतम् ।
तिलकस्य प्रमोदेन पुष्पहारैः सुगन्धिभिः ॥ ९० ॥

प्रतस्थे स्थानकात् तस्मादारुह्य जवनं रथम् ।
उपस्थिता जना यत्र स्थलं निकटवर्ति सः ॥ ९१ ॥

सभां तां तिलकः प्राप्तो लोककल्याणचिन्तकः ।
हितबोधाय लोकानामकरोद्‌दल्पभाषणम् ॥ ९२ ॥

लोकैर्देशहितार्थं वै कर्तव्यं त्यागपूर्वकम् ।
द्रव्यदानं ज्ञानदानं श्रमदानं विशेषतः ॥ ९३ ॥

विमुक्त्यै देशबन्धूनामाङ्ग्ललोकावलम्बनात् ।
तथा तेषामाधिपत्यात् साम्राज्यस्याधिकारिणाम् ॥ ९४ ॥

हिन्दभूजन्मनां राज्यं हिन्दभूम्यां भवेद् यदि ।
भारतीया यत्नशीलाः सततं मोक्षसिद्धये ॥ ९५ ॥

दत्तमाश्वासनं लोकैः साहाय्यस्य सभालये ।
द्रव्यस्य च यथाशक्ति निर्मितेर्धे दलस्य च ॥ ९६ ॥

देशसेवापराणां वै निःस्वार्थानां निजस्थले ।
तरुणानां च सर्वेषां सैनिकव्रतधारिणाम् ॥ ९७ ॥

यवत्‌माळं ततो गन्तुं विद्युद्वाहनसंस्थितः ।
आदिशत् तिलकः सूतं शीघ्रं चालय वाहनम् ॥ ९८ ॥

प्राप्तो रथोऽल्पकालेन यवत्‌माळपुरीं प्रति ।
रथमध्ये स्थितो बालः सूतस्तस्य पुरःस्थितः ॥ ९९ ॥

आसीनो वाहने चाग्निभूषिते सुमनोहरे ।
आयातो भास्करः साक्षाद् धामारुणपुरःसरः ॥ १०० ॥

इत्येव मेनिरे लोका बालं दृष्ट्वा तदा रथे ।
तथा पुरःस्थितं सूतं चक्रपाणिं सुवासमम् ॥ १०१ ॥

श्रेष्ठपौरद्रविडस्य सीमान्तस्थं गृहं गतः ।
रथस्तस्थौ स्थिरस्तत्र कृतं सीमान्तपूजनम् ॥ १०२ ॥

द्रविडप्रमुखैः पौरैस्तिलकस्य महात्मनः ।
गन्धमाल्यादिभिर्धूपैर्दीपैर्नीराजनादिभिः ॥ १०३ ॥

गृहिणीभिः पयःकुम्भान् वहन्तीभिश्च मङ्गलान् ।
वादित्राणां च तूर्याणां नभो नादेन पूरितम् ॥ १०४ ॥

दिवाकरे गतेऽस्ताद्रिमुदिते च निशाकरे ।
तिलको द्रविडावासात् प्रतस्थे यानमास्थितः ॥ १०५ ॥

ग्रामे संचारयामास पताकाभिरलंकृतैः ।
दीपमालोज्ज्वलैर्मार्गैर्वापटस्य गृहं गतः ॥ १०६ ॥

शोभिता पूर्णचन्द्रेण निशा शीतातिहर्षदा ।
प्रदीपश्रीगुणोपेता जाता तिलकमङ्गला ॥ १०७ ॥

देवालयेषु सर्वेषु लोककार्यस्थलेषु च ।
श्रीमतां च निवासेषु मध्यमाधमधामसु ॥ १०८ ॥

लक्ष्मीपूजादिनस्येवाभूदातिथ्यमहोत्सवः ।
अल्पग्रामस्ततो जातः स्वर्गस्थानमिवाद्भुतम् ॥ १०९ ॥

तिलकस्य स्वागतार्थं तिलकादरसूचकः ।
प्रतिगेहं यवत्माळे जातो दीपमहोत्सवः ॥ ११० ॥

वापटस्य गृहे रात्रौ मित्रसंमानहेतुना ।
मित्रानुयायिवर्गस्य योजितं सहभोजनम् ॥ १११ ॥

वार्तालापः कृतो मित्रैर्मुडलेवापटादिभिः ।
स्वदेशोद्धारकार्यार्थं विद्यमानपरिस्थितौ ॥ ११२ ॥

तिलकस्यापि विश्रान्तिरशक्येव तदाभवत् ।
दीर्घप्रवाससंभूतकष्टक्लेशोपशान्तये ॥ ११३ ॥

निमन्त्रितो ग्रामसंस्थाचालकैरादरादिति ।
जगाम मन्दिरं तेषां तिलको लोकसंग्रही ॥ ११४ ॥

इनामस्वामिसंस्थायां तथा जिल्हासभागृहे ।
मानपत्राण्यर्पितानि तिलकाय महात्मने ॥ ११५ ॥

विराद्सभा मयारामस्वामिनोऽतिपरिश्रमात् ।
मन्दिरस्य गणेशस्य जाता वै शोभितेऽङ्गने ॥ ११६ ॥

योजितो लोकसंमत्याध्यक्षस्थानाय बापटः ।
वकीलो यः ख्यातकीर्तिर्वयोवृद्धो जनप्रियः ॥ ११७ ॥

सतीर्थ्यौ स्नेहिनौ बाल्यादास्तां तिलकबापटौ ।
सहितौ वासुदेवेन तावायातौ सभास्थलम् ॥ ११८ ॥

उच्चैरुदीरयामासुर्जयशब्दान् सभाजनाः ।
वन्दे मातरमित्येके जगुर्देशसेवकाः ॥ ११९ ॥

भाषणे तिलकश्चक्रे देशस्थितिनिरीक्षणम् ।
सुस्पष्टं दर्शयामास मार्गं दास्यविमोचकम् ॥ १२० ॥

स्वराज्यसंघकार्यस्य महत्त्वं विशदीकृतम् ।
कार्या संघटना सद्यो बहुसंख्यसभासदाम् ॥ १२१ ॥

उप्तं बीजं चित्तभूम्यां सुष्ठु देशहितप्रदम् ।
अज्ञानग्रस्तलोकानां सदा तिलकसूक्तिभिः ॥ १२२ ॥

तदेव वृक्षरूपेण प्रफुल्लं फलसंयुतम् ।
पुरे यवतमाळाख्ये जिल्हान्तर्गतवर्तिनि ॥ १२३ ॥

संप्रदत्तं मानपत्रं स्वीकृत्य तिलकोऽब्रवीत् ।
बापटाभिमुखो भूत्वा प्रेमगद्गदया गिरा ॥ १२४ ॥

संमानपत्रदानेन बद्धोऽहं प्रेमरज्जुना ।
दृढो भवतु योगोऽयं सहकार्याय सर्वदा ॥ १२५ ॥

यवत्माळनिवासस्य कालेऽप्यवसितेऽतिथिः ।
गतः समित्रः स्वस्थानाल्लोहाख्यस्थानकं प्रति ॥ १२६ ॥

दर्शनार्थं समायाता ग्रामस्था भक्तिचोदिताः ।
अवोचंस्ते वयं सिद्धा भवदाज्ञानुपालने ॥ १२७ ॥

दारव्हालाटखेडादिग्रामेभ्यः स्थानकानि ते ।
स्वागतार्थं जनाः प्राप्ताः प्रणेमुर्निजनायकम् ॥ १२८ ॥

कारंजास्थानके दृष्टः समुदायोऽतिविस्तृतः ।
प्रासरद् दिक्षु सर्वासु दिगन्तव्यापिसिन्धुवत् ॥ १२९ ॥

कुबेरो यो विदर्भाणामण्णाख्यः काण्णवो मतः ।
स्थानकं च समेयाय घुडेप्रभृतिभिः सह ॥ १३० ॥

कुसुमान्यर्पयामासुस्तिलकोऽपि तदुत्तरम् ।
सर्वानाह जनान्धैर्यं देशस्याभ्युदयाय हे ॥ १३१ ॥

यतितव्यं स्वराज्यस्य प्राप्त्यै च मम बान्धवाः ।
विनाशः सर्वदुःखानां तेनैव सुकरो भवत् ॥ १३२ ॥

भवन्तु धार्मिकाः सर्वे स्वराज्यस्थानकस्य च ।
तत्र प्राप्ता न पश्यन्ति दुःखानि क्षुल्लकानि हि ॥ १३३ ॥

ततः परं मूर्तिजाख्ये स्थानके तिलकोऽविशत् ।
तस्मिन् ग्रामे चकारैकं भाषणं जननायकः ॥ १३४ ॥

गवाक्षेण प्रवेशस्य कृतो यत्नो वृथाभवत् ।
प्रवेष्टुं निश्चयः कार्यो महाद्वारेण मन्दिरम् ॥ १३५ ॥

स्वराज्यसंप्रयत्नोऽयं मूलविच्छेदनोपमः ।
न तु शाखाच्छेदनस्य कार्यो यत्न इतःपरम् ॥ १३६ ॥

एवं दत्वास्वसंदेशं तिलकस्तत्स्थलात् पुरः ।
अकोलाख्यं पुरं प्राप्तो विदर्भेषु महर्द्धिमत् ॥ १३७ ॥

स्थानकं प्रति संप्राप्ताः स्वागतार्थं महात्मनः ।
अकोलावासिनो लोकाः सर्वपक्षानुयायिनः ॥ १३८ ॥

नेमस्तदलनेतारौ दामले च महाजनिः ।
अर्पयामासतुर्हारावुभौ भक्तिसमन्वितौ ॥ १३९ ॥

वासुदेवो ब्रह्मविद्यापारगश्च परार्थधीः ।
तिलकं पूजयामास विद्वज्जनवशंवदः ॥ १४० ॥

एकवाहनमारूढौ तिलकश्च महाजनिः ।
उत्साहपूर्वकं नीतस्तद्रथो राजवर्त्मभिः ॥ १४१ ॥

वोढारो वाहनस्यासन् युवका न तु वाजिनः ।
आर्तिक्यं पुष्पवृष्टिं च चक्रुः स्त्रीपुरुषाः पथि ॥ १४२ ॥

तद्रात्रौ रथयात्रायामन्त्यजा दर्शनोत्सुकाः ।
समायाता असंख्येयास्तिलकादरपूर्वकम् ॥ १४३ ॥

वाहनं तद् विलम्बेन विश्रान्तिस्थलमागतम् ।
तथाप्यपश्यत् तिलकः संस्थास्तन्नगरस्थिताः ॥ १४४ ॥

विदर्भोद्योगवृद्ध्यर्थं तत्र भागवतेन वै ।
तैलयन्त्रादयो ह्यासन् स्थापिता नगरे तदा ॥ १४५ ॥

गृहे भागवतस्यासौ बालस्य परमः सखा ।
गोपालो वर्हाडे नूतनागरकर्षवादीपकः ॥ १४६ ॥

धुले भागवतस्यास्मिंस्तिलकस्याप्तभावना ।
अभिव्यक्ता विशेषेण निवाससमये तदा ॥ १४७ ॥

वेंकटेशो गणेशस्य सुहृद् देसाइपंडाजः ।
विद्वान् ज्ञानपटुर्नेता प्रियो नगरवासिनाम् ॥ १४८ ॥

नगरागतिभिरश्वारं तिलकादरसंभ्रमम् ।
शिष्याः सर्वे समायाताः समारोहेऽतिशोभने ॥ १४९ ॥

तिलकाय ददुर्द्रव्यं लोकास्तत्कार्यसिद्धये ।
विघ्नेषु निषेधोतः प्रारम्भः शुभदायकः ॥ १५० ॥

कृतं प्रवचनं चैकं जोगळेकरसद्मनि ।
गीताशास्त्रस्य सिद्धान्तस्तिलकेन विवेचितः ॥ १५१ ॥

व्याख्यानं कृतवान् बालो लोकबोधाय तद्दिने ।
सभायां च विशालायां जनकर्तव्यदर्शकम् ॥ १५२ ॥

उवाच तिलको लोकान् जनाः शृणुत मे वचः ।
यत्नेनैव हि सिध्यन्ति कार्याणि न मनोरथैः ॥ १५३ ॥

ऐक्यनिष्पादनं मुख्यं यत्नसिद्धेश्च साधनम् ।
तत्कर्तव्यं प्रसङ्गेऽस्मिन् देशैकहितबुद्धिभिः ॥ १५४ ॥

सुरते कलहो योऽभूद् भारते विस्मृतो जनैः ।
नासौ वै विस्मृतस्तैस्तु शासनस्याधिकारिभिः ॥ १५५ ॥

न कश्चित् प्रतिषेधोऽस्ति स्वराज्यप्राप्तिकर्मणि ।
भाषणे राज्यदोषाणां वर्णनं दूषणास्पदम् ॥ १५६ ॥

अधुनैव प्रोक्तमासीत् शासनस्याधिकारिभिः ।
मन्येऽहं चेष्टितं तेषां सर्वथैव विसंगतम् ॥ १५७ ॥

परराज्यप्रमादोत्था स्वराज्यप्राप्तियाचना ।
तस्याः संपादनेऽवश्यं राज्यदोषस्य वर्णनम् ॥ १५८ ॥

दुःसहं शासनस्यास्य भवत्येव स्थले स्थले ।
रोगस्य वर्णनेनैव तदुपायस्य चिन्तनम् ॥ १५९ ॥

आद्यं विना द्वितीयस्य संभवो नैव विद्यते ।
दोषोल्लेखं विना तद्वत् स्वराज्यप्रतिपादनम् ॥ १६० ॥

एवं बहुविधं कृत्वा बोधं सर्वजनान् प्रति ।
बालेन संघकार्ये वै तद्धृत्सु प्रेम निर्मितम् ॥ १६१ ॥

ततोऽग्निरथमारुह्य तिलकः स्वपुरीं गतः ।
मार्गस्थेषु स्थानकेषु लोकैस्तद्दर्शनं कृतम् ॥ १६२ ॥

संचारपूतानि दिगन्तराणि
कृत्वा गतः पश्चिमपुण्यदेशम् ।
भानुर्यथा सर्ववर्णानुरक्तो
बालस्तथा सज्जनगीतकीर्तिः ॥ १६३ ॥

इति माधवविरचिते श्रीतिलकयशोऽर्णवे पूर्वभारतसंचारनामा षट्पञ्चाशत्तमस्तरङ्गः ॥

# सप्तपञ्चाशत्तमस्तरङ्गः

आनर्चुस्तिलकं पुण्यं दक्षिणापथवासिनः ।
सर्वभारतनेतारमागतं ह्युत्तरापथात् ॥ १ ॥

विद्यार्थिनः पुष्पहारैर्विप्राश्च स्वस्तिवाचनैः ।
नीराजनैः सुवासिन्यः सुखासीनं स्वसद्मनि ॥ २ ॥

कर्णाटे च महाराष्ट्रे मध्यदेशविदर्भयोः ।
स्वराज्यसंघकार्यस्य ये चासन्ननुयायिनः ॥ ३ ॥

समाहूताः कार्यवाहैर्याताः पुण्यपुरीं च ते ।
उपायानां चिन्तनाय निधिद्रव्यार्जनस्य वै ॥ ४ ॥

संघकार्यप्रगत्यर्थं केसरीमुद्रणालये ।
जानेवार्यन्तिमे भागे सभायां निर्णयोऽभवत् ॥ ५ ॥

संघकार्यप्रसाराय शिष्टानामेकमण्डलम् ।
प्रेषितव्यं विदेशाय सूचितं हि सभास्थले ॥ ६ ॥

सर्वारम्भास्तण्डुलाः प्रस्थमूला
न्यायेनेति द्रव्यमाप्तुं प्रयत्नाः ।
आरब्धव्याः सर्वशाखाधिमुख्यै-
स्तन्मर्यादा निश्चितव्याश्च सुज्ञैः ॥ ७ ॥

नेतारो निर्णयं चक्रुः कृत्वोहापोहमुत्तमम् ।
तेनोत्पन्नं संघकार्ये चैतन्यं नवमद्भुतम् ॥ ८ ॥

तदन्ते घोषयामास कार्यवाहः सभागतान् ।
भवित्राद्य सभा सायं नगरे नाट्यमन्दिरे ॥ ९ ॥

वक्तारः कार्यकर्तारो दूराद् येऽत्र समागताः ।
सर्वे तत्रोपतिष्ठन्तु तिलकश्च सभापतिः ॥ १० ॥

उक्तकाले सभास्थानं बालो मित्रसमन्वितः ।
यातस्तदा स्वागताय ह्युदतिष्ठन् सभासदः ॥ ११ ॥

निनादितं सभास्थानं जयशब्दैश्च तत्कृतैः ।
नीत्वात्मनोऽञ्जलिं भाले तिलकोऽदात् तदुत्तरम् ॥ १२ ॥

उपाविशन् स्वासनेषु व्यासपीठे नरोत्तमाः ।
तन्मध्ये तिलको दृष्टो ग्रहमध्ये यथा रविः ॥ १३ ॥

वैद्यश्चिन्तामणिर्विद्वान् खापर्डे च बृहस्पतिः ।
प्राड्विवाग्मुकुटस्तत्र रघुनाथश्च सूक्ष्मधीः ॥ १४ ॥

केसरीलेखकौ कृष्णनरसिंहाभिसंज्ञकौ ।
शिवरामः पत्रकारो वागीशो रसिकप्रियः ॥ १५ ॥

चित्रशालाचालको यो वासुदेवोऽतियुक्तिमान् ।
विघ्ने प्रकटितं येन सन्मित्रत्वमनुत्तमम् ॥ १६ ॥

स्थिता महाशया एते तिलकस्यातिसंनिधौ ।
आसंस्तिलकपक्षस्य स्तम्भा एव बृहद्बलाः ॥ १७ ॥

स्वराज्यसंघकार्यस्य य आसीत् कार्यवाहकः ।
विश्वनाथोऽब्रवीद्दाशयस्पष्टैर्विनीतवाक् ॥ १८ ॥

बालोऽलंकुरुतामेतत् सभाध्यक्षपदं महत् ।
सूचना सा द्वितीयेन तन्मित्रेणानुमोदिता ॥ १९ ॥

सूचना सा प्रेक्षकाणामैकमत्येन संमता ।
संचालकैः पुष्पहारस्तिलकाय समर्पितः ॥ २० ॥

सानन्दं तिलकः प्राह विदितं हि प्रयोजनम् ।
सभायाः सर्वसुज्ञानामागतानां सभास्थलम् ॥ २१ ॥

संस्थापितो महाराष्ट्रे स्वराज्यध्येयसिद्धये ।
बिल्वग्रामे भारतस्य संघो सर्वपुरस्कृतः ॥ २२ ॥

प्रदेशे दक्षिणे पूर्वं निर्मितश्च विशांटया ।
मद्रासपत्तने संघो भारतोद्धारहेतुना ॥ २३ ॥

राष्ट्रेण स्वीकृतं ध्येयं सभाया अधिवेशने ।
नगरे लखनौनाम्नि जाते मासि दिसेंबरे ॥ २४ ॥

हिन्दिस्लामैश्च संयुक्तविचारेण विनिर्मिता ।
तत्रैका योजना श्रेष्ठा भारतोद्धारकाङ्क्षिभिः ॥ २५ ॥

ऐक्यं सिद्धं भारतस्य लोकानां भिन्नधर्मिणाम् ।
आकाङ्क्षाणां स्वदेशस्य प्रगत्यै गोमतीतटे ॥ २६ ॥

तदाध्यक्षोऽम्बिकादत्तः संदेशं दिव्यमुक्तवान् ।
लोकेभ्यो भारतीयेभ्यो यत्नं कुरुत सिद्धये ॥ २७ ॥

उद्यमेनैव सिध्यन्ति कार्याणि न मनोरथैः ।
भवन्तु यत्नशीला मे बान्धवास्त्यागपूर्वकम् ॥ २८ ॥

राष्ट्राध्यक्षवचः सत्यं कर्तुं वै हिन्दवासिनः ।
यतन्तामित्यहं सर्वान् प्रार्थये देशसेवकान् ॥ २९ ॥

शब्दैरुपक्रमं कृत्वा वत्गुभिस्तिलकोऽवदत् ।
रघुनाथः समायातु वक्तृस्थानं नियोजितम् ॥ ३० ॥

समाजनोपदेशाय देशकालविचारवान् ।
स्थितो मूर्ध्नि स्वबुद्ध्या यो वास्कीलव्यवसायिनाम् ॥ ३१ ॥

पाण्डुरङ्गात्मजो लोके दादानाम्ना सुविश्रुतः ।
वक्तृस्थाने समायातः करंदीकरवंशजः ॥ ३२ ॥

प्रौढः सूक्ष्ममतिर्विद्वान् निपुणश्च बहुश्रुतः ।
प्रियोऽखिले महाराष्ट्रे राजकारणतत्परः ॥ ३३ ॥

मग्नोऽपि व्यवसाये स्वे तिलकक्षेमयत्नवान् ।
यशसे तस्य कार्यस्य येनोद्योगः कृतो महान् ॥ ३४ ॥

धारयन्तं शिरस्त्राणमारक्ताभं सुशोभनम् ।
चक्रिरे तालिकानादं तं वै दृष्ट्वा सभाजनाः ॥ ३५ ॥

सौम्यवाचा नमस्कृत्य रघुनाथः सभाजनान् ।
पराधिपत्यसंभूतां वर्णयामास दुःस्थितिम् ॥ ३६ ॥

स्वार्थमग्ना जनाः प्रायो देशकार्यपराङ्मुखाः ।
कथं ते देशकार्यस्य भवेयुः संमुखा इति ॥ ३७ ॥

चिन्तां वहन्ति ये नित्यं तेषां मध्येऽग्रग्रणीः ।
सुदैवेनाधुनास्माकं धुरीणत्वे नियोजितः ॥ ३८ ॥

भारतीयजनैः सर्वै राष्ट्रकार्यस्य संप्रति ।
हिन्दुमुस्लिमयोः संधिर्जातो यस्य प्रयत्नतः ॥ ३९ ॥

राजधान्यां नवाबानां पवित्रे गोमतीतटे ।
समूहे राष्ट्रभक्तानां सर्वलोकाभिवाञ्छितः ॥ ४० ॥

तिलकस्य विशेषाटायाः सिद्धमैक्यं प्रयत्नतः ।
एकरूपे महास्रोतो गङ्गायमुनयोरिव ॥ ४१ ॥

साबरमत्यास्तटे गान्धिराश्रमे दुश्चरं तपः ।
करोत्यभ्युदयार्थं वै भारतस्य महामनाः ॥ ४२ ॥

प्राप्तव्या हि प्रयत्नेन राष्ट्रकार्येऽनुकूलता ।
सत्याग्रहाश्रमस्थस्य निर्भयस्य तपस्विनः ॥ ४३ ॥

बालानुयायिभिः सर्वैः कर्तव्यः शक्तिसंग्रहः ।
एवमुक्त्वा महाभागो विरराम स्वभाषणात् ॥ ४४ ॥

समादिशत् ततोऽध्यक्षो माधवं श्रीहरेः सुतम् ।
व्याख्यानाय पुरो यातुमणेवंशसमुद्भवम् ॥ ४५ ॥

कर्तुं परिचयं तस्य प्रोवाच तिलको युवा ।
विश्वस्तोऽयं विदर्भस्थश्रीकृष्णतनयस्य वै ॥ ४६ ॥

धावीलो धर्मशीलश्च जनसेवापरायणः ।
जिल्हासभादिसंस्थानां स्थापको लोकसंग्रही ॥ ४७ ॥

संजातः संभ्रमः श्रुत्वा तिलकोक्तं च वर्णनम् ।
माधवस्य मनोभूम्यां क्षणं विस्मयकारकः ॥ ४८ ॥

लुप्तस्वबुद्धिविश्वासो धर्मस्थिरमुखोऽभवत् ।
किं वक्तव्यमिति प्रश्नः समाकस्मात् समुत्थितः ॥ ४९ ॥

ध्यानाद् भक्त्या गणेशस्य स जातो नष्टसंभ्रमः ।
वक्तृस्थानं समागत्य श्रोतृणां संमुखः स्थितः ॥ ५० ॥

उपवस्त्रैकदेशेन प्रमृज्य मुखमात्मनः ।
आदौ नमाम्यहं प्राह विनयेन सभापतिम् ॥ ५१ ॥

नानाविद्याकलाभिज्ञान् नगरस्थानिहागतान् ।
नरनारीसंयुतं च श्रोतृवृन्दं सभास्थितम् ॥ ५२ ॥

विदर्भभूः समाविष्टा विलम्बेनाङ्ग्लशासिते ।
भारते स्थापनं तस्माद्आङ्ग्लनीतेर्विलम्बितम् ॥ ५३ ॥

सामान्यशिक्षणे चाङ्ग्लभाषापरिचये तथा ।
विरलत्वात् साधनानां न चक्रुः प्रगतिं जनाः ॥ ५४ ॥

मद्रभूमुम्बईवङ्गप्रदेशेभ्यः सुशिक्षिताः ।
स्वशासनोपयोगायानीता अर्धशतं समाः ॥ ५५ ॥

तेषां तुलनया प्रायः विदर्भस्था अशिक्षिताः ।
आसन्नसंस्कृताः सर्वेऽप्ययोग्या अप्रतिष्ठिताः ॥ ५६ ॥

न्यक्कृतेषु जनेष्वासीदधिकारपदस्थितैः ।
परकीयैः स्वयंमन्यैर्न्यूनगण्डसमुद्भवः ॥ ५७ ॥

गतविंशतिवर्षेषु महाविद्यालयोदयात् ।
न्यूनगण्डस्य ह्रासस्य प्रत्ययो याति दृक्पथे ॥ ५८ ॥

नोद्भूतस्तत्र तस्माच्च जनसेवापरायणः ।
संप्रदायः शिक्षितानां पुण्यग्रामे दृढो यथा ॥ ५९ ॥

राजनैतिककार्येषु पुण्यपुर्या प्रकाशितम् ।
मनुते केसरीपत्रं विदर्भो मार्गदर्शकम् ॥ ६० ॥

गङ्गास्नानोत्सुकाः पुण्याः काशीं गच्छन्ति यात्रिकाः ।
आत्मनः पापनाशाय पितॄणां मुक्तये तथा ॥ ६१ ॥

पुण्यक्षेत्रे ज्ञानवाप्यां स्नात्वा भारतमुक्तये ।
नेतुं तीर्थोदकं ग्रामांस्तत्र आयान्ति यात्रिकाः ॥ ६२ ॥

उत्थितानां तुषाराणां राजनीतिमहोदधेः ।
संग्रहायाङ्ग्लयंत्रघनाशिनामहमागतः ॥ ६३ ॥

अत्र ज्ञानप्रदानस्य मद्यत्नो हास्यकारणम् ।
न्यूकासलमङ्गिगर्भाणामश्मनां नयनं यथा ॥ ६४ ॥

राज्ञः संकोचनं कृत्वा प्रभावस्य शनैः शनैः ।
आङ्ग्लदेशे जनैः प्राप्ता लोकशासनपद्धतिः ॥ ६५ ॥

पार्लमेंटाधिकारस्य वृद्धिस्तदनुसारिणी ।
कथं जातेति विख्यातमितिहासविदामतः ॥ ६६ ॥

उल्लेखो विस्तृतस्तस्य भवेच्चर्वितचर्वणम् ।
केवलाङ्गुलिनिर्देशो युक्तो मद्धेतुपूरकः ॥ ६७ ॥

मुख्यप्रधानतन्त्रेण संमत्या सहमन्त्रिणाम् ।
व्यवस्थाङ्ग्लस्वराज्यस्य सार्वभौमस्य यन्त्रिता ॥ ६८ ॥

राज्ञस्तत्पालने नैव हस्ताक्षेपस्य संभवः ।
'कॉलनी' नामधारिण्यः शाखाः सर्वत्र विस्तृताः ॥ ६९ ॥

तासु प्रस्थापिता राज्यपद्धतिर्जन्मभूस्थिता ।
त्रिरुण्डीस्थासु मुख्यासु पार्लमेंटगृहाश्रया ॥ ७० ॥

व्यवस्था भारते तद्वत् कर्तव्येति जनाग्रहः ।
मुहुर्नेतृमुखव्यक्तः सप्रमाणं समर्थितः ॥ ७१ ॥

हिन्दुमुस्लिमयोरैक्यं जातं यद् गोमतीतटे ।
तेन स्वराज्यदानस्य समस्याभूद् विनिश्चिता ॥ ७२ ॥

तस्याः पूर्तिर्भवेद् हस्तैः समयज्ञाङ्ग्लमन्त्रिणाम् ।
अनादृत्य विरोधं हि स्थानिकाङ्ग्लाधिकारिणाम् ॥ ७३ ॥

क्षेत्रे सुविस्तृतं जातं शासनस्याधिकारिणाम् ।
कर्तव्यानां राजनीतितत्त्वज्ञानां मतेऽधुना ॥ ७४ ॥

इंग्लंडमन्त्रिभिः प्रायः स्वीकृतं व्यापकं मतम् ।
विहिता नयपद्धत्यां सर्वेशासनयन्त्रणा ॥ ७५ ॥

प्रगल्भःस्थिरैर्देशैर्यूरोपामेरिकागतैः ।
अङ्गीकृतं व्यवस्थायां तत्त्वं प्रगतिलक्षणम् ॥ ७६ ॥

प्रयुञ्जन्ति स्वार्थसिद्ध्यै तत्त्वं तद् व्यापकं महत् ।
व्यवस्थायां भारतस्य लोभादाङ्ग्लाधिकारिणः ॥ ७७ ॥

संचालनं लोकशास्त्या राज्ययन्त्रस्य भारते ।
प्रगत्यै यशसेऽस्माकं लोककल्याणपद्धतेः ॥ ७८ ॥

शकटो न बलीवर्दैर्वाहितः सिद्धिदायकः ।
विमानेनैव गन्तव्यं संचाराय नभःपथि ॥ ७९ ॥

अक्षमं सर्वथा जीर्णं राज्ययन्त्रं पुरातनम् ।
नूतनोद्देशसिद्ध्यर्थं नोपयुक्तं कथंचन ॥ ८० ॥

हेयं तदविलम्बेन शासनस्याधिकारिभिः ।
स्थापितव्यं नूतनं च प्रजातन्त्रनियन्त्रितम् ॥ ८१ ॥

भारतीयस्य राज्यस्य संकल्पस्य मयाधुना ।
कृतं विवेचनं मान्यं सर्वपक्षानुयायिनाम् ॥ ८२ ॥

परंतु कर्टिसादीनां विरोधोऽपायकारकः ।
कर्तव्या तद्विनाशस्य सदुपायगवेषणा ॥ ८३ ॥

अस्मद्विरोधकाः काले यास्यन्ति च पराभवम् ।
भाग्यरेखा बलवती भारतस्यास्त्यसंशयम् ॥ ८४ ॥

अवतारकथां पुण्यां प्रवक्ष्ये क्लेशमोचिनीम् ।
शृण्वन्तु सावधानं तां श्रोतारो मोक्षदायिनीम् ॥ ८५ ॥

शतक्रतुं पराभूय जातस्त्रिभुवनेश्वरः ।
दैत्यवंशे समुत्पन्नः कायाधवसुतात्मजः ॥ ८६ ॥

दानशूरो बलिः ख्यातोऽखिलब्रह्माण्डनायकः ।
स्वप्रभावख्यापनार्थमाजहार महाक्रतुम् ॥ ८७ ॥

ऋत्विक्त्वेन वृतास्तस्मिन् वसिष्ठप्रमुखर्षयः ।
शुक्रो दैत्यगुरुस्तत्र पौरोहित्ये नियोजितः ॥ ८८ ॥

गतवैभवसंप्राप्तिः स्वपुत्राणां भवेदिति ।
पराभवश्च दैत्यानां सद्यानर्चादितिः प्रभुम् ॥ ८९ ॥

वामनोऽवततारातो दैत्यसंहारहेतवे ।
स्वर्गप्राप्त्यै च देवानां विष्णोः पञ्चमविग्रहः ॥ ९० ॥

वामनो बटुवेषेण बलियज्ञस्य मण्डपम् ।
आगात् परिवृतो विप्रैर्निपुणैः श्रौतकर्मसु ॥ ९१ ॥

प्रविष्टे मण्डपं तस्मिन्नुद्यद्भास्करवर्चसि ।
वेदमूर्तौ समित्पाणौ वामने ब्रह्मचारिणि ॥ ९२ ॥

आतिथेयो बलिः श्रेष्ठ आसनात् सहसोत्थितः ।
प्रणम्य शिरसा पादौ वामनं अभ्यपूजयत् ॥ ९३ ॥

विधिना मधुपर्केण तमसौ भास्करोपमम् ।
धारयन्तं यज्ञसूत्रशिखादण्डकमण्डलुम् ॥ ९४ ॥

यथोऽल्पमपि सर्वेशं वटुमुच्चासनस्थितम् ।
यजमानो बलिर्दाता प्रश्रयावनतोऽवदत् ॥ ९५ ॥

अद्य मे सफलं जन्म भवत्पादाभिवन्दनात् ।
यद् भवत्तोषणं तद् मामाज्ञापयतु किंकरम् ॥ ९६ ॥

कन्यां वृत्तिकरीं भूमिं गृहं प्रासादसंनिभम् ।
कुबेरस्याधिकां किं वा संपदं मर्त्यदुर्लभाम् ॥ ९७ ॥

दास्यामि याचितं सर्वं याचकायेति मद्व्रतम् ।
निष्ठया पालयेऽहं तद् ब्रूहि मां भवदीप्सितम् ॥ ९८ ॥

याचितं भवता मन्ये महान्तं मय्यनुग्रहम् ।
तत्पूर्तिः सफलत्वं च जन्मनश्च प्रभो मम ॥ ९९ ॥

वक्तव्यं कृपया देव निःसंकोचं निजेप्सितम् ।
कथयित्वा समग्रं तत् क्रियतां मय्यनुग्रहः ॥ १०० ॥

संपस्पर्श वटोः पादावुक्त्वैवं शिरसा बलिः ।
भक्त्या नम्रोऽवेक्षमाण आशिषश्चातिथेर्मुखात् ॥ १०१ ॥

धृत्वा पूर्णोदकं पात्रं पत्नी विन्ध्यावलिः स्थिता ।
दानकालेऽतिथेः पाणौ जलं दातुं यथाविधि ॥ १०२ ॥

उवाच वामनस्तुष्टो बलेः सूनृतया गिरा ।
युक्तं भवद्भिरुक्तं यत् प्रह्लादस्य महात्मनः ॥ १०३ ॥

भगवद्भक्तमुख्यस्य नप्तुः कायाधवस्य ते ।
तथैव दानशूरस्य दैत्यवंशस्य संततेः ॥ १०४ ॥

वदान्यानां बलिः श्रेष्ठो दिगन्ते प्रसृतं यशः ।
तस्मात् प्राप्तो मखस्थानं यज्ञकुण्डाग्निपावनम् ॥ १०५ ॥

पादत्रयमितां भूमिं देहि मे विश्वभूतये ।
त्रिलोकाधिपते राजन् दातर्मां दानवोत्तम ॥ १०६ ॥

बलिः प्राह्वेयमत्यल्पा याच्ञामन्यां निवेदय ।
चिन्ता क्षेमस्य योगस्य न स्यात् तव पुनर्यया ॥ १०७ ॥

संमिता भूस्त्रिपादैर्मे पर्याप्ता कार्यपूर्तये ।
अधिकाया न लोभो हि मेदिन्या विद्यते मयि ॥ १०८ ॥

दत्त्वोत्तरं स्थितस्तूष्णीं वामनोऽपूर्वयाचकः ।
तस्योक्त्या विस्मिताः सर्वे देवासुरनरर्षयः ॥ १०९ ॥

वामनेप्सितदानाय राजानं कृतनिश्चयम् ।
दृष्ट्वा शुक्रस्तदाचार्यो बलिं वचनमब्रवीत् ॥ ११० ॥

त्रिपाद्धरणीदानं कर्तुं विप्राय नार्हसि ।
तद्दानेन त्वदीयोऽद्य सर्वनाशसमुद्भवः ॥ १११ ॥

आयातो बटुवेषेण देवकार्यस्य साधकः ।
पुराणपुरुषो विष्णुर्मायामाणवको हरिः ॥ ११२ ॥

प्रतिज्ञाज्ञानमूला ते सर्ववृत्तिविनाशिनी ।
अपेहि पालने तस्या न भवेदृतसत्ययोः ॥ ११३ ॥

न स्मृतेः संमतं दानं सर्ववृत्तिविनाशकम् ।
प्रदानेऽशस्य रिक्थस्य नृपशक्तिर्नियन्त्रिता ॥ ११४ ॥

दैत्यराज प्रयासि त्वं पन्थानमनृतस्य च ।
मद्वचोऽतिक्रमं कृत्वा दानपूर्तिं करोषि चेत् ॥ ११५ ॥

अनादृत्य गुरोर्वाणीं बलिर्दानशिरोमणिः ।
दक्षिणं करमुद्धृत्य धीरः सत्यमनोऽब्रवीत् ॥ ११६ ॥

संसारिणां गुरो सत्यं धर्मो मोक्षसुखावहः ।
तदाधारे प्रवृत्तिर्नो मदान्धाभिमानिनाम् ॥ ११७ ॥

न बिभेमि तथा मृत्योर्विनाशाद् वैभवस्य वा ।
यथा विप्राय वचसो भङ्गाद् पातकतो मद्गुरो ॥ ११८ ॥

वृत्तपात्रस्य पूर्वेत्यो ह्यस्मै सुरहितैषिणे ।
वरीयान् जीवितात् मृत्युर्व्रतभङ्गात् कलङ्कितात् ॥ ११९ ॥

ततो बलिर्वामनाय प्रोवाच प्रतिगृह्यताम् ।
त्रिपदा भूर्मया दत्ता भवच्चरणसंमिता ॥ १२० ॥

जलपात्रमगृह्णात् स दातुं तज्जलपूर्वकम् ।
पानीयं न बहिर्याति पात्रस्य नलिकामुखात् ॥ १२१ ॥

अभ्यन्तरे कुशाग्रस्य नलिकाया व्यनाशयत् ।
बालमेन व्यत्ययस्य कारणं सत्यवान् बलिः ॥ १२२ ॥

जलधारास्रवत् पाणौ वामनस्य ततः शुभा ।
जगाद प्रतिगृह्णामि वामनोऽतिथिपुंगवः ॥ १२३ ॥

काले तस्मिन्नेकनेत्राद् रक्तस्रावो कवेरभूत् ।
नष्टं नेत्रं कुशाग्रेण दैत्याचार्यस्य तद्दिनात् ॥ १२४ ॥

द्विपादाभ्यां वामनेन व्याप्तं लोकद्वयं यदा ।
स्वमस्तकं तृतीयार्थं बलिस्तस्मै तदा ददौ ॥ १२५ ॥

कुरु वासं सत्यनिष्ठ पाताले त्वं बलेऽधुना ।
सुरक्षायै द्वारपालो भूत्वा तिष्ठामि त्वद्गृहे ॥ १२६ ॥

भारतीयप्रयत्नस्य यशःसिद्धिः सुनिश्चिता ।
प्रसुप्ताङ्ग्लन्यायबुद्धेर्योग्यकाले प्रबोधने ॥ १२७ ॥

साम्राज्यलोलुपा एते कर्टिसाद्यधिकारिणः ।
शुक्रवद् व्यसनापन्ना भवेयुर्नष्टदृष्टयः ॥ १२८ ॥

अस्मदुद्धारकर्तृणामाङ्ग्लानां मित्ररूपिणः ।
संरक्षका भविष्याम आपत्सु व्यसनेषु च ॥ १२९ ॥

भारतीयाः प्रदास्याम आङ्ग्लेभ्यो वचनं वयम् ।
हरिश्चन्द्रस्य रामस्य धर्मराजस्य वंशजाः ॥ १३० ॥

लाभस्तेषां जयस्तेषां कुतस्तेषां पराभवः ।
जागर्ति मातृभूदेवी हृत्सु येषां निरन्तरम् ॥ १३१ ॥

यथा स्वभाषणस्यान्ते श्रोतारश्चाभिवादिताः ।
निवृत्तोऽसौ निजस्थानं श्रोतृभिश्चाभिनन्दितः ॥ १३२ ॥

तत्सभायाः समारोपे वालश्चक्रेऽल्पभाषणम् ।
सातारस्थः सुप्रसिद्धो रघुनाथो जगाद यत् ॥ १३३ ॥

मतभेदावकाशोऽस्ति नैव तत्प्रतिपादने ।
स्यादेव सकलं तद् वै राष्ट्रीयाणां सुसंमतम् ॥ १३४ ॥

संघयोरुभयोरैक्यं पूर्वमेव निवेदितम् ।
मद्रासे च महाराष्ट्रे संघप्रमुखचालकैः ॥ १३५ ॥

तथेप्सितं च सर्वेषां सहकार्यं महात्मनः ।
अहो भाग्यं भारतस्य मातृभूमिं स आगतः ॥ १३६ ॥

गान्धिप्रभावजा शक्तिर्भारतोत्कर्षवर्धिनी ।
निःसंशयं स्वल्पकाले भविष्यति मतेन मे ॥ १३७ ॥

अणेनाम्ना यदुक्तं च पुण्यक्षेत्रस्य वर्णने ।
याथार्थ्यमंशतस्तस्मिन्नुपचारस्तथांशतः ॥ १३८ ॥

पुण्यक्षेत्रात् समानीतं विदर्भानुदकं तु यत् ।
न पर्याप्तमहं मन्ये विदर्भस्य महोदये ॥ १३९ ॥

नागपूरामरावत्यवतमाळस्थलादिषु ।
विदर्भाणां प्रसिद्धेषु सन्ति स्नानजलाशयाः ॥ १४० ॥

इति ज्ञातं पूर्वमेव संघकार्यस्य चालकैः ।
भवतां प्रत्ययस्तस्य जातो मन्येऽस्य भाषणात् ॥ १४१ ॥

मूल्यं रजतरूप्यस्य षोडशाणकसंमितम् ।
भारते व्यवहारस्य तदासीदाणकोत्तमम् ॥ १४२ ॥

नीतमन्वर्थतां नाम कृत्वा भाषणमुत्तमम् ।
अन्ते ददौ धन्यवादांश्चालकेभ्य उदारधीः ॥ १४३ ॥

त्यागेनात्मसमर्पणेन जनताहृद्देशभूम्यां नव-
मुप्तं बीजमुदारभारतभुवः सेवाव्रतस्योत्तमम् ।
स्वातन्त्र्यस्य च निर्मिता जनपदे येनाभिलाषा स्थिरा
वन्देऽहं तिलकं च भारतगुरुं संघस्य संस्थापकम् ॥ १४४ ॥

तद् भाषणं मम बभूव चिरंतनाङ्गं
बालस्य दिव्यचरितस्य सुधोपमैश्च ।
यस्य प्रसादसुमुखस्य गुरोर्वचोभि-
स्तं भारतस्य तिलकं तिलकं नतोऽस्मि ॥ १४५ ॥

इति माधवविरचिते श्रीतिलकयशोऽर्णवे गुर्वनुग्रहनामा सप्तपञ्चाशत्तमस्तरङ्गः ।

## अष्टपञ्चाशत्तमस्तरङ्गः

ग्रीष्मे चण्डकरः सूर्य आकर्षति बलाद् रसम् ।
भूमेः सिन्धुनदीवापीतडागेभ्योऽप्यहर्निशम् ॥ १ ॥

महद्भ्यः क्षुल्लकेभ्यश्च सूर्यस्याकर्षणं समम् ।
आशयेभ्यश्चोदकानामन्याय्यमसमञ्जसम् ॥ २ ॥

क्षारोदकव्लुता भूम्यां विद्यन्ते सप्त सागराः ।
आकर्षणे रसस्यास्ति केषांचिद् नैव संमतम् ॥ ३ ॥

आदत्ते निरनुक्रोशो बलिं राजा प्रजाजनात् ।
इत्थं तद्वद् भास्करस्य गर्हणीयं मतं जनैः ॥ ४ ॥

क्लिष्टा चतुर्विधा सृष्टिरपां संततशोषणात् ।
जरायुजा अण्डजाश्च ह्युद्भिज्जाः स्वेदजास्तथा ॥ ५ ॥

तत्पोषकरसाभावात् प्रायो मृत्युपथे स्थिते ।
चेतनाचेतने सृष्टी द्विविधे वेदवर्णिते ॥ ६ ॥

न प्रतिष्ठा रसस्यास्ति कापि भास्करमण्डले ।
आलम्बनं चान्तराले स्थितिस्तस्य त्रिशङ्कुवत् ॥ ७ ॥

भीतस्त्वतैर्द्विजा विष्णुं प्रार्थयामासुरध्वरे ।
प्रमुक्तये निरुद्धानां सूर्यातपशमाय च ॥ ८ ॥

घनीभूता विन्दवोऽपि वायुनोत्क्षेपिता दिवि ।
पयोदाः पर्वतप्राया बभूवुः शक्तिसंयुताः ॥ ९ ॥

गन्तुं भूमिं विनिश्चिक्युरन्तराले विहाय च ।
स्वागतायोत्सुका तेषां भौमसृष्टिश्चतुर्विधा ॥ १० ॥

रोहिण्यन्ते मृगे प्राप्ते जातेऽर्के मन्दतेजसि ।
पयोधरैरन्तरालाद् भूमिं यातुमुपक्रमः ॥ ११ ॥

कृतस्तदा गता सृष्टिः संतोषपरमावधिम् ।
सुगन्धिता साभिषिक्ता प्रथमैर्वृष्टिबिन्दुभिः ॥ १२ ॥

उदकैः संप्लुता भूमिराषाढे दक्षिणायने ।
सविताप्यभवत् सौम्यः शनैः सृष्टिसुखावहः ॥ १३ ॥

क्रमाच् शक्ति तथा साह्यं धैर्येणारब्धकर्मणः ।
यशासे विन्दते संघो निबद्धः शुद्धहेतुना ॥ १४ ॥

चक्रनेमिक्रमेणापि तत्त्वमेतद् निदर्शितम् ।
प्रतिवर्षं निसर्गस्य जगदुद्धारकारकम् ॥ १५ ॥

महनीयोद्यमोत्कर्षे लोकमान्यपुरस्कृते ।
स्वदेशोद्धारमुद्दिश्य प्रत्ययस्तस्य दृश्यते ॥ १६ ॥

स्वराज्यसंघनिर्माणेर्लोकानां परमादरः ।
दुःसहोऽभूच्च शासकस्य धूर्तसाम्राज्यवादिनः ॥ १७ ॥

वासन्त्याः पारिपन्थ्याय मद्रासे शासनाधिपः ।
स्वातन्त्र्यध्वंसिनीं नीतिं कुटिलामुपचक्रमे ॥ १८ ॥

मुम्बापुर्यां च तत्प्रान्ते संचारः प्रतिषेधितः ।
अनुकारः कृतस्तस्य मध्यदेशाधिकारिभिः ॥ १९ ॥

विशांटाया मद्रदेशस्थितश्रेष्ठाधिकारिणा ।
विचारणामभिव्यक्तेः स्वातन्त्र्यं च विलोपितम् ॥ २० ॥

पेंटलंडो मद्रभूमेरासीत् प्रान्तपतिस्तदा ।
ग्रीष्मर्तौ सुखवासाय सुप्रसिद्धामुटीं गतः ॥ २१ ॥

वनश्रीमण्डितां रम्यां सुमगन्धसुखानिलाम् ।
नीलाचलशिरोरत्नमिति लोकैः प्रशंसिताम् ॥ २२ ॥

स्वकृते भाषणे तत्र कौंसिलस्याधिवेशने ।
आवश्यकी दण्डनीतिरिति प्रान्ताधिपोऽवदत् ॥ २३ ॥

सार्वभौमविचारोऽस्ति किंचिदुन्नतिकारकम् ।
कर्तुं युद्धोत्तरे काले शोधनं राज्यपद्धतेः ॥ २४ ॥

स्वराज्येन समं चापि होमरूलादिनामभिः ।
अपेक्षितं च यत् तेन तुल्यं नैव तु तद् भवेत् ॥ २५ ॥

इति ज्ञात्वापि ये लोकान् साग्रहं वर्णयन्ति तद् ।
असंतोषविनिर्मित्या द्रोहिणः शासनस्य ते ॥ २६ ॥

भाषणैर्लेखनैस्तेषां सततं कर्मचारिणः ।
निन्दितास्तेन तत्कार्ये व्यत्ययश्च भवत्यपि ॥ २७ ॥

घोषयामो वयं यत् तल्लोकक्षेमाय कल्पते ।
शृण्वन्तु मद्रदेशस्थाः पौरा जानपदास्तथा ॥ २८ ॥

असंतोषोत्पादकस्य विनाशायोद्यमस्य च ।
शासनं कटिबद्धं मे दण्डनाय च दोषिणाम् ॥ २९ ॥

चरिते लोकमान्यानां नरसिंहमहोदयैः ।
मद्रासमुम्बईप्रान्तस्वामिनोस्तुलना कृता ॥ ३० ॥

पेटलेंडसिडेन्हामनाम्नोर्वचनयोस्ततः ।
प्रदर्शितं मतं यत् तैर्मार्मिकं निर्दिशामि तत् ॥ ३१ ॥

मद्रासाधिपतेरुक्तिर्गर्विष्ठा दर्पमिश्रिता ।
मुम्बाधिशासकस्योक्तेर्मन्यते स्म प्रतिध्वनिः ॥ ३२ ॥

गर्वोक्तिः सिडनहामेन कृतासीत् तिलकद्विषा ।
वर्षे ह्यष्टोत्तरैकोनविंशत्या गुणिते शते ॥ ३३ ॥

ततः पश्चात् शीघ्रमेव न्यायाधीशस्य निर्णयः ।
तिलको राजविद्रोही षड्वर्षावधिबन्धनम् ॥ ३४ ॥

षड्वर्षसंमितः कालो नीतस्तेन महात्मना ।
मण्डालये ब्रह्मदेशे कारागारेऽतिकष्टदः ॥ ३५ ॥

पर्जन्यप्रलयात् पूर्वं मेघानां गर्जनं यथा ।
पूर्वं तिलकपीडायास्तथा प्रान्ताधिपोक्तयः ॥ ३६ ॥

व्याजेन शान्तिरक्षाया दण्डनीतेः प्रवर्तनम् ।
समुच्छेदाय नेतॄणां स्वातन्त्र्यध्येयवादिनाम् ॥ ३७ ॥

भयभीतान् जनान् कर्तुं दण्डशक्तेर्विभीषणम् ।
प्रदर्शनं प्रथा ह्येषा दितिजानां पुरातनी ॥ ३८ ॥

नैवासुरी रीतिरन्ते सत्कार्यस्य विरोधिनी ।
सुयशः प्रतियाति सज्जनस्य तु कर्मणः ॥ ३९ ॥

तथ्यं विघोषितं सर्वैरितिहासविशारदैः ।
व्यासादारभ्य टायन्बीपर्यन्तं विश्वकीर्तिभिः ॥ ४० ॥

अधःपातो भवेत् तस्य यस्य बुद्धिर्विनश्यति ।
प्रमाणं बुद्धिलोपस्य हितवाक्येष्वनादरः ॥ ४१ ॥

भाषणं पेटलंडस्य बुद्धिलोपस्य दर्शकम् ।
भिद्येतुमक्षमा बुद्धिः शत्रुमित्रे प्रजाजने ॥ ४२ ॥

विपरीतानुमानस्य तद्वक्तव्यप्रतिक्रिया ।
आविरासीद् विशेषेण मद्रासे दक्षिणापथे ॥ ४३ ॥

सुब्रह्मण्येनाय्यरेण पेटलंडप्रजल्पनम् ।
वचोभिर्धीरगम्भीरैरन्याय्यमिति निन्दितम् ॥ ४४ ॥

समर्थकः स्वराज्यस्य मतं शासनघोषितम् ।
अगणित्वा तदाह्वानं स्वीकरोमीत्युवाच सः ॥ ४५ ॥

सहस्रं च सहस्रं च लोकास्तदनुवर्तिनः ।
स्वराज्यसंघनिष्ठायाः पत्रकेषु च घोषणाम् ॥ ४६ ॥

चक्रिरे तेऽवदन् सिद्धाः क्लेशान् सोढुमशेषतः ।
जन्मसिद्धस्वराज्यस्य वयं सर्वे समर्थकाः ॥ ४७ ॥

प्रतिक्रियातिसंतप्तो विश्रांटादिभ्य एव सः ।
प्रान्तेशः प्रेषयामास निम्नदत्तानुशासनम् ॥ ४८ ॥

लिखितेषु स्थले कस्मिन्नपि त्वं वसतिं कुरु ।
तस्माद् बहिर्न गन्तव्यं वर्जितव्यं च लेखनम् ॥ ४९ ॥

प्रजाकार्येण संबन्धः कर्तव्यो न कदाचन ।
नैव कार्यं भाषणं च न गन्तव्यं सभां प्रति ॥ ५० ॥

उपर्युक्तैर्बन्धनैर्वै व्यथितस्वातन्त्र्यवादिनी ।
दृढं यदा स्वराज्यस्य संघस्याद्यप्रवर्तिनी ॥ ५१ ॥

विश्रांटा योगिनी देवी ब्रह्मविद्योपदेशिनी ।
पूजिता वायुतैर्भक्तैर्नित्यं मातेति चादरात् ॥ ५२ ॥

पठित्वादेशवाक्यानि गता प्रान्ताधिपं प्रति ।
अपृच्छद् योगिनी सा तं किमर्थं च प्रवर्तनम् ॥ ५३ ॥

स्वातन्त्र्यनाशकस्यास्य ह्यादेशस्य कृतं त्वया ।
न्याय्यमार्गानुगामिन्याः संबन्धे मम शासक ॥ ५४ ॥

अधिकारमदोन्मत्तस्तस्यै प्रत्युत्तरं ददौ ।
सौजन्यरहितैः शब्दैरुच्चस्थानविसंगतैः ॥ ५५ ॥

न वादं कर्तुमिच्छामि युष्मत्प्रश्नोत्तरं तथा ।
नोत्सहेऽहं संप्रदातुं त्वत्तोऽपेक्षेऽविरादहम् ॥ ५६ ॥

निर्याणमाङ्गलदेशे वा लिखितादेशपालनम् ।
सनिर्बन्धनिवासेन विनिर्दिष्टे स्थले मया ॥ ५७ ॥

द्वयोरेकं निश्चितं यदविलम्बेन कथ्यताम् ।
भवत्या वायुतायिभ्यां शासनाय यथाविधि ॥ ५८ ॥

विश्वसेवार्पितायुष्का धर्मतीर्थस्वरूपिणी ।
विश्रांटा तद्वचः श्रुत्वा देवी तस्योत्तरं ददौ ॥ ५९ ॥

कर्तुं नास्ति तवोत्साहः संवादं वै मया सह ।
नापीच्छामि क्षणं कर्तुं त्वन्मुखस्यावलोकनम् ॥ ६० ॥

निर्गता सा बहिर्देवी मानिनी राजसद्मनः ।
प्रयाता निजवासाय कुटीरं निश्चितं तदा ॥ ६१ ॥

प्रक्षुब्धं भारतं सर्वमासेतूच्चहिमाचलम् ।
कृतस्य शासनेशेन मानभङ्गस्य वार्तया ॥ ६२ ॥

उल्लङ्घितं सभाः कृत्वा शासनस्यानुशासनम् ।
प्रकटं मद्रदेशस्थैः पुरग्रामनिवासिभिः ॥ ६३ ॥

अग्निहोत्रमुपक्रान्तं सेवकैर्दक्षिणापथे ।
सद्दयोद्घोषणारूपाः समर्पयितुमाहुतीः ॥ ६४ ॥

स्वदेशभक्तिकुण्डाग्नौ स्थण्डिले हृदयस्थिते ।
पुण्याद् देव्या विशालायास्तिलकस्य च चोदनात् ॥ ६५ ॥

संततं संघभक्तानां घोषणाभिर्निनादितम् ।
नभो भारतवर्षस्य चातुर्मास्येऽग्निहोत्रिणाम् ॥ ६६ ॥

पेठलंडप्रमादोऽपि भारतस्योपकारकः ।
नेमस्तदलनेतारो जाताः संघसभासदः ॥ ६७ ॥

सुरेन्द्रादिज्ञानवृद्धैर्वङ्गदेशेषु घोषितम् ।
दास्यदर्शनाभवत् तत्र नवान्दोलनसंभवः ॥ ६८ ॥

यथं समासदो जाता होमरूलाभिमानिनः ।
संघस्य च स्वराज्यस्य ज्ञातव्यं शासनेन तत् ॥ ६९ ॥

चिन्तामणिश्च भूर्गिश्च मुम्बापुर्यां जिनादयः ।
स्वयं सभासदो भूत्वा संघोत्कर्षे समुत्थिताः ॥ ७० ॥

रूप्याणामेकलक्षं च योमंजी दक्षिणां ददौ ।
अध्यर्पये स्वराज्यस्य संघस्य निलयाय वै ॥ ७१ ॥

संघस्य व्यासपीठेषु पारसीहिन्दुमुस्लिमाः ।
स्वराज्यस्य प्रचाराय संहताः खिस्तैः सह ॥ ७२ ॥

दृश्यं भव्यमुदात्तं च प्रेरकं धैर्यदायकम् ।
सन्मार्गदर्शकं यूनामभवत् स्फूर्तिदं तथा ॥ ७३ ॥

निर्बन्धेन विश्रांटाया निर्बन्धोच्छेदमूलिका ।
सत्प्रवृत्तिः समुत्पन्ना देशोद्धारचिकीर्षुषु ॥ ७४ ॥

भवेत् समुचितश्चात्र चम्पारण्ये ह गान्धिना ।
सत्याग्रहस्य निर्देशो कृतस्य श्रमिभूतये ॥ ७५ ॥

कर्मचन्द्रसुतो गान्धिवंशो मोहनपूर्वकः ।
समाप्य चाफ्रिकावासं मातृभूमिं समाययौ ॥ ७६ ॥

आश्रमं स्थापयामास साबर्मत्यास्तटे शुभे ।
समृद्धे गुर्जरे देशे सदाचाराभिवृद्धये ॥ ७७ ॥

आफ्रिकायां निवासेऽपि तत्रत्यानां सहायकः ।
आसीद् गान्धिस्तपःसिद्ध आर्तत्राणपरायणः ॥ ७८ ॥

एक एवाद्वितीयोऽभूत् स नेता हिन्दवासिनाम् ।
प्रवर्तिते हानिमतार्थं श्वेतकायैः सहाहवे ॥ ७९ ॥

टाल्स्टायसंज्ञकं क्षेत्रं स्थापितं तत्र गान्धिना ।
जातं तद् विश्वविख्यातं केन्द्रं विद्वेषक्षयवर्धनम् ॥ ८० ॥

वर्णविद्वेषमूलस्य शासनस्य विरोधकः ।
आफ्रिकाया दक्षिणाया अहिंसासमराग्रणीः ॥ ८१ ॥

युधिष्ठिरो जगद्बन्धुः पापभीरुश्च निर्भयः ।
आत्मसामर्थ्यसंपन्नः सत्यनिष्ठो निरायुधः ॥ ८२ ॥

सेवाव्रतो निरासक्तोऽहिंसावर्त्मोपदेशकः ।
साध्यसाधनयोः सम्यक् शुचित्वप्रतिपादकः ॥ ८३॥

गान्धिरेवंगुणोपेतस्तपः प्रारभताश्रमे ।
समुद्धाराय दीनानां दलितानां च सर्वथा ॥ ८४ ॥

चम्पारण्ये विहारस्थे युरोपीयैर्विनिर्मिता ।
कृषिर्नीलोत्पादनार्थं नीताश्च श्रमकारिणः ॥ ८५ ॥

दत्त्वा प्रलोभनं तेभ्यो द्रव्यस्य च सुखस्य च ।
निर्मितेश्च निवासानां श्रमाणां यमनस्य च ॥ ८६ ॥

कृतो वचनभङ्गस्तैः श्रमिणः क्षेत्रपालकैः ।
नीचां दासदशां नीताः स्वामिभिः क्रूरवृत्तिभिः ॥ ८७ ॥

त्रस्ता उद्विग्नचित्तास्ते संतप्ताश्चुक्रुशुर्भृशम् ।
गान्धये वर्णयामासुः केचिद् दुःस्थितिमात्मनः ॥ ८८ ॥

संसदः सार्वभारत्याः कालीपुर्यधिवेशने ।
उपस्थितो देशभक्तो गान्धिर्जनहिते रतः ॥ ८९ ॥

अन्येऽपि च समाजग्मुः सदस्यास्तिलकादयः ।
सभाकार्याय सर्वेभ्यः प्रान्तेभ्यः कालिकापुरीम् ॥ ९० ॥

व्यक्तीकर्तुं स्वराज्येच्छां लोकानां हिन्दवासिनाम् ।
संयुक्तयोजनाबद्धामाङ्ग्लानामनुमोदनम् ॥ ९१ ॥

आनुकूल्यं च संप्राप्तुं स्वराज्याप्तिसमुद्यमे ।
प्रेषितव्यमाङ्ग्लभूम्यै शिष्टानामेकमण्डलम् ॥ ९२ ॥

ऐकमत्येन निर्णीतं मिलितैर्देशसेवकैः ।
युगपच् शिष्टनामानि निश्चितानि सभास्थले ॥ ९३ ॥

समाप्ते च सभाकार्ये स गान्धिः सत्वरं जहौ ।
कालिकानगरीं भव्यां चम्पारण्यमगात् ततः ॥ ९४ ॥

न चम्पारण्यसीमान्तःप्रवेशं कर्तुमर्हसि ।
प्रवर्तिता मयादेशमद्य जिल्हाधिकारिणा ॥ ९५ ॥

गान्धिरेवं समादिष्टः शासनायोत्तरं ददौ ।
विरामो निश्चयान्नैव यामि चम्पारनं प्रति ॥ ९६ ॥

समीक्षितुं स्थितिं तत्र श्रमिकाणां विशेषतः ।
कुरु त्वं यच्च कर्तव्यमधुना मन्यते त्वया ॥ ९७ ॥

निरोधितः शासनस्य दूतैर्गान्धिः परे दिने ।
दण्डन्यायालये गान्धिरुवाच न्यायपूरुषम् ॥ ९८ ॥

अत्रागमनहेतुर्मे परिस्थितिसमीक्षणम् ।
स्वास्थ्यभङ्गो न योऽत्रासीद् विनिर्मितिस्तापदायिनी ॥ ९९ ॥

परस्पारव्यसमस्येयं न ह्यासीद् राजनैतिकी ।
अथ भूतद्वयाहल्ये: प्राधान्येनोपयुक्तता ॥ १०० ॥

कर्तव्यं सर्वलोकानां यद् ये निजहितप्रदम् ।
प्रशासनस्य कस्यापि क्षेत्रं तद् न तु केवलम् ॥ १०१ ॥

प्रयत्नं कर्तुमिच्छामि कलहस्योपशान्तये ।
स्वामिसेवकयोर्मध्ये यश्चात्र समुपस्थितः ॥ १०२ ॥

उपस्थितिर्यदि मदीयेयं शासनस्य न संमता ।
समर्थं तद् बलाद् नेतुं मां सुदूरस्थलं प्रति ॥ १०३ ॥

उपस्थिते विरोधेऽन्तर्बुद्धिशासनवाक्ययोः ।
भजामि शरणं बुद्धिं न हि राज्ञोऽनुशासनम् ॥ १०४ ॥

श्रुत्वोत्तरं संशयात्मा न्यायाधीशोऽतिविस्मितः ।
विरराम न्यायकार्यादन्वेष्टुं नूतनं पथम् ॥ १०५ ॥

ज्ञात्वोत्तरं प्रदत्तं तत् स्पष्टं जिल्हाधिकारिणम् ।
आदिदेश प्रान्तमुख्यः पूर्वाज्ञां प्रतिसंहर ॥ १०६ ॥

निर्बन्धरहितो गान्धिः संचारार्थं यदा ययौ ।
जयः सत्याग्रहस्यायं प्रथमः क्रान्तिकारकः ॥ १०७ ॥

दोलायितं स्वराज्यस्य समुत्थानेन भारतम् ।
विवर्धितस्तदुत्साहः सत्याग्रहसमुद्भवात् ॥ १०८ ॥

कावेरीगौतमीगङ्गासरितां संगमः शुभः ।
विझांटावालगान्धीनां तथा संधिः शुभप्रदः ॥ १०९ ॥

परिणामरश्मिशक्तीनां संहतेः फलदायकः ।
उत्थापनाय लोकानां भारते विषमाकुले ॥ ११० ॥

अतिष्ठत् तिलकस्तत्र मध्ये गान्धिविझांटयोः ।
तयोरैक्यस्य निर्मित्यै सोऽभवद् यत्नवान् सदा ॥ १११ ॥

कथं शक्यं जगद्युद्धे ब्रिटनस्याधिकारिभिः ।
सहकार्यं भारतस्य तिलकोऽचिन्तयद् मुहुः ॥ ११२ ॥

आङ्ग्लानामाहवारम्भे जाता युद्धपरिस्थितिः ।
प्रभावात् शत्रुसैन्यस्य प्रतिकूलेत्यसंशयम् ॥ ११३ ॥

साम्राज्यघटकीभूता आफ्रिकाकानडादयः ।
स्वायत्तशासना आसन्नाङ्ग्लसाह्याय तत्पराः ॥ ११४ ॥

अन्ये चाप्यङ्किता देशा हिन्दभूसिंहलादयः ।
आगच्छेयुः सहायास्ते पूर्वगोलार्धसंस्थिताः ॥ ११५ ॥

इत्येवेच्छाङ्ग्लदेशस्थसार्वभौमाधिकारिणाम् ।
आसीद् बहुविधस्तेषां प्रयत्नानामुपक्रमः ॥ ११६ ॥

लोकानां युद्धसाह्याय स्थापितं साह्यमण्डलम् ।
अधिकारिकृपापार्थं जनास्तस्य सभासदः ॥ ११७ ॥

उत्साहो न समुत्पन्नः स्वीकर्तुं वीरजीवनम् ।
भारते प्रान्तभागेषु उद्यमेन सभासदाम् ॥ ११८ ॥

तिलकेन स्वयंस्फूर्त्या त्वादिष्टा भारते नजाः ।
गन्तव्यं युद्धशालास्य मानार्थं युवकैर्द्रुतम् ॥ ११९ ॥

युद्धविद्यावतां नृणां देशसेवार्पितात्मनाम् ।
प्राचुर्यं येषु लोकेषु तेषां स्वाराज्यमुत्तमम् ॥ १२० ॥

सङ्गरे विद्यमाने च कालः समुचितो भवेत् ।
शस्त्रविद्याशिक्षणस्य क्षात्रवृत्त्यभिलाषिणाम् ॥ १२१ ॥

उपकारः शासनस्य विषमे यः कृतो जनैः ।
अभीप्सितार्थसिद्ध्यर्थं भवत्येवोपकारिणाम् ॥ १२२ ॥

मनुष्याणां न पूर्णत्वं यावद् देशस्य रक्षणे ।
युद्धविधानभिज्ञत्वं तावद् देशश्च दुर्बलः ॥ १२३ ॥

वञ्चिताः स्वार्थहेतुत्वाद् शासकैर्हिन्दवासिनः ।
अभ्यासाद् युद्धशास्त्रस्य शस्त्राणां दर्शनादपि ॥ १२४ ॥

प्रस्तुते विषमे तेषामपेक्षा पुष्कलस्य तु ।
शत्रूणां पारिपन्थ्याय लोकसाहाय्य यतेत ॥ १२५ ॥

तदिच्छा स्वार्थमूलापि भारतस्य हितप्रदा ।
युद्धस्य पिहितं द्वारं व्यसने तैरपावृतम् ॥ १२६ ॥

उत्सुकाः शिक्षणं दातुं योजनस्य च संप्रति ।
शस्त्राणां सर्वयन्त्राणां युद्धकालोचितस्य ते ॥ १२७ ॥

आपत्तिराङ्गलराज्यस्य सुसंधिर्हिन्दवासिनः ।
अज्ञातशस्त्रविद्यां स चाधिगन्तुमुपस्थितः ॥ १२८ ॥

वीरत्वोपासना श्रेष्ठा कर्तव्या युवकैः खलु ।
जाता दैवेन सुलभा कुरुध्वं दृढनिश्चयम् ॥ १२९ ॥

कर्तुं तामात्मसाद् विद्यां स्वार्थाय च हिताय च ।
प्रार्थयेऽहं जनान् सर्वान् वृद्धो भारतसेवकः ॥ १३० ॥

लोकानामकरोद् बाल उपदेशं निरन्तरम् ।
मतेन प्रायशोऽयुक्तः शासनाधिपतेस्तु यः ॥ १३१ ॥

तिलकस्य मतस्यैव प्रचारं तेऽनुयायिनः ।
कुर्वन्ति स्म विदर्भे च कर्णाटे दक्षिणापथे ॥ १३२ ॥

सहकार्याभ्यासनेन स्वास्थ्यभावो विनिर्मितः ।
शासनेश्वरचित्ते तु तथा साम्राज्यवादिषु ॥ १३३ ॥

स्वातन्त्र्याकाङ्क्षिणः सर्वे युद्धज्ञानाभिलिप्सवः ।
सैन्यप्रवेशमिच्छन्ति सहकार्यसमुत्सुकाः ॥ १३४ ॥

साह्यस्य स्वीकृतिस्तेषां संकटस्य च भाविनः ।
साम्राज्यस्य विनाशस्य बीजमेवोत्पन्नं भवेत् ॥ १३५ ॥

तिलकः कथयामास युद्धोद्देशं प्रकाशितम् ।
आङ्ग्लफ्रेंचादिराष्ट्राणां शासनैर्मन्त्रिभिस्तथा ॥ १३६ ॥

रक्षार्थं लघुराष्ट्राणां स्वातन्त्र्यस्य प्रवर्तितम् ।
मित्रराष्ट्रैरिदं युद्धं कैसरस्य विरोधिभिः ॥ १३७ ॥

बालेनोद्घोषिता या वै युद्धसाह्यानुकूलता ।
बालमोहनयोर्ह्येरेकरूपत्वदर्शिका ॥ १३८ ॥

गौणीकृत्य व्यक्तिभावं राष्ट्रदृष्ट्यावलोकनम् ।
द्वयोरासीत् समानाच प्रथेयं शिष्टसंमता ॥ १३९ ॥

कुमतेर्नश्वरत्वेऽसौ यथाकालं यथाक्रमम् ।
विश्वासं तिलकश्चक्रे वेदान्तोत्क्रान्तिपारगः ॥ १४० ॥

सभायां तिलकश्चक्रे शासनस्याभिनन्दनम् ।
यतस्तैर्हिन्दुवासिभ्यः स्वयं सैनिकपात्रता ॥ १४१ ॥

आराधनाय लोकानां प्रवृत्तैकविधेयके ।
सैनिकानां दले तेषां प्रवेशः सुलभो यतः ॥ १४२ ॥

अध्यक्षोऽभूत् तत्सभाया रघुनाथः परांजपे ।
भारते गणितज्ञानां सर्वेषां मूर्ध्नि स्थितः ॥ १४३ ॥

अध्यक्षभाषणे तेन लोकेभ्यश्चाग्रहः कृतः ।
प्रवेष्टव्यं दलं सर्वैस्तरुणैर्देशसेवकैः ॥ १४४ ॥

द्वाविंशतिसहस्राणामुपलब्धिर्भवेत् सुखम् ।
सैनिकानां महाराष्ट्रे चालो व्यानष्ट मतं तदा ॥ १४५ ॥

तिलकः कथयामास शासनाय च संततम् ।
कर्तव्या सार्वभौमेन घोषणा राजनैतिकी ॥ १४६ ॥

अथाप्तुं जनतासाह्यं कृतो योऽयमुपक्रमः ।
यदासे तस्य लोकेभ्यो वैधमाश्वासनं खलु ॥ १४७ ॥

रक्षणं लघुराष्ट्राणां स्वातन्त्र्यस्येति घोषितम् ।
कर्तव्या विरतता व्याप्तियुद्धोद्देशस्य संप्रति ॥ १४८ ॥

अङ्कितेषु च राष्ट्रेषु स्वायत्तत्वं विनिर्मितः ।
निश्चयः व्यापनीयोऽयं सुस्पष्टं युद्धहेतुषु ॥ १४९ ॥

स्वयंनिर्णयतत्त्वस्य भूगोले मान्यताखिले ।
भेदो देशानुसारेण विषयेऽस्मिन्ननर्थकः ॥ १५० ॥

अङ्कितानां स्वतन्त्राणां स्वायत्तानां च योग्यता ।
काले युद्धोत्तरे तुल्या देशानां च भविष्यति ॥ १५१ ॥

दातव्यं भारतीयेभ्यः फ्रांसाङ्ग्लामेरिकादिभिः ।
आश्वासनमुपर्युक्तं कृत्वा नूतनघोषणाम् ॥ १५२ ॥

समुत्साह्य जनान् सर्वान् युद्धसाह्याय तत्परान् ।
कर्तुं समुद्यता आसन् सर्वे तिलकपक्षिणः ॥ १५३ ॥

सहकार्यं दधानाय युद्धोद्योगेष्वहर्निशम् ।
यालाय सत्यनिष्ठाय दुर्दुरुर्धिकारिणः ॥ १५४ ॥

स्वराज्यप्राप्तये तेन यतः संघो विनिर्मितः ।
प्रवर्तितं युद्धकाले वैधमान्दोलनं महत् ॥ १५५ ॥

प्रोवाच तिलको नित्यं शासनस्याधिकारिणः ।
एकं शाश्वतसिद्धान्तं प्रवक्ष्यामि हिताय वः ॥ १५६ ॥

भाविनोऽभ्युदयस्याशा प्रचोदयति पूरुषम् ।
साहसाय च शौर्याय त्यागायात्मार्पणाय च ॥ १५७ ॥

भवेद् युद्धकृतत्यागः सोपानं मन्दिरं प्रति ।
स्वतन्त्रहिन्द्भूदेव्या गन्तुं शत्रौ पराजिते ॥ १५८ ॥

गम्भीराश्वासनं तेभ्यो दातुं शासनमर्हति ।
सन्ति शुश्रूषयो लोका युद्धाय कृतनिश्चयाः ॥ १५९ ॥

साम्राज्यवादिनः स्तब्धा नैच्छन् वक्तुं सयुक्तिकम् ।
विषयेऽस्मिन् किंचिदपि केवलं स्वार्थतत्पराः ॥ १६० ॥

देशे पञ्चनदावर्ते प्रवेशः प्रतिषेधितः ।
आदिष्टस्तिलकश्चैवं पंजाबस्याधिकारिभिः ॥ १६१ ॥

आह बालो दिने तस्मिन् जनानाग्रहपूर्वकम् ।
सैन्ये प्रवेशः सकलैः कर्तव्यो युवकैर्मुदा ॥ १६२ ॥

सर्वं मत्वेति कुर्वन्ति संमूढा रज्जुताडनम् ।
कृतिस्तद्वद् शासनस्य हास्योद्वेगप्रवर्तिनी ॥ १६३ ॥

राजप्रतिनिधिः श्रेष्ठः सार्वभौमानुशासनात् ।
युद्धार्थं समितिं चक्रे राजधान्यां महत्तमाम् ॥ १६४ ॥

समाहृता विचाराय भारतप्रमुखा नराः ।
लोकवन्द्या जगन्मान्या अग्रयाः पक्षवर्तिनः ॥ १६५ ॥

लोकप्रतिनिधीभूता जातिवंशाभिमानिनः ।
संपादकाश्च पत्राणां श्रेष्ठिनो व्यवसायिनः ॥ १६६ ॥

गणेशोऽसौ विदर्भस्थो यथाविधि निमन्त्रणात् ।
राजप्रतिनिधेः प्राप्तः दिल्लीपरिषदं प्रति ॥ १६७ ॥

खापर्डे च यथाकालं दधौ तमधिवेशने ।
विचारार्थं सदस्यानां प्रस्तावं पूर्ववर्णितम् ॥ १८० ॥

अग्राह्योऽयमिति प्राह सभाध्यक्षोऽञ्जसा तदा ।
प्रस्तावो मन्मतेनैव मृतपिण्ड इवास्त्ययम् ॥ १८१ ॥

नोद्धाराय ददौ स्थानमाकाङ्क्षाणां च संधिनाम् ।
संप्राप्तेभ्यः समारोहं सभासद्भ्यस्तदा खलु ॥ १८२ ॥

भ्रूणहत्योपमं घोरं विहितं तेन पातकम् ।
अस्त्याकाङ्क्षा स्वराज्यस्य शाश्वती त्वजरामरा ॥१८३॥

नीतिज्ञानां न निष्पद्या निराशाध्यक्षनिर्णयात् ।
यतो भवेद् शक्तिहीनः शत्रुः पापस्य संचयात् ॥ १८४ ॥

सन्तबालकहत्यानां पातकात् श्ष्णविग्रहः ।
दैत्यस्य पातकाद् स्तम्भाद् नृसिंहः प्रकटोऽभवत् ॥ १८५ ॥

शिष्टैर्नियोजितैः पूर्वं सभासद्भिः प्रदर्शिता ।
सूचनायाः शासनस्य संमतिर्भाषणैस्तदा ॥ १८६ ॥

भाषणान्ते जगादोच्चैरध्यक्षश्च सभासदः ।
सूचना चर्चिता सम्यक् सर्वेषामेव संमता ॥ १८७ ॥

उपलब्धिर्मूषकस्य पर्वतोत्खननाद् यथा ।
क्षुद्रेव फलनिष्पत्तिर्जाता परिषदस्तथा ॥ १८८ ॥

तिलकादिविभूतीनां मत्सरस्य प्रदर्शनम् ।
शासनस्याधिमुख्येन कृतं तदधिवेशने ॥ १८९ ॥

निन्दाया विषयो जातो लोकानां भारते च तत् ।
प्रतिध्वनिः प्रचण्डोऽभूद् गान्धिव्यक्तितिरस्कृतेः ॥ १९० ॥

राजधान्यां शासनस्य दुष्कृतेस्तीव्रवाचया ।
गर्जनेव पयोदानां प्रथमेऽहनि मण्डपे ॥ १९१ ॥

न तं विना कोऽपि नेता समाहूतः प्रतिष्ठितः ।
शासनस्यास्य कृत्यस्य निषेधाय समुत्थितः ॥ १९२ ॥

अन्यायस्य प्रतीकारः स्वभावोऽस्ति महात्मनाम् ।
धरित्रे प्रत्ययो गान्धेर्दृश्यतेऽस्य मुहुर्मुहुः ॥ १९३ ॥

अन्यद् यच् चिन्तनीयं च वृत्तं तद् युद्धसंसदि ।
वर्णयामि यथाज्ञातं संक्षेपेण यथामति ॥ १९४ ॥

संसूचितं गणेशेन जनताहितशोधनम् ।
समर्थितं न केनापि समारोहाधिवेशने ॥ १९५ ॥

मयैकदा कृतः प्रश्नः श्रीनिवासाय शास्त्रिणे ।
नेत्रे प्रागतिकानां वै विद्वद्वर्याय धीमते ॥ १९६ ॥

भवत्पक्षः स्थितस्तूष्णीमकृत्वा तत्समर्थनम् ।
यदि त्वं मन्यसे युक्तं कृपया ब्रूहि कारणम् ॥ १९७ ॥

उक्तं तेन न वै किंचिदाक्षेपार्हं च शोधने ।
प्रवेशिते गणेशेन राजधान्यधिवेशने ॥ १९८ ॥

न दृष्टं तद् मया पूर्वं न विज्ञातस्तदाशयः ।
यथार्थेन सभासद्भिरध्यक्षाद्भुतनिर्णयात् ॥ १९९ ॥

अप्राप्तं तद् विचाराय समाक्षेप्तारिति यतः ।
मया नैव स पप्रच्छे किंचिदेव ततःपरम् ॥ २०० ॥

जातं तदुत्तरात् स्पष्टं संकल्पः कोऽपि नो कृतः ।
आहूतैर्नेतृभिः श्रेष्ठैर्यन्नर्ताकर्तुं जनेप्सितम् ॥ २०१ ॥

गणेशकृतयत्नस्य महत्त्वं वर्ततेऽधिकम् ।
अस्त्येवैको दूरदर्शी सर्वस्मिन्नन्धमेलने ॥ २०२ ॥

ध्येयवादी भारतस्य जागरूको हिते रतः ।
इति लोकैर्भारतीयैर्दृष्टमाङ्ग्लैर्विशेषतः ॥ २०३ ॥

मरुस्थल्यां वृक्षमेकं दृष्ट्वा पल्लवशोभितम् ।
श्रान्तो यात्री भवेत् तुष्टो देवकारुण्यदर्शनात् ॥ २०४ ॥

तादृशी भारतीयानां निराशानां सभासदाम् ।
आविर्भूता मनोवृत्तिः खापर्डेदिव्यदर्शनात् ॥ २०५ ॥

अतिकारुणिकः कोऽपि वर्तते जगदीश्वरः ।
कृपया यस्य विपदां हर्ता तिष्ठति संकटे ॥ २०६ ॥

राजनीतिर्न बालानां क्रीडोद्यानं मनोरमम् ।
निबिडं काननं यत्र वर्त्म प्रच्छादितं तृणैः ॥ २०७ ॥

तुङ्गवृक्षाच्छादितार्कं दिवापि तिमिरावृतम् ।
क्रूरश्वापदसंचारं नागसर्पभयावहम् ॥ २०८ ॥

प्रगतेस्तत्र लोकानां साधनं सावधानता ।
मायाविषु च मावित्वं विद्रोहो द्रोहवत्सु च ॥ २०९ ॥

उक्तं शास्त्रे च मर्यादा यथा यक्षस्तथा बलिः ।
प्रतियोगं विना नैव सहकारप्रबोधना ॥ २१० ॥

खापर्डेसूक्तसारः सूचकश्चैव भाविनः ।
प्रतियोगप्रधानस्य सहकारस्य वर्त्मनः ॥ २११ ॥

नियोजितं समित्या यद् भारते युद्धमण्डलम् ।
तत्कार्यस्य प्रचाराय मुम्बापुर्यां सभाभवत् ॥ २१२ ॥

चालनं तन्मण्डलस्य स्वाधीनं शासकस्य तु ।
प्रशासनेन नाहूता दिल्लीपरिषदं प्रति ॥ २१३ ॥

तिलकालीबन्धयुग्मविज्ञप्ता लोकपूजिताः ।
निन्दितं तत् तीव्रशब्दैर्गान्धिप्रभृतिनेतृभिः ॥ २१४ ॥

टीकायाः परिणामोऽभूद् मुम्बईशासनाधिपः ।
ददौ निमन्त्रणं तत्र तिलकाय सभां प्रति ॥ २१५ ॥

निमन्त्रितो नृसिंहाख्यः केळकरस्तत्सहायकः ।
निमन्त्रणं स्वीकृतं च द्वाभ्यां तस्मै निवेदितम् ॥ २१६ ॥

भाषणं कर्तुमिच्छावो मुम्बईपरिषत्स्थले ।
प्रदत्ता संमतिस्ताभ्यां सभाधिकृतचालकैः ॥ २१७ ॥

नृसिंहसहितो बालस्ततः परिषदं गतः ।
दशमेऽहनि जूनस्य मुम्बापुर्यां नियोजिताम् ॥ २१८ ॥

चर्चाकाले सभाध्यक्षः कर्तुं तिलकमादिशत् ।
भाषणं तिलकस्तस्थौ भाषणार्थं तदाज्ञया ॥ २१९ ॥

उवाच तिलकस्तत्र ज्ञातं पूर्वं मया यतः ।
सभायां न विचारार्हा भवेत् शोधनसूचना ॥ २२० ॥

प्रस्तावस्येति नानीता कापि शोधनसूचना ।
मया तथापि लोकानां कथयामि मनोगतम् ॥ २२१ ॥

आदौ वदितुमिच्छामि वयं भारतवासिनः ।
प्रदातुमुद्यताः प्राणान् परचक्रे समागते ॥ २२२ ॥

अथाप्यहं विशेषेण कथयामि सभासदः ।
संरक्षणस्वराज्ये हि विद्येते समवायिनी ॥ २२३ ॥

एकं विहाय चर्चापि द्वितीयस्य न शक्यते ।
परस्परातिसंलग्नौ विद्येते विषयावुभौ ॥ २२४ ॥

आकर्ण्य वाग्मिनं वाक्यमवदत् शासनाधिपः ।
वेलिंग्डनः पूर्वदत्तं विस्मरन् वचनं निजम् ॥ २२५ ॥

सभायां विद्यमानायामनुज्ञां न ददाम्यहम् ।
राजनीतिपरं वक्तुं कस्मैचन जनाय ह ॥ २२६ ॥

अध्यक्षभाषणेनात्र समुत्पन्ना परिस्थितिः ।
सभात्यागं विना यस्यां न मार्गः स्वाभिमानिनः ॥ २२७ ॥

उक्त्वैवं तिलको नेता सभास्थानाद् बहिर्गतः ।
तिलकं चान्वगच्छंस्ते चत्वारस्तत्सभागृहात् ॥ २२८ ॥

हार्नीमनो नृसिंहश्च प्रख्यातौ पत्रपण्डितौ ।
यंमन्जिरुद्यमिश्रेष्ठो जम्नादास उदारधीः ॥ २२९ ॥

धृतराष्ट्रसभास्थानात् पुरा पाण्डुसुता यथा ।
सभास्थानं ततो जातं वनं हिंस्रपशुप्रियम् ॥ २३० ॥

तिलकेन कृतं लेखे सभाकार्यसमीक्षणम् ।
सभात्यागस्य पुष्ट्यर्थमेकं वचनमुद्धृतम् ॥ २३१ ॥

नीतिकाव्याद् भर्तृहरेर्निम्नं वृत्तं समर्पकम् ।
प्रतियोगप्रधानस्य सहकार्यस्य बोधकम् ॥ २३२ ॥

आस्था चेद् नास्ति राजंस्ते मयि स्वस्यपि नास्ति मे ।
सुतरामेव गच्छामि वाक्यं भर्तृहरेरिदम् ॥ २३३ ॥

प्रतियोगस्य वक्तारं युयुत्सुपथगामिनम् ।
अश्रद्धया वै शासनस्य प्रवृत्तिस्तिलकं प्रति ॥ २३४ ॥

तिलकस्य प्रयत्नस्य ज्ञाने शासनमक्षमम् ।
अकरोत् तद्विपर्यासं तत्क्लेशस्यैव चिन्तनम् ॥ २३५ ॥

अधिकारिस्वभावोऽभूदुभयोः केन्द्रराज्ययोः ।
मूर्खत्वाद् नैव विज्ञाता सन्मार्गाच्युतिरात्मनः ॥ २३६ ॥

सम्राडनियुक्ते सैन्यस्य पद उच्चाधिकारिणः ।
योजना भारतीयानां भवेद् यदि सुनिश्चितम् ॥ २३७ ॥

युद्धसाह्यस्य सामान्या भवेयुस्तत्परा जनाः ।
पञ्चविंशतिसाहस्रं सैनिकानानयाम्यहम् ॥ २३८ ॥

यदि न्यूना भवेत् संख्या दण्डनीयो भवाम्यहम् ।
यावती भवति न्यूना तस्याः शतगुणं धनम् ॥ २३९ ॥

द्रव्यं तद् गान्धिहस्तेऽहमर्धलक्षमितं खलु ।
निधिरूपेण न्यस्यामि सर्वेषां ज्ञातमस्त्विदम् ॥ २४० ॥

भवितव्यं भारतस्य स्पृहणीयं भवेदिति ।
युद्धान्ते दृढविश्वासो निर्मातव्यः प्रशासकैः ॥ २४१ ॥

प्रार्थितं तिलकेनैवं सभायां गान्धिरब्रवीत् ।
मुम्बईशासनेशस्य कृतिस्तेन विनिन्दिता ॥ २४२ ॥

भारते युद्धपरिषद् विरुद्धध्येयनिष्ठयोः ।
शमाय हृदयस्यस्य कलहस्य न वै क्षमा ॥ २४३ ॥

एतत् सर्वं दर्शयति सिद्धान्तं राजनैतिकम् ।
सदैव भवति स्पष्टं न संधिस्त्यागिभोगिनोः ॥ २४४ ॥

साम्राज्यवादिनः सर्वे शासकाः स्वार्थलोलुपाः ।
भारतीयास्त्यागिनो ये स्वराज्यस्याभिलाषिणः ॥ २४५ ॥

साम्राज्यरक्षणायैव शासका युद्धसंमुखाः ।
स्वराज्यायैव युद्धेऽस्मिन्नपरे त्यागतत्पराः ॥ २४६ ॥

स्वदेशस्यापत्तिर्व्यथयति हि चित्तं बहुविधं
तदुद्धारे शक्तिक्षतिरतितरा यस्य सकला ।
ददर्शाङ्गं शत्रोर्हननसुलभं यः प्रथमतो
महायुद्धे प्राप्ते लसति तिलको भारतगुरुः ॥ २४७ ॥

इति माधवविरचिते श्रीतिलकयशोऽर्णवे युद्धपरिषद्वैफल्यनामा अष्टपञ्चाशत्तमस्तरङ्गः ।

# एकोनषष्टितमस्तरङ्गः

न वै क्रान्तिं विना देशे व्यवस्थायाः कदापि सा ।
अभ्युन्नतिर्भारतस्य निर्मितायाः प्रशासकैः ॥ १ ॥

प्रस्थापितव्यवस्थायां सार्वभौमानुशासनम् ।
प्रवर्तते न संबन्धस्तत्र लोकमतस्य तु ॥ २ ॥

सार्वभौमाधिकारस्य संक्रान्तिश्च प्रजागणे ।
स्यादेवं राष्ट्रनेतॄणां प्रयत्नः क्रान्तिरुच्यते ॥ ३ ॥

विद्यमानव्यवस्थायाः परिवर्तनमीप्सितम् ।
लोकैः सर्वैर्भारतस्य संस्थाभिस्ताभिरेव च ॥ ४ ॥

संपादनाय साह्यस्य कृतासीत् संघनिर्मितिः ।
तिलकेन महाराष्ट्रे मद्रासे च विझांटया ॥ ५ ॥

उभाभ्यामेव संघाभ्यामचिरेण महद् यशः ।
प्राप्तमासीत् प्रयत्नेन लोकोत्साहप्रवर्धकम् ॥ ६ ॥

संघकार्यसमुन्नत्यै तिलकोऽसूचयज् जनान् ।
कर्तव्या वै विझांटेव ह्यागामिनि द्विसेंबरे ॥ ७ ॥

भाविन्याः कालिकापुर्यामध्यक्षा राष्ट्रसंसदः ।
संघसंस्थापिका देवी योगिनी शक्तिधारिणी ॥ ८ ॥

स्थानबद्धा कृता साध्वी सर्वलोकाभिवन्दिता ।
चुक्षुभुर्धार्मिका लोका जाताः शासनदूषकाः ॥ ९ ॥

दत्त्वाध्यक्षपदं तस्यै स्वादरस्य प्रदर्शनम् ।
चेच्छन् कर्तुं च सोत्साहं शासकानां तिरस्कृतेः ॥ १० ॥

दण्डिता चेच् शासकेन लोककार्यहितैषिणी ।
स्वातन्त्र्यमुत्तरं तस्मै कृत्वा तदुचितादरम् ॥ ११ ॥

स्वराज्यसंघकार्यस्य समारब्धस्य भारते ।
प्रदत्ता संमतिर्लोकैः स्पष्टा निःसंशयं तदा ॥ १२ ॥

प्रजामतप्रभावेण विज्ञांटावन्धमुक्तता ।
उद्घोपिता शासनेन सार्वभौमानुशासनात् ॥ १३ ॥

प्रयागे सा गता क्षिप्रं सार्वभारतसंसदम् ।
उपस्थितस्तत्र वालः स्वराज्योपासको महान् ॥ १४ ॥

विझांटायालयोर्योगे त्रिवेणीसंगमे शुभे ।
उपस्थिता भारतीया मेनिरे सुफलप्रदम् ॥ १५ ॥

तदानीं प्रार्थनापत्रे लिखिते द्वे पुरस्कृते ।
समर्पयितुमाङ्ग्लेभ्यो भारतीयप्रजाजनैः ॥ १६ ॥

स्वायत्तशासनं शीघ्रं स्थापनीयं पुरातने ।
सुसंस्कृते भारताख्ये राष्ट्रेऽस्मिश्चक्रवर्तिना ॥ १७ ॥

लक्षाधिकमनुष्याणां स्वाक्षरीभिः समर्थितम् ।
कर्तव्यं चैव लोकेभ्य इत्यादेशः प्रवर्तितः ॥ १८ ॥

राष्ट्रीयसंसदो मुख्यैः संघयोश्चालकैरपि ।
एकं पत्रं महाराष्ट्रसंघस्यासीद् द्वितीयकम् ॥ १९ ॥

गान्धिना लिखितं सर्वहिन्दुमुस्लिमसंमतम् ।
वितीर्णमुत्तरे भागे भारतस्य विशेषतः ॥ २० ॥

स्वराज्यवादिभिर्मुख्यैः सर्वे विज्ञापिता जनाः ।
प्रार्थनापत्रकस्यान्ते स्वाक्षरीं कर्तुमात्मनः ॥ २१ ॥

अधिकारो जन्मसिद्धः स्वराज्यस्य विनिर्मितेः ।
स्वर्गादपि गरीयस्यां जन्मभूम्यां चिरंतनः ॥ २२ ॥

मानवानामित्युवाच तिलकः सततं जनान् ।
उद्घोपितोऽयं सिद्धान्तो दिदृक्षणाशु निरन्तरम् ॥ २३ ॥

स्वातन्त्र्योपासकैर्लोकैः स्वाक्षरीसंग्रहार्थिभिः ।
तद्घोषणानिनादेन पूरितं भारताम्बरम् ॥ २४ ॥

तिलकोऽदर्शयत् प्रायो युद्धकालसमुद्यमे ।
प्रत्यक्षं वा परोक्षं वा दाक्षिण्यं प्रतिपत्तये ॥ २५ ॥

गान्धेरनुमतेः किंवा सदिच्छाया महात्मनः ।
शङ्कात्मनां शासकानां न्यूनीकर्तुमुपद्रवम् ॥ २६ ॥

अब्देऽस्मिन् कार्यबाहुल्यादागतौ च सहस्थितौ ।
लोकमान्यमहात्मानावुभौ पुरुषपुंगवौ ॥ २७ ॥

उभाभ्यामर्जितं ज्ञानं परस्परविचारयोः ।
यद्वधेऽन्योन्यसंबन्धश्चित्तयोरादरस्तथा ॥ २८ ॥

तद्वर्षान्तिमसप्ताहे कालिकानगरेऽभवत् ।
राष्ट्रीयसंसदो भव्यं विख्यातमधिवेशनम् ॥ २९ ॥

वैकुण्ठनाथसेनाख्यो वङ्गदेशे सुविश्रुतः ।
बभूव स्वागताध्यक्ष आतिथ्यकुशलो नरः ॥ ३० ॥

सिंहासने सभाध्यक्षा योगिन्येव व्यराजत ।
कल्याणाय ह लोकानामवतीर्णा सरस्वती ॥ ३१ ॥

विज्ञांटा धर्मतत्त्वज्ञा राजनीतिसमीक्षका ।
ब्रह्मविद्याभ्यासकानां देशिका मातृवत्सला ॥ ३२ ॥

सहस्रं पञ्चगुणितमुपतस्थुः सभासदः ।
निर्वाचिता अनैर्देशे गन्तुं राष्ट्रसभां प्रति ॥ ३३ ॥

संदेशं प्रेषयामासुर्मद्रासप्रान्तवासिनः ।
स्वराज्यप्रार्थनापुष्ट्यै पञ्चमब्राह्मणेतराः ॥ ३४ ॥

इंग्लंदं प्रति नेतव्यं शिष्टानामेकमण्डलम् ।
निवेदयितुमाङ्ग्लेभ्य आकाङ्क्षा भारतस्य वै ॥ ३५ ॥

प्रस्ताव एतदर्थस्य बोधकः सर्वसंमतः ।
सोत्साहं जयशब्दैश्च सभाया अधिवेशने ॥ ३६ ॥

युक्ते प्रतिनिधित्वे द्वौ वाप्टिस्टः पोलकस्तथा ।
परिषद्याङ्ग्लदेशस्य हिन्दभूमिहितैषिणाम् ॥ ३७ ॥

यशसे राष्ट्रकार्यस्य क्लेशिता ये च सैनिकाः ।
सदस्यास्ताश्चक्रिरे तेषां प्रस्तावेनाभिनन्दनम् ॥ ३८ ॥

मांटेग्युना कृता गुर्वी घोषणा राजनैतिकी ।
मन्त्रालयाद् भारतस्य शासनोद्देशबोधिनी ॥ ३९ ॥

उद्देशः सार्वभौमस्य स्वायत्तस्य विनिर्मितिः ।
अन्तर्भूतस्याङ्ग्लसंघे भारतस्येति घोषितम् ॥ ४० ॥

आवश्यकं हि निर्माणं तदुद्देशस्य सिद्धये ।
स्वयंशासितसंस्थानां साधिकानां क्रमोन्नतेः ॥ ४१ ॥

पत्रद्वयात् तृतीयस्य जन्मनैव निरन्तरम् ।
रम्भावृक्षस्य विस्तारो फलदायी क्रमाद् यथा ॥ ४२ ॥

विकेन्द्रीकरणं युक्तं प्रान्तेषु विविधेषु हि ।
जनेषु स्वाधिकाराणां तथा संक्रमणं खलु ॥ ४३ ॥

घोषणायद्धतत्त्वानां एतमत्र निवेदनम् ।
संक्षेपेणावबोधाय श्रोतृपाठकवर्गयोः ॥ ४४ ॥

सचिवागमने दीर्घे भविता भारतं प्रति ।
अवद्यं भारतीयाया वीक्षणाय परिस्थितेः ॥ ४५ ॥

प्रशासकैस्तथा लोकनेतृभिः सुविचारिभिः ।
ऊहापोहाय तत्त्वानां विज्ञातुं च मनोगतम् ॥ ४६ ॥

सचिवो भारतस्यासीद् मांटेग्युर्मन्त्रिमण्डले ।
उदारमतपक्षस्य सदस्योऽसौ कुशाग्रधीः ॥ ४७ ॥

चेम्सफर्डस्तदेहासीदुपराजपदस्थितः ।
तेन विज्ञापितो यामि संद्रष्टुं हिन्दबान्धवान् ॥ ४८ ॥

संचाराय सुहीतत्तौ उपराजसमन्वितः ।
स्पष्टमित्याह मांटेग्युर्विधाने स्वप्रकाशिते ॥ ४९ ॥

नोवेंबरे समायातो मांटेग्युर्भारतं प्रति ।
ईयुर्दिल्लीं मण्डलानि शिष्टानां सर्वभारतात् ॥ ५० ॥

उपक्रमः कृतस्तेन चर्चायाः सज्जनैः सह ।
ख्यातायां देहलीपुर्यां शिष्टमण्डलनेतृभिः ॥ ५१ ॥

पद्धतिस्तत्र कार्यस्य विमृश्यैव नियोजिता ।
आपणेभ्योऽप्रस्तुतेभ्यो नावकाशोऽप्यविद्यत ॥ ५२ ॥

सिंहासने स्थितो मुख्य उपराजमहोदयः ।
चेम्सफर्डः सुविज्ञात आङ्ग्लभूपेन संप्रति ॥ ५३ ॥

आत्मप्रतिनिधित्वेन भारते यो नियोजितः ।
आङ्ग्लसाम्राज्यविस्तारवैभवद्योतको ध्वजः ॥ ५४ ॥

प्रेषितः सार्वभौमेन सह संचारकर्मणे ।
मांटेग्युरन्तिकस्थे च सुखासन उपाविशत् ॥ ५५ ॥

तद्दर्शनाय नीतोऽन्तः शिष्टसंघो निमन्त्रितः ।
संस्थापितस्तस्य पुर ऐच्छत् ताभ्यां शुभं दिनम् ॥ ५६ ॥

उपराजसमादिष्टः संघमुख्यः सभासदाम् ।
तदा पर्यचिनोत् तेन विख्यातेनाङ्ग्लमन्त्रिणा ॥ ५७ ॥

उपराजोऽपि प्राशंसीद् मांटेग्युं सचिवोत्तमम् ।
सर्वे चक्रुः क्रमेणैव हस्तान्दोलनमादरात् ॥ ५८ ॥

धुरीणो वाचयांचक्रे मानपत्रं तदा शुभम् ।
यस्मिञ् शिष्टाः विचारान् स्वान् मन्त्रिणे च न्यवेदयन् ॥ ५९ ॥

चक्रुः परिमितं कालं सर्वे विनिमयं ततः ।
विचाराणां तदन्ते च समारोहविसर्जनम् ॥ ६० ॥

संघः संप्रेषयामास पुण्यपुर्यां प्रतिष्ठितः ।
नेतॄणां ख्यातकीर्तीनां देहलीं शिष्टमण्डलम् ॥ ६१ ॥

संघस्य स्थापकाचार्यस्तिलको बुद्धिमद्वरः ।
संपूजितश्च खापर्डे प्राणास्तस्य बहिश्चराः ॥ ६२ ॥

वाक्कीलानां गुरुर्दादा करंदीकरवंशजः ।
नृसिंहः केसरीसंस्थाधीक्षकः पत्रपण्डितः ॥ ६३ ॥

वेळवी वेळगावस्थो देशपांडेकुलोद्भवः ।
गङ्गाधरो नाभिविनतः कर्णाटकनृपोऽभवत् ॥ ६४ ॥

नागपुर्यां महान् योद्धा मुंजे नेत्रचिकित्सकः ।
सेनापतिः स हिन्दूनां भारते घोषितो जनैः ॥ ६५ ॥

उद्धयार्यो वयःप्रौढस्तिलकप्रेमकर्षितः ।
मुंजेसहितकार्येच्छुर्निर्भयः संघसेवकः ॥ ६६ ॥

विख्यातौ सर्वमुम्बय्यां साटेवेलकरावुभौ ।
पारसीगुर्जरादीनां समाजानां च संमतौ ॥ ६७ ॥

वेद्रकारस्य तिलके निष्ठास्त्यव्यभिचारिणी ।
अभ्यासी संयमी सुज्ञः विद्वज्जनताप्रियः ॥ ६८ ॥

एभिः समर्पितं चैकं मानपत्रे निवेदनम् ।
उपराजाय हस्ताभ्यां तिलकस्य महात्मनः ॥ ६९ ॥

पुणेस्वराज्यसंघस्य हेत्वाशयप्रदर्शकम् ।
महासभानिश्चितस्य प्रस्तावस्यापरोऽभवत् ॥ ७० ॥

समर्पितं संघशिष्टैः पर्यायस्तन्निवेदनम् ।
संघिनो वयसा वृद्धाः तत्प्रचारप्रतिज्ञया ॥ ७१ ॥

तिलकेन सहालापो मांटेग्युना कृतः पृथक् ।
मद्रासस्संघनिर्मात्र्या योगिन्या च विझांटया ॥ ७२ ॥

विदर्भेभ्यो गतं द्रष्टुं शिष्टानामेकमण्डलम् ।
मांटेग्युमुपराजं च रम्यां मुम्बापुरीं प्रति ॥ ७३ ॥

तांबेप्रभृतयः सप्त लोकसेवापरायणाः ।
विदर्भजनताकाङ्क्षा अतिथिभ्यां प्रशंसितुम् ॥ ७४ ॥

प्रान्तराष्ट्रसभाशाखाध्यक्षस्तांबेमहाशयः ।
अलंकृतं येन पश्चात् प्रान्ताधिपपदं महत् ॥ ७५ ॥

पुराणपुरुषाशास्त्री खापर्डे च मुधोळ्करः ।
चत्वारो युवका आसन्नणेकानिदकरादयः ॥ ७६ ॥

समर्थिता सप्रमाणं स्वायत्तप्रान्तनिर्मितिः ।
अभीप्सिता विदर्भस्थैर्मानपत्रे तदर्पिते ॥ ७७ ॥

उपराजेन मुम्बय्यामाङ्ग्लीयसचिवेन च ।
स्वीकृतं चन्दनापत्रं श्रुतं शिष्टनिवेदनम् ॥ ७८ ॥

निम्नोल्लिखितसंस्थानां प्राप्तानां दक्षिणापथात् ।
मुस्लिमानामग्रुमनं प्रान्तसंसत्सभासदः ॥ ७९ ॥

श्रमीणां मुम्बईस्थानां समैका हितवर्धिनी ।
लिङ्गायतसभामुख्या जनानां या सभोत्तमा ॥ ८० ॥

पुण्यपत्तननेमस्तसमितिर्दक्षिणाभिधा ।
सभा च नामदाराणां मण्डले हिन्दुखिस्तयोः ।
संहतीरय्यराणां च संघ उद्यमिनां तथा ॥ ८१ ॥

समूहोऽस्पृश्यलोकानामिस्लामुम्बईसभा ।
पारशीगुर्जरजैनानां त्रयः संघाः पृथक् पृथक् ॥ ८२ ॥

विद्भोगतसंघस्य पूर्वं च वर्णनं कृतम् ।
तांबेप्रभृतयः सप्त बभूवुर्यत्सभासदः ॥ ८३ ॥

दशोत्तरशतं चातुर्मण्डलानि दिदृक्षया ।
जग्मुर्भारतसंचारे युग्मं मांटफोर्डसंज्ञितम् ॥ ८४ ॥

सारस्ताः परिप्रश्नेन त्रिशतं त्रिंशदुत्तरम् ।
ताभ्यां वै भारते शिष्टा इति संख्याविदां मतम् ॥ ८५ ॥

नृसिंहेन कृतं मन्ये स्वरूपमप्यतिमार्मिकम् ।
मांटेग्युप्राप्तसंमानपत्रिकाणां समीक्षणम् ॥ ८६ ॥

पञ्चविंशतिसंख्याकाः कॉंग्रेसस्यानुवादकाः ।
सप्तविंशतिसंख्याकाः स्वराज्यस्याभिलाषिणः ॥ ८७ ॥

चतुर्विंशतिसंख्याकाः पत्रिका जातिवादिनाम् ।
सैव संख्या पत्रिकाणां साम्यसंतुष्टचेतसाम् ॥ ८८ ॥

स्वराज्याभिमुखा दृष्टा भारते बहवो जनाः ।
मांटेग्युना भारतस्य संचारेऽस्मिन् परीक्षिताः ॥ ८९ ॥

जम्बुद्वीपेऽनन्तशाखे सुपर्णे
पक्षिद्वन्द्वं शासनस्यारुरोह ।
शुभ्रं भव्यं श्वेतवर्णोपमेन-
मार्ग्लन्द्वीपे ख्यातयंत्राप्रसूतम् ॥ ९० ॥

एको भोक्ता वैभवस्याभिमानी
साम्राज्यस्योत्कर्षविस्तारशीलः ।
अन्यो राज्यं लोकतन्त्रं विधित्सुः
साम्राज्यान्तःस्वेन्द्रराज्यैर्विमत्या ॥ ९१ ॥

प्रान्ते प्रान्ते चक्रतुः संचरन्तौ
दृष्टिक्षेपं भारतीयप्रजानाम् ।
आकाङ्क्षासु स्वस्य पक्वो बभूव
ह्यत्रैवाभ्यो लंदनं निर्जगाम ॥ ९२ ॥

इति माधवविरचिते श्रीतिलकयशोऽर्णवे मांट्फर्डभारतभ्रमणनामा
एकोनषष्टितमस्तरङ्गः ।

# षष्टितमस्तरङ्गः

षष्ठ्यब्दपूर्तिर्बालस्य यथाशास्त्रं यथाविधि ।
निर्वर्तिता गृहे तस्य स एव प्रथमोत्सवः ॥ १ ॥

ज्योतिःशास्त्रे पारगो यः कल्पसूत्रेऽपि यस्तथा ।
फलज्योतिष्क्रियाकल्पे नास्था तेन प्रदर्शिता ॥ २ ॥

श्रद्धया नित्यकर्मैव जन्मपत्रनिरीक्षणम् ।
गणेशेन कृतं तेन यावदायुर्दिने दिने ॥ ३ ॥

वर्धापनदिनो नैव समारोहेण सद्मनि ।
रामश्रीधरयोर्जातः सून्वोस्तस्य कदाचन ॥ ४ ॥

तत्संस्कारक्षमं मेने संघं संस्थापितं जनैः ।
विल्वग्रामे स्वराज्यस्य प्रचाराय च भारते ॥ ५ ॥

नियोजितो धुण्डिराजः स्वसंतानस्य रक्षणे ।
अङ्गीकृतं च संघस्य तेन संगोपनं स्वयम् ॥ ६ ॥

उदारचरितानां हि स्वभावोऽयं विशेषतः ।
आत्मजेभ्योऽपि तत्प्रेम जनेष्वेवातिवर्तते ॥ ७ ॥

संघस्य मासिके क्षेत्रे समारोहो विनिश्चितः ।
मेमासि गौतमीतीरे सप्ताधिकदशे दिने ॥ ८ ॥

वापटिस्टोऽतिसंतुष्ट आह्वाध्यक्षपदस्थितः ।
वचोभिराङ्ग्लभाषायां वल्गुभिर्हृदयंगमैः ॥ ९ ॥

दृष्टो न मनुजः कोऽपि होमरूलविरोधकः ।
यूरोपे मत्प्रवासे च स्वातन्त्र्यानन्दकन्दले ॥ १० ॥

होमरूलसमुत्थानमनिष्टघटनायुतम् ।
आसीदितरदेशेषु ज्ञातव्यं तद्विवेकिभिः ॥ ११ ॥

केचिद् ह्युपदिशन्त्येवं साम्राज्यहितचिन्तकाः ।
नेमस्तदलनेतारः शासनाश्रयकाङ्क्षिणः ॥ १२ ॥

ददौ प्रत्युत्तरं तेभ्यो बापटिस्टः प्रमाणवित् ।
सकण्टकं लुनात्येव गुलाबसुमनं जनः ॥ १३ ॥

सानिष्टमपि चोत्थानं कर्तव्यं ध्येयसिद्धये ।
न्यायाधीशेन श्रेष्ठेन वैधं तदिति घोषितम् ॥ १४ ॥

यतितव्यं स्वराज्यस्य संप्राप्त्यै निर्भयं जनैः ।
यत्नशीलस्य भगवान् मुमुक्षोर्मोक्षदायकः ॥ १५ ॥

साम्राज्यमाङ्ग्लदेशस्य जातः संघोऽधुना खलु ।
कानडास्ट्रेलियादीनां देशानां मुक्ततायताम् ॥ १६ ॥

आङ्ग्लराष्ट्रीयसंघस्य घटको भारतं भवेत् ।
स्वायत्तशासनं मुक्तं कानडास्ट्रेलिया यथा ॥ १७ ॥

सभायामस्मिन् जातं लोकमान्यस्य भाषणम् ।
संघकार्यं समालोच्य भूदेवस्तिलकोऽब्रवीत् ॥ १८ ॥

लखनौसभायशःप्राप्तिरग्रमुख्यानां सभासदाम् ।
आसीत् संख्याबलात् तत्र संघकार्यार्पितात्मनाम् ॥ १९ ॥

प्रस्तावः संमतस्तत्र स्वराज्यप्राप्तिवाचकः ।
न सा सभा यत्नशीला स्वराज्यप्राप्तये स्वयम् ॥ २० ॥

अस्माकं तु प्रयत्नानां सभायाः कार्यकारिणी ।
दर्शयत्यानुकूल्यं चेत् कार्यं वै सुकरं भवेत् ॥ २१ ॥

अयथायेकवर्षस्य संख्यावृद्धिरपेद्यते ।
पञ्चाशद् हि सहस्राणामिष्टसंख्या सभासदाम् ॥ २२ ॥

वृद्ध्यै स्वराज्यसंघस्य कार्यस्यात्रेतरत्र च ।
लोकैः सर्वप्रयत्नेन कर्तव्यो द्रव्यसंचयः ॥ २३ ॥

आस्ट्रेलियादिदेशानां वाञ्छामो वै स्थितिं वयम् ।
ऋद्धिस्तेषां साधनानां वर्ततेऽखण्डिता सदा ॥ २४ ॥

तेषां संघटनादार्ढ्यं वृत्तिश्च त्यागभूयसी ।
संपूजनीये सर्वेषां हिन्दभूमिनिवासिनाम् ॥ २५ ॥

कुर्वन्ति सूचनां केचिद् विधेयः संघवादिभिः ।
अर्थोत्पादक उद्योगो लोकाभ्युदयकारकः ॥ २६ ॥

ज्ञातापि तन्महत्त्वस्य नान्यमार्गावलम्बनम् ।
मन्ये श्रेयस्करं पुंसां त्यक्त्वा सुपथमात्मनः ॥ २७ ॥

पतनाद् दास्यपङ्केऽस्मिन् निमग्ना दन्तिवद् वयम् ।
मोक्षस्तस्मात् पङ्ककूपात् कर्तव्यं प्रथमं भवेत् ॥ २८ ॥

मोहकान्यन्यकर्माण्यस्वीकार्याणीति संप्रति ।
संघिभिस्तानि हेयानि ज्ञात्वा बुद्धिपुरःसरम् ॥ २९ ॥

आङ्ग्लदेशे तथान्येषु प्रयाणस्य प्रयोजनम् ।
सर्वेषां संमतं जातं निधिरावश्यकस्ततः ॥ ३० ॥

भ्रमणं यन्त्रचक्रस्य स्नेहपूर्वैव संभवेत् ।
संघयन्त्रे निधिस्तैलं द्रव्यस्यैव बुधैस्ततः ॥ ३१ ॥

ज्ञातव्यमचिरात् तैलं दातव्यं च जयेच्छुभिः ।
तैलक्षयाद् यन्त्रहानिर्यन्त्रहानेः पराभवः ॥ ३२ ॥

लोकेषु वर्धतां वृत्तिः स्वाभिमानपरायणा ।
सोद्योगनिर्भया वृत्तिर्जननेतृगणेष्वपि ॥ ३३ ॥

पञ्चविंशत्युत्तरद्विशताधिकचतुर्दश ।
सहस्रसंमिता जातास्तदा संघसभासदः ॥ ३४ ॥

इतीतिवृत्तात् संघस्य विज्ञातं परिपञ्चनैः ।
सर्वेषां तेषु वर्णानां धर्माणामनुयायिनः ॥ ३५ ॥

स्वराज्यं देवता तेषां देशभक्तिरुपासना ।
राष्ट्रधर्मोपासकानां संघः संघटनाङ्कुरः ॥ ३६ ॥

वर्षेऽस्मिन् घटना जाता दुःखशोकप्रदायिनी ।
सर्वेषां भारतीयानां तिलकस्य विशेषतः ॥ ३७ ॥

चिकित्सकाग्रणीर्योगी ब्रह्मज्ञानविदां वरः ।
अण्णासाहेब इत्याख्यः पटवर्धनवंशजः ॥ ३८ ॥

महाराष्ट्रे धर्मबुद्धेः प्रेरकं यस्य जीवनम् ।
विदुषां लोकमान्यानां योऽभवद् गुरुसंनिभः ॥ ३९ ॥

न कुतो यद्गुधारम्भो यदाशीर्वचनं विना ।
लोकसंग्रहकार्यस्य तिलकस्यानुयायिभिः ॥ ४० ॥

पुण्यात्मा पार्थिवं देहं व्यसृजद् भूतपञ्चके ।
परमात्मनि चात्मानं सच्चिदानन्दरूपिणि ॥ ४१ ॥

नाथशिष्टो भारतेऽद्य पूज्यो मम तपस्विषु ।
विलीने परमानन्दे पटवर्धनयोगिनि ॥ ४२ ॥

चिन्तयामास यो नित्यं मोक्षं राष्ट्रस्य चात्मनः ।
इत्याह तिलकः कृत्वा स्वगुरोरन्त्यदर्शनम् ॥ ४३ ॥

संघस्याद्योत्सवे बालः प्रार्थितः संघबालकैः ।
कर्णाटकविदर्भेषु संचारः कार्य एव हि ॥ ४४ ॥

अचिरादागमिष्यामीत्युत्तरं तिलको ददौ ।
संतुष्टाश्चालकास्तेन संघयोरुभयोरपि ॥ ४५ ॥

समित्या राष्ट्रसंस्थाया दर्शनार्थं सभासदाम् ।
कालीपुरीं गतो बालः समेतः सहकारिभिः ॥ ४६ ॥

गणेशो बालकृष्णश्च वैद्यो चिन्तामणिस्तथा ।
सुविद्याः पण्डिताः सर्वे देशकार्यहिते रताः ॥ ४७ ॥

चिकोडीं प्रस्थितो बालः सभाकार्यं समाप्य च ।
तत्र वै तिलकः प्राप्तो दिनाङ्के द्वादशे शुभे ॥ ४८ ॥

जिल्हापरिषदस्तत्राभवत् खल्वधिवेशनम् ।
रघुनाथस्तदध्यक्षः करंदीकरवंशजः ॥ ४९ ॥

बिल्वग्रामे समुत्पत्तिस्तिलकस्यानुशासनात् ।
स्वराज्यान्दोलनस्यैव संघस्येति सुविश्रुतम् ॥ ५० ॥

जिल्हाभागे बेळगावे चिकोडीं तालुकास्थलम् ।
सभाया यशसे प्राप्ता जिल्हाग्रामात् प्रतिष्ठिताः ॥ ५१ ॥

पुणेपुरी महाराष्ट्रे नगरी केन्द्रवर्तिनी ।
नवाचारविचाराणां विश्रुता या प्रसूरिति ॥ ५२ ॥

कर्णाटके बेळगावयोग्यता तादृशी मता ।
प्रगतानां विचाराणां केन्द्रं तद् बलवत्तरम् ॥ ५३ ॥

पूर्वापरविदर्भस्थकेन्द्रस्थानीयभूषणे ।
नागपुर्यमरावत्यौ शोभेते चातिशोभने ॥ ५४ ॥

कुलकर्णीकुले जातः सखारामः सभासदाम् ।
स्वागतार्थं सभाध्यक्ष आतिथ्यकुशलो जनः ॥ ५५ ॥

व्याख्यानं तिलकस्तत्र परिषन्मन्दिरे ददौ ।
शिक्षाया गौरवं तत्र जागृतेः साधनं तथा ॥ ५६ ॥

तिलको वर्णयामास भाषणे स्वे सविस्तरम् ।
मयारब्धं देशसेवाजीवनं लोकशिक्षणात् ॥ ५७ ॥

अनिवार्यं शुल्कहीनं प्रथमस्तरशिक्षणम् ।
मत्करे शासने प्राप्ते करोमि प्रथमेऽहनि ॥ ५८ ॥

तत्रैव रामसिंगस्य मन्दिरं तिलको गतः ।
निमन्त्रणाद् दर्शनाय प्रसादग्रहणाय च ॥ ५९ ॥

वन्दिवासे हि बालस्य बन्धमोचनहेतुना ।
मन्दिरेऽस्मिन् समारब्धमनुष्ठानमखण्डितम् ॥ ६० ॥

नीतं तदा समाप्तिं तद् बालागमनवासरे ।
प्रदानं च प्रसादस्य बृहच्च ग्रामभोजनम् ॥ ६१ ॥

कृतमुद्यापनं लोकैरद्भुतस्य व्रतस्य तत् ।
व्रतान्ते दर्शनं जातं तिलकस्य महात्मनः ॥ ६२ ॥

भक्तिभावेन संप्राप्तं ध्रुवेण हरिदर्शनम् ।
मेनिरे ते वयं तद्वद् धन्यास्तिलकदर्शनात् ॥ ६३ ॥

प्रसादग्रहणात् पश्चात् प्रसन्नस्तिलकोऽवदत् ।
राष्ट्रस्य वा समाजस्य कर्तव्यपरिपालने ॥ ६४ ॥

दरिद्रश्रीमतोर्मध्ये न पश्याम्यन्तरं खलु ।
धनवान् द्रव्यरूपेण प्राणदानेन निर्धनः ॥ ६५ ॥

सेवां करोति राष्ट्रस्य संग्रामे सङ्कटे तथा ।
दरिद्रश्रीमतोस्तस्माद् नैवास्त्युच्चावचस्थितिः ॥ ६६ ॥

युद्धार्थं वै धनं दत्त्वा दर्शिता सहकारिता ।
विषमे सार्वभौमस्य मया तस्य विरोधिना ॥ ६७ ॥

वित्तं तस्मै संप्रदत्तं न वित्तं हिन्दवासिभिः ।
सुस्पष्टं दृश्यतेऽद्यापि दास्यमोक्षस्य सूचकम् ॥ ६८ ॥

संग्रामसमये द्रव्यं दीयतामपि याच्यताम् ।
स्वराज्यं निर्भयं लेखं निधाय तत्कराहते ॥ ६९ ॥

पात्रे चोच्चारयन् मन्त्रमुच्चैर्मांगततारकम् ।
स्वराज्यप्राप्तये द्रव्यं तुभ्यमद्य ददाम्यहम् ॥ ७० ॥

चित्तप्राप्तिं विना वित्तदानं भवति कष्टदम् ।
हेरंबनाथया वाचा भ्रम एव प्रतारकान् ॥ ७१ ॥

तत्रैवान्यस्थले दत्ते तिलकः प्राह भाषणे ।
दैव्यां संपदि गीतायां प्रथमे ह्यभयं श्रुतम् ॥ ७२ ॥

तस्माद् वै निर्भयो भूत्वा स्वराज्यान्दोलनं कुरु ।
प्रत्येकं साग्रहं चालः प्रेरयामास भाषणे ॥ ७३ ॥

समाहूता सभा संघचालकैर्ग्रामवासिभिः ।
बेळ्वीमहोदयैस्तत्राध्यक्ष्यं मण्डितमुत्तमम् ॥ ७४ ॥

उवाच तिलकस्तत्र संघकार्याय संग्रहः ।
द्रव्यस्य च मनुष्याणां महानावश्यको भवेत् ॥ ७५ ॥

स्वराज्यसंघदार्ढ्याय तत्सामर्थ्याभिवृद्धये ।
उपासना बलस्यैव कर्तव्या जनवित्तयोः ॥ ७६ ॥

एकोऽपि धन्यः पुरुषः सहस्रं स्वेच्छया खलु ।
यो वै ददाति संघाय रूप्यकाणामुदारधीः ॥ ७७ ॥

द्विसहस्रकरैर्दत्तं रौप्यमुद्रासहस्रकम् ।
सहस्रार्जुनसामर्थ्यं संघायैव प्रयच्छति ॥ ७८ ॥

विठ्ठलं परमं ब्रह्म द्रष्टुं गच्छति पंढरीम् ।
मुमुक्षुरुत्तमो भक्त्या प्रेरितः प्रतिवत्सरम् ॥ ७९ ॥

मृत्युः श्रीपंढरीक्षेत्रे मोक्षप्राप्तिप्रसाधकः ।
भक्तेषु तस्य विश्वास उपदेशाद् हि सद्गुरोः ॥ ८० ॥

स्वातंत्र्यं बन्धुभिस्तद्वद्प्राप्नोत्येव विमुक्तताम् ।
तन्मृत्युना देशकार्ये मातृभूमिर्गरीयसी ॥ ८१ ॥

चिक्कोडीसंस्थकाद् ग्रामात् समित्रस्तिलको गतः ।
निपाणीग्राममाहूतः सत्यशोधकपीठकम् ॥ ८२ ॥

*सद्गतिस्थाय मार्गस्थस्तेटग्रामेटवासिनः ।*
लोकमान्यं द्रष्टुकामा उपागच्छन्नुपायनैः ॥ ८३ ॥

भर्जितैश्चणकैश्चेक्षुगुडलड्डुकसंयुतैः ।
रम्भाफलैः स्वादुमिश्च पेयैरिक्षुरसादिभिः ॥ ८४ ॥

तदा रात्र्यत्यये प्रापुर्वेङ्कटेशस्य मन्दिरम् ।
ग्रामस्थजनसंमर्दैस्तिलकः सुहृदस्तथा ॥ ८५ ॥

पूर्वं नियोजिते स्थाने तिलकप्रमुखा जनाः ।
निवासं प्राविशन् सर्वे निद्राविश्रान्तिलोलुपाः ॥ ८६ ॥

उत्थाय शयनात् प्रातः पेयं पीत्वा यथारुचि ।
तिलकः सुहृदश्चैव जग्मुः शीघ्रं सभास्थलम् ॥ ८७ ॥

वक्ता खाडिल्करस्तत्र तिलकश्च सभापतिः ।
वर्णितं संघमाहात्म्यं व्याख्याता निजभाषणे ॥ ८८ ॥

प्राणं विना यथा देहो नारी वाथ पतिं विना ।
स्वाधीनत्वं विना राष्ट्रं भूगोले नैव शोभते ॥ ८९ ॥

एवं मनोहरैः शब्दैः कृष्णेन प्रतिपादितम् ।
उत्थाय तिलकः प्राह समारोपे सभापतिः ॥ ९० ॥

भगवानिति शब्देन केचित् संबोधयन्ति माम् ।
प्रार्थयेऽहं च तान् बन्धूंस्त्याज्येयं कुप्रथाञ्जसा ॥ ९१ ॥

भगवानिति शब्दस्य प्रयोगोऽनर्थकः खलु ।
नराणामल्पबुद्धीनां मादृशानां च वर्णने ॥ ९२ ॥

स्वाध्यायचिन्तनाभ्यां वै यद्रूपं ज्ञायते मया ।
निवेदयामि लोकेभ्यः सर्वं तच्च यथामति ॥ ९३ ॥

भगवन्तं ज्ञानरूपं पूजयेऽहमहर्निशम् ।
वचःपुष्पैर्दिव्यमेनं जनान्तःस्थं जनार्दनम् ॥ ९४ ॥

पूज्यस्थानस्य निर्देशो भगवत्पदमुच्यते ।
पूजकस्य प्रशंसायां प्रयोगस्तस्य नोचितः ॥ ९५ ॥

इति मेऽभ्यर्थना नम्रा स्वामिनः पूज्यपादयोः ।
निश्चक्राम ततो बाल उक्त्वैवं प्रणिपत्य च ॥ १०८ ॥

रूप्यकाणां पञ्चशतं दानं संघनिधिं प्रति ।
दत्तं तत्र ग्रामणीभिर्लोकमान्यस्य हस्तयोः ॥ १०९ ॥

वर्णये लोकमान्यानां मङ्गलागमनं मुदा ।
विदर्भे संघकार्याय कर्तुं द्रव्यस्य संग्रहम् ॥ ११० ॥

अष्टादशोत्तरैकोनशते खिस्तशकस्य च ।
अभिधानेन मुग्धयाः फर्वर्या पञ्चमे दिने ॥ १११ ॥

तिलकः प्रस्थितः कर्तुं संचारं वरदावृतम् ।
विदर्भे धनधान्याढ्यं केन्द्रं बालानुयायिनाम् ॥ ११२ ॥

प्रथमं खाण्डयास्थानं जगामातिमनोहरम् ।
आशीर्गडसमीपस्थं तापीसलिलसिञ्चितम् ॥ ११३ ॥

घाटजींवंशसंभूतो हरिदासः सुविश्रुतः ।
प्राप्तस्तत्स्वागतं कर्तुं समित्रः स्थानकं प्रति ॥ ११४ ॥

सभास्थानागतान् लोकान् सोत्साहस्तिलकोऽब्रवीत् ।
स्वराज्यप्राप्तये सर्वैः सहकार्यं प्रदीयताम् ॥ ११५ ॥

प्रददुः संमतिं सर्वे सहकार्याय तत्क्षणम् ।
उच्चैस्तां घोषयामास हरिदासः सभापतिः ॥ ११६ ॥

धर्मदूतो भारतस्य विवेकानन्द उत्तमः ।
यदातिथ्येन सुप्रीतो जगामामेरिकां प्रति ॥ ११७ ॥

दिगन्तं यो यशः प्राप शिकागोधर्ममण्डले ।
मुखनिःसृतया वाचा यस्य मुग्धाभवत् सभा ॥ ११८ ॥

आतिथ्यं हरिदासस्य बभूव शुभसूचकम् ।
साफल्यस्य च यात्रायास्तिलकस्यापि संप्रति ॥ ११९ ॥

तिलको भाषणं कृत्वा वन्हाणनगरेऽध्वनि ।
विदर्भे प्रथितं स्थानं संप्राप मलकापुरम् ॥ १२० ॥

उवास तिलकस्तत्र पिंपळीकरसद्मनि ।
बभूव राधाकिसनो दानशूरः सभापतिः ॥ १२१ ॥

चतुःसहस्रं मुद्राणां दक्षिणां तिलकं प्रति ।
आर्पयत् संघकार्याय ग्रामस्थैरनुमोदितः ॥ १२२ ॥

भगिनीभिर्बुलस्थाने द्रव्यं यद् वै समर्जितम् ।
केवलं भगिनीवर्गात् तद् बालाय समर्पितम् ॥ १२३ ॥

वाकीलौ वयसा वृद्धौ पिंपरीकरचापटौ ।
तिलकस्य स्वागताय प्रयेताते दिवानिशम् ॥ १२४ ॥

तिलकः सपरीवारः खामग्रामं ततोऽव्रजत् ।
कार्पासव्यवहारस्य विदर्भे केन्द्रमुत्तमम् ॥ १२५ ॥

मार्गे च चिखलीग्रामे कालमल्पमुवास सः ।
उपदिश्य जनांस्तत्र प्रतस्थे योजितं स्थलम् ॥ १२६ ॥

चांदे तत्र ग्रामनेता ददौ तिलकहस्तयोः ।
षट्सहस्रं च मुद्राणां शतसप्तकसंयुतम् ॥ १२७ ॥

व्यासो व्यायामविद्यायाः शिक्षकस्तिलकानुगः ।
स्वगुरुं पूजयामास भक्त्या सुरगुरूपमः ॥ १२८ ॥

सभास्थाने कृतं लोकैर्मानपत्रसमर्पणम् ।
तिलको धन्यवादार्थं जनांस्तान् भाषणेऽब्रवीत् ॥ १२९ ॥

चक्रे गोवर्धनोद्धारं रक्षायै व्रजवासिनाम् ।
इन्द्रे वर्षति कोपेन कृष्णो गोपसमन्वितः ॥ १३० ॥

स्वराज्यप्राप्तये तद्वत् सङ्घकार्यमपेक्ष्यते ।
आबालवृद्धलोकानामिदानीं संघचालकैः ॥ १३१ ॥

युष्मत्कृतस्य दानस्य देशकार्ये व्ययो भवेत् ।
स्वराज्यप्रेम युष्माकं द्रव्यदानेन दर्शितम् ॥ १३२ ॥

करोतु पूर्तिमिच्छायाः प्रार्थयेऽहं प्रभुं प्रति ।
यत्नशीलास्तदर्थं हि तत्पराः संघचालकाः ॥ १३३ ॥

नान्दुराख्यं गतो ग्रामं नाथमल्जी सभापतिः ।
सहस्रमेकं रूप्याणां लेभे बालस्ततस्तदा ॥ १३४ ॥

निनाय तिलकं ग्रामं जळगाव इति श्रुतम् ।
तत्रार्पयत् पाण्डुरङ्गो रूप्यपञ्चसहस्रकम् ॥ १३५ ॥

गजाननमहाराजक्षेत्रे शेगावसंज्ञके ।
सुष्वाप तिलको रात्रौ समित्रो मन्दिरे सुखम् ॥ १३६ ॥

द्रष्टुं तिलकमायात एकस्तत्र कृषीवलः ।
स स्वराज्यस्य कार्याय प्रार्पयद् रूपकद्वयम् ॥ १३७ ॥

तद्दानेनातिसंतुष्टो दीनं तं तिलकोऽब्रवीत् ।
रूप्यद्वयं त्वया दत्तं द्विसहस्रसमं मम ॥ १३८ ॥

तैलहारं गन्तुकामास्तिलकश्चानुयायिनः ।
विद्युत्स्यन्दनमारुह्य ततः प्रातः प्रतस्थिरे ॥ १३९ ॥

विदर्भाणां कविश्रेष्ठो महाराष्ट्रे सुविश्रुतः ।
सत्कर्तुं तिलकं तत्र सीमान्ते समुपस्थितः ॥ १४० ॥

सहस्रं तिलको लेभे द्रव्यं सप्तशताधिकम् ।
त्रिशतं वै समानीतं भगिनीनां च संस्थया ॥ १४१ ॥

प्राविशत् तिलकोऽकोलाप्रदेशेऽकोटनामकम् ।
समृद्धं धनधान्यैश्च स्थलं पूर्णोत्तरे स्थितम् ॥ १४२ ॥

वितीर्य मानपत्रं वै द्रव्यं पञ्चसहस्रकम् ।
द्विशतोनं ग्रामनिष्ठास्तिलकाय समार्पयन् ॥ १४३ ॥

आग्रहाद् वृद्धमित्रस्य तिलको मित्रसंयुतः ।
भव्ये महाजनीगेहे सोऽकोलानगरेऽवसत् ॥ १४४ ॥

सभा तत्र विशालाऽभूद् वासुदेवः सभापतिः ।
लक्ष्मणस्य सुतो विद्वान् चिपळोणकरवंशजः ॥ १४५ ॥

चिन्तयित्वा यशः कार्ये तिलकाय समार्पयत् ।
चतुःसहस्रसंख्यातं शतकत्रयसंयुतम् ॥ १४६ ॥

वत्सगुल्मे संप्रदाय मानपत्रमुपाहरत् ।
सार्धत्रीणि सहस्राणि तिलकाय सभापतिः ॥ १४७ ॥

व्रतस्योद्यापनार्थं वै व्रतस्थैका सुवासिनी ।
रूप्यकाष्टमभागानां ददावष्टोत्तरं शतम् ॥ १४८ ॥

वत्सगुल्माद् यवत्माळप्रदेशे तिलकोऽविशत् ।
पुसदे पुष्पदातीरे स्थिते क्षेत्रे पुरातने ॥ १४९ ॥

विधिना मधुपर्केण चक्रिरे तिलकार्चनम् ।
कर्मनिष्ठाः सदाचारा ब्राह्मणा वेदपाठकाः ॥ १५० ॥

वालुकानिकरे स्थित्वा तिलकः पुष्पदातटे ।
असंख्यान् प्रेक्षकान् दृष्ट्वा संहृष्टः स तदाब्रवीत् ॥ १५१ ॥

स्वराज्यपंढरी तावद् दृश्यते पुष्पदातटे ।
प्रादुरस्ति सभामध्ये जनरूपो हि विट्ठलः ॥ १५२ ॥

त्रिसहस्रप्रदानेन पूजितस्तिलको जनैः ।
व्याख्याने द्वे तदा बालो ददौ पुष्पावतीतटे ॥ १५३ ॥

एवं परिषदः स्थाने नद्यास्तीरे द्वितीयकम् ।
समाप्य विहितं कार्यं कारंजापुरमव्रजत् ॥ १५४ ॥

प्रोत्साहितः काण्णवेन स्थानीयश्चालको धुरे ।
स्वागतं विदधेऽपूर्वमल्पेऽपि समये सति ॥ १५५ ॥

श्रान्तोऽपि तिलकस्तत्र दृष्ट्वा श्रोतॄन् समुत्सुकान् ।
चक्रे विवेचनं पूर्णं स्वातन्त्र्यान्दोलनस्य च ॥ १५६ ॥

स्वराज्यस्यान्दोलनस्य ह्यस्त्यावश्यकताधुना ।
विदेशेष्वाङ्ग्लदेशे च बोधनाय निजस्थितेः ॥ १५७ ॥

तिलकस्य करे कृत्वा त्रिसहस्रं सभाजनाः ।
व्याख्यानसुधया तुष्टाश्चक्रिरे तेऽभिवादनम् ॥ १५८ ॥

मूर्तिजापूरमार्गेण तिलकस्य रथो गतः ।
द्विसहस्रं ददुस्तस्मै जनाः पञ्चशताधिकम् ॥ १५९ ॥

तत्रैकः पण्डितः कश्चिच् चक्रे तिलकवर्णनम् ।
संस्कृते स्वकृतश्लोकैः सभायां चालपभाषणम् ॥ १६० ॥

संचारार्थं विदर्भीयें वरदापश्चिमस्थिते ।
व्यवस्थामण्डलं नूनमासीत् कार्योन्वितं ततः ॥ १६१ ॥

ख्यातकीर्तेर्गणेशस्य खापर्डेकुलभूषणः ।
पुत्रो ज्येष्ठो बालकृष्ण आसीद् मण्डलचालकः ॥ १६२ ॥

धीरवृत्तिर्वामनश्च जोशीवंशसमुद्भवः ।
द्वितीयः पुरुषस्तस्मिन् कार्यक्रमनियोजकः ॥ १६३ ॥

लेखको वृत्तपत्राणां सदस्यो मण्डलस्य च ।
सदाशिवस्तत्त्वनिष्ठो वल्लालकुलसंभवः ॥ १६४ ॥

गायको भावनागीतनिर्माता वै कलापटुः ।
शिवानन्दस्त्यागमूर्तिर्विदर्भजनताप्रियः ॥ १६५ ॥

तत्पराः सहकार्याय चासन्नन्ये सुहृज्जनाः ।
अद्य तेषां न नामानि लभ्यन्ते कुत्रचिद् मया ॥ १६६ ॥

निरता जनसेवायां श्रान्ता अपि शुभाननाः ।
देहवाणीमनोभिश्च संचारार्थं प्रयेतिरे ॥ १६७ ॥

भागिनो यशसोंऽशस्य संचारस्याद्भुतस्य ते ।
आसन्निःसंशयं सर्वे विदर्भजननायकाः ॥ १६८ ॥

नागपूरात् समायाते मण्डले नरकेसरी ।
आस्तां मोरेश्वरो मुख्यो वैद्यो नारायणस्तथा ॥ १६९ ॥

वर्धाचांदानागपूरभंडारादिविषयेषु तैः ।
एवं कार्यक्रमस्यैकं संचारस्य प्रकाशितम् ॥ १७० ॥

पुल्गावस्थानकं जग्मुरारुह्याग्निरथं ततः ।
संमान्यातिथयः सर्वे लोकमान्यसुहृज्जनाः ॥ १७१ ॥

स्वागतायाययुस्तत्र नागपूरनिवासिनः ।
स्वराज्यसंघनेतारो वैद्यमोरेश्वरादयः ॥ १७२ ॥

शतानि सप्त रूप्याणां स्वराज्यार्थं समार्पयत् ।
तिलकाय ग्रामनेता संघस्य हितचिन्तकः ॥ १७३ ॥

सोमय्यानामकोऽयच्छज् जङ्गमस्तिलकं प्रति ।
शिवलिङ्गं स्वकण्ठस्थं रौप्यमीशकृपाप्रदम् ॥ १७४ ॥

वरासे देशकार्यस्य संघसंकल्पितस्य च ।
पुलग्रामगभास्थाने पावने वरदातटे ॥ १७५ ॥

ततः प्रतस्थिरे सर्वे लघुयाणरथाध्वना ।
वर्धाप्रदेशे विख्यातमार्वीनाम पुरं किल ॥ १७६ ॥

आर्वी तैलंगवंशानामासीत् ख्यातं पुरातनम् ।
नागपूरपुणेमार्गे समृद्धं सुन्दरं पुरम् ॥ १७७ ॥

प्रेरिता उपदेशेन तिलकस्य समार्पयन् ।
व्याख्यानस्योपसंहारे संघकार्यनिधिं तदा ॥ १७८ ॥

अनुक्रमेण तत्स्थाने नरनारीगणास्तदा ।
सप्त रूप्यसहस्राणि षट् शतानि तथा किल ॥ १७९ ॥

न्यवसत् तिलकस्तत्र वासुदेवस्य सद्मनि ।
भ्रातुः सुबुधो यश्चासीद् मालाकारस्य शास्त्रिणः ॥ १८० ॥

दिने पञ्चदशे सर्वे चन्द्रग्रामं प्रपेदिरे ।
महाकालीवासपूतं यात्रिकास्तिलकादयः ॥ १८१ ॥

स्थितामभिरथीशर्पदसंगमे दुर्गरक्षिताम् ।
विद्यापुरीं राजधानीं पूर्वगोंडनृपावलेः ॥ १८२ ॥

देवमन्दिरभूयिष्ठां शिल्पसौन्दर्यशोभिताम् ।
सेवितां साधुवृन्देन वेदाध्ययनमङ्गलाम् ॥ १८३ ॥

निस्सीमभक्तिस्तिलके यस्यास्ति विदिताखिले ।
सविदर्भे महाराष्ट्रे तथा दक्षिणकोसले ॥ १८४ ॥

देशमुखकुलोत्पन्नो बळवंतेतिसंज्ञकः ।
अतिथित्वागतं चक्रे नीत्वा सर्वान् निजालयम् ॥ १८५ ॥

मण्डिता दीपमालाभिः पण्यचत्वरसुन्दरा ।
शुशुभे सा प्रकाशेन पुरी रम्यामरावती ॥ १८६ ॥

गङ्गाधरः सभाध्यक्षो वक्ता गङ्गाधरात्मजः ।
बालाभिधो विश्वकीर्तिर्लोकमान्यो विशालधीः ॥ १८७ ॥

वैंडके स्वागताध्यक्षः श्रुत्वा स्फूर्तिप्रदं वचः ।
मुद्रास्तिलकपूजायै पट्सहस्रमिता ददौ ॥ १८८ ॥

निनाय तिलको रात्रिं विश्रान्त्यै तत्र तस्य वै ।
औदार्यविनयातिथ्यैः संतुष्टास्तिलकादयः ॥ १८९ ॥

अणुप्रायान् गुणान् प्रेम्णा शैलतुल्यान् करोति यः ।
बळवंतसमो दृष्टः समाजे विरलो जनः ॥ १९० ॥

निरीक्ष्य चरितं तस्य तिलको मित्रमण्डले ।
मुक्तकण्ठं साभिमानं व्याजहार सकौतुकम् ॥ १९१ ॥

उदिते भास्करे स्नात्वा बळवंतः कृताह्निकः ।
सुखस्थापं च सर्वेषामपृच्छत् स्निग्धचेतसा ॥ १९२ ॥

पयः स्वादुतरं पीत्वा पेयमन्यदभीप्सितम् ।
आहूता अतिथिश्रेष्ठा जग्मुः परिषदः स्थलम् ॥ १९३ ॥

अध्यक्षस्याशयाचष्टे तिलकः स्वल्पभाषणे ।
भारतव्याधिनाशस्य स्वराज्यप्राप्तिरौषधम् ॥ १९४ ॥

सेवेत पथ्यसहितं भारतं हितवर्धकम् ।
आशिषो भाषणस्यान्ते बालकेभ्यः समार्पयत् ॥ १९५ ॥

सभाध्यक्षेण विज्ञप्तो भाषणं कृतवानहम् ।
शस्त्रोपयोगनिर्बन्धः पौरुषोच्छेदकारकः ॥ १९६ ॥

असहेद्विकासस्य सर्वथैव विनाशकः ।
अस्याशयो भाषणस्य तदानीं मम धारकः ॥ १९७ ॥

संप्रस्थितास्ततः सर्वे गन्तुं ग्रामं वर्णी मम ।
तिलकस्य निवासार्थं योजितं स्थानमुत्तमम् ॥ १९८ ॥

श्रीनिवासमहाराजस्थलं पुण्याश्रमो नृणाम् ।
श्रीमद्भागवतागारं नामसंकीर्तनस्थलम् ॥ १९९ ॥

श्रीनिवासश्च भक्तानां सम्यग् बोधाय सर्वथा ।
भक्तिवैराग्ययोः साक्षादभवद् विग्रहः कलौ ॥ २०० ॥

कैसरीवाचनं भौमे यावज्जीवं कृतं व्रतम् ।
नान्यो साधुर्मया दृष्टः पालयन् व्रतमीदृशम् ॥ २०१ ॥

तदानीं तिलकः प्राह निशम्य चरितामृतम् ।
आयात्यप्राशकालान्तं भक्तोत्तमशिरोमणेः ॥ २०२ ॥

महाराजं सविनयं प्रणम्य तिलकोऽवदत् ।
आशीर्वादः सतां कार्ये गुरो प्रोत्साहको भवेत् ॥ २०३ ॥

भगवत्प्रार्थनाकाले परदास्यविमोचनम् ।
भारतस्य भवेच् शीघ्रं वरदं दीनवत्सलम् ॥ २०४ ॥

भवन्तः प्रार्थयन्तां हि भगवन्तं जगत्पतिम् ।
उक्तं शास्त्रेषु भगवान् सदिच्छापरिपूरकः ॥ २०५ ॥

याचन्तां सर्वथा सन्त इत्यहं प्रार्थये सदा ।
नायकं ब्रह्मगोलस्य दास्यात् देशविमोचनम् ॥ २०६ ॥

महाराजोऽवदत् सखा अहं सामान्यमानवः ।
यतेऽहं च यथाशक्ति बिन्दुलेशं कृपानिधेः ॥ २०७ ॥

लिप्सुर्व्याधिमपाकर्तुमात्मनो भारतस्य च ।
आशासेऽहं कार्यसिद्धिर्भवतां यत्नतो भवेत् ॥ २०८ ॥

संजातः परमानन्दो महाराजहृदम्बुधौ ।
तिलकस्य निवासेन गृहे संभाषणादिभिः ॥ २०९ ॥

व्याख्यानार्थं सभा भूता निशायां पण्यचत्वरे ।
शृङ्गारिते लतापत्रैर्दीपमालाभिरुज्ज्वले ॥ २१० ॥

वाचनं मानपत्रस्य मन्त्राक्षतसमर्पणम् ।
चक्रे संस्कृतभाषायां बापुजी विदुषां वरः ॥ २११ ॥

विप्रो रैवकुलोत्पन्नो वैदिको धर्मशास्त्रवित् ।
ज्योतिःशास्त्रे सुविख्यातः पूजितो ग्रामवासिभिः ॥ २१२ ॥

त्रिसहस्रमितान् रूप्यान् जनास्तस्मै समार्पयन् ।
महाराष्ट्रीयां ततोऽध्यक्षो मानपत्रं समार्पयत् ॥ २१३ ॥

पांढरकवडां ययुः सर्वे विहाय च वणीं तदा ।
मार्गे प्रस्तरभूयिष्ठे प्रवासः क्लेशदोऽभवत् ॥ २१४ ॥

लोककार्ये सदा दक्षो गद्रे वै संघचालकः ।
दामोदरः सभास्थाने तिलकाय समार्पयत् ॥ २१५ ॥

त्रिसहस्राणि रूप्याणां मुद्राः सप्तशतानि च ।
चकार भापणं स्वल्पमप्याजी च समर्पकम् ॥ २१६ ॥

अन्तिमो वाजिरावाख्यः पेशवेपद्मास्थितः ।
पूर्वकाले विनाशस्य स्वराज्यस्य महापदि ॥ २१७ ॥

आङ्ग्लसैन्यभयादत्र दुर्गमेव समाश्रितः ।
आगतस्तिलकस्तत्र स्वराज्यप्राप्तिहेतुना ॥ २१८ ॥

विश्रुतो भाउजीनामा वेदापांडेकुलोद्भवः ।
पाटन्योरीग्रामवासी तिलकप्रेमयोदितः ॥ २१९ ॥

स्वनिर्मितं तीव्रधारं पूगीफलविभेदकम् ।
तिलकाय ददौ स्नेहादङ्कितेतिसंज्ञकम् ॥ २२० ॥

केलापूरनिवासिभ्यो दत्वाशिषमुत्तमाम् ।
तिलकस्तत्कृतं दानं स्वीकृत्यासौ प्रसन्नधीः ॥ २२१ ॥

परेद्युः प्रस्थिताः सर्वे वणीमार्गेण यात्रिकाः ।
समाप्ते च सभाकार्ये पुण्यग्रामनिवासिनः ॥ २२२ ॥

स्वागतार्थं समायाता बहवो ग्रामवासिनः ।
सीमान्ते तेषु मुख्योऽभूद् मुकुन्दः पाटिलान्वयः ॥ २२३ ॥

अध्यक्षो यः पालिकाया नगरस्य बहुश्रुतः ।
लोकाग्रहात् समारूढस्तिलको धूपवाहनम् ॥ २२४ ॥

समारोहेण नीतोऽसौ निवासं प्रति चालकैः ।
सभास्थाने प्रदत्तं तैर्द्रव्यं पञ्चशताधिकम् ॥ २२५ ॥

द्विसहस्रं हि चालाय स्वराज्यप्राभिलाषिभिः ।
नमस्कृता जनैः सर्वैः प्रस्थितास्तिलकादयः ॥ २२६ ॥

काले सुनिश्चिते प्राप्ता वर्धानगरमुत्तमम् ।
चन्द्रपुर्यास्तत्र याताः पूर्वं गङ्गाधरादयः ॥ २२७ ॥

सभास्थाने वयोज्येष्ठस्तिलकस्य मतानुगः ।
निर्धारितः सभासद्भिरणेनामा सभापतिः ॥ २२८ ॥

सहस्रपञ्चकं रौप्यद्रव्यमेकशताधिकम् ।
दत्तं चातिथिमुख्याय तिलकाय जनैर्मुदा ॥ २२९ ॥

हिंगणीशेलुसिन्दीनां ग्रामस्थैः संचितं निधिम् ।
षड्व्यधिकं सप्तशतं द्विसहस्रसमन्वितम् ॥ २३० ॥

सभास्थले समायातास्तिलकाय समार्पयन् ।
मानपत्रेण सहितमध्यक्षपठितेन ते ॥ २३१ ॥

दर्शनेनातिसंतुष्टा ग्रामत्रयनिवासिनः ।
सकला बालवृद्धाश्च नार्यो दर्शनलालसाः ॥ २३२ ॥

शताधिकसहस्रं ते ददुरम्रेडवासिनः ।
चतुर्दशशतं तद्वत् काटोलस्था हितैषिणः ॥ २३३ ॥

संपादितं महापुण्यं मोहपावासिसज्जनैः ।
अतिथिं गुरुदानेन पूजयित्वा स्वसद्मनि ॥ २३४ ॥

समारम्भः स्वागतस्य तिलकस्याभवद् महान् ।
फणिपुर्या मध्यभागे क्रीडास्थानेऽतिविस्तृते ॥ २३५ ॥

नव रूप्यसहस्राणि दक्षिणां गुरवे ददौ ।
सहाध्यक्षसमारूपो वेदोक्तः पुरुषो विराट् ॥ २३६ ॥

सहस्रवदनो देवः सहस्राक्षः सहस्रपात् ।
यो भूमिं विश्वतो वृत्वाप्यत्यतिष्ठद् दशाङ्गुलम् ॥ २३७ ॥

भंडाराग्राममेयाय समित्रः संघनायकः ।
कष्टेनान्वेषितस्तेन निवासः पूर्वयोजितः ॥ २३८ ॥

श्रुत्वागमनवृत्तं च बालस्य बहिरागताः ।
नाट्यगृहात् प्रेक्षका ये आसन् नाट्ये रता भृशम् ॥ २३९ ॥

नाटकं प्रेक्षकाभावात् सूत्रधारमहाशयः ।
समाप्तिमनयत् खिन्नो दृष्ट्वा निर्मानुषं गृहम् ॥ २४० ॥

रात्रौ विश्रम्य स्वस्थाने प्रभाते शयनोत्थिताः ।
सर्वेऽप्यतिथयः सिद्धा प्रययुर्घोषितं स्थलम् ॥ २४१ ॥

व्याख्यानं तत्र दत्त्वैकं बलं द्रव्यमनुष्ययोः ।
प्रार्थयामास तिलकः सर्वान् स्वातन्त्र्यकामुकान् ॥ २४२ ॥

ददुश्चतुःसहस्रं च धनं पञ्चशताधिकम् ।
यालाय सज्जनास्तत्र संघकार्यसमुत्सुकाः ॥ २४३ ॥

भंडाराख्यं स्थानमासीद् विद्वद्भिरुपसेवितम् ।
प्राचीनं च विदर्भेषु शिल्पकारसमन्वितम् ॥ २४४ ॥

भवभूतेर्जन्मभूमिर्नातिदूरं स्थलादिह ।
यालोऽपश्यत् पुरीमेतां भंडाराख्यां पुरातनीम् ॥ २४५ ॥

यालेन वैनगङ्गा च दृष्टासौ निर्मलोदका ।
यस्यास्तीरे मुकुन्देन रचितं काव्यमादिमम् ॥ २४६ ॥

विवेकसिन्धुरित्याख्यं जयपालहिताय वै ।
महाराष्ट्रसरस्वत्या यदासीदाद्यभूषणम् ॥ २४७ ॥

ततो नागपुरं यातः ससित्रस्तिलकः पुनः ।
पाध्येनाम्नो माधवस्य विख्यातस्य गृहेऽवसत् ॥ २४८ ॥

तदा कार्यवशात् तत्र दिनमेकमुवास ह ।
प्रतीक्षामुत्तरस्यासौ कुर्वन् केन्द्रीयशासनात् ॥ २४९ ॥

प्रतिकूलोत्तरं प्राप्य धामणगावं जगाम सः ।
द्रव्यं प्रदत्तं तत्रस्थैर्निष्ठया द्विसहस्रकम् ॥ २५० ॥

गतस्ततो यवतमाळं ददर्श तिलको जनान् ।
ग्रामस्थांश्च प्रयातः स स्थानं भुसावळाभिधम् ॥ २५१ ॥

उदारः पुरुषस्तत्र भगवान्दास आर्पयत् ।
त्रिसहस्रमितं द्रव्यं स्वराज्योद्यमसिद्धये ॥ २५२ ॥

तिलकः स्थानकात् तस्मात् प्रतस्थे मुम्बईपुरीम् ।
चतुर्विंशे दिनाङ्के स प्राप तत्र निजस्थलम् ॥ २५३ ॥

संपूर्णात्र कथा रम्या पूर्णातीरनिवासिनाम् ।
वर्धावैणप्रणीतानामुत्साहौदार्ययोः शुभा ॥ २५४ ॥

मुम्बय्यामुदधेस्तीरेऽगारे वैभवसंपदोः ।
धनिकैरुत्तरं दत्तं वर्णयेऽहमितः परम् ॥ २५५ ॥

पर्यटत् तिलकः काले त्रिसप्ताहाधिकं ततः ।
विदर्भेषु शरीरस्य क्लेशस्तस्याभवद् महान् ॥ २५६ ॥

आसीदावश्यकं स्वास्थ्यं पुनः शक्तिविवृद्धये ।
कंचित् कालं क्षीणशक्तेर्लोकमान्यस्य वै तदा ॥ २५७ ॥

लोकमान्यः पुण्यपुर्यां न्यवसद् निजसद्मनि ।
दिनानि विंशतिं तत्र भिषजामुपदेशतः ॥ २५८ ॥

एकोनविंशे दिवसे मार्चे सोलापुरं प्रति ।
नीतः सुहृद्भिस्तिलक उत्सुकैः संचालकैः ॥ २५९ ॥

नानासभासु प्रोक्तानि बालप्रमुखवक्तृभिः ।
स्फूर्तिप्रदानि वाक्यानि श्रुत्वा नगरवासिनः ॥ २६० ॥

द्रव्यं नवसहस्रं वै भक्त्या बालाय ते ददुः ।
दर्शयित्वा स्वविश्वासं तिलकस्य समुद्यमे ॥ २६१ ॥

कृत्वाभिनन्दनं तेषां लोकमान्यो न्यवर्तत ।
तस्मात् स्थानात् प्रियं गन्तुं नगरं पुण्यमात्मनः ॥ २६२ ॥

एकत्रिंशद्दिने तस्मिन् पुण्यग्रामनिवासिनः ।
रेमार्केटसभास्थानमसङ्ख्यशताः समागमन् ॥ २६३ ॥

त्यक्त्वा स्वगेहकार्याणि नार्योऽपि समुपस्थिताः ।
आङ्ग्लदेशं जिगमिषुं तिलकं द्रष्टुमातुराः ॥ २६४ ॥

भक्त्या याता जनास्तत्र सचिन्ताः खिन्नचेतसः ।
तिलकेन विदेशस्य मनोनिश्चितयात्रया ॥ २६५ ॥

अस्माकं तिलकः प्राणो गच्छति ब्रिटिशालयम् ।
साहसं स्याद्ध्वियानं चालैवं विनिश्चितम् ॥ २६६ ॥

पौरस्त्यज्ञानिनः कांश्चिद् विहायान्यत्र नास्ति वै ।
प्रदेशे गौरकायाणां मित्रं तस्येत्यसंशयम् ॥ २६७ ॥

बुद्बुदुस्ते जनास्तस्मै मन्त्रिणः शासका अपि ।
उत्थितं कुप्रचारेण तद्द्वेषविषमुत्तमम् ॥ २६८ ॥

जलान्तश्चरनौकाभिर्जर्मनीनौदलाधिपैः ।
प्रेरिताभिः समुद्रस्य मार्गो हि विषमाकुलः ॥ २६९ ॥

विकीर्णाः स्फोटकास्तत्र सर्वतः सागरोदरे ।
वार्ता नौकाविनाशस्य वृत्तपत्रेषु नित्यशः ॥ २७० ॥

प्रकाशिताः पठन्ति स्म भारतेष्वखिला जनाः ।
यात्रासुरक्षाविषये बभूवुर्भयकातराः ॥ २७१ ॥

अमण्डद् मोतिवालेऽसौ सभाध्यक्षपदे तदा ।
वाचस्पतिर्महाराष्ट्रे कालकर्तेति विश्रुतः ॥ २७२ ॥

वक्ता मुख्यो विरोधं स दर्शयामास भारते ।
राज्यशासकयोर्मध्ये भारताङ्ग्लप्रदेशयोः ॥ २७३ ॥

निषेधार्थं स्वराज्यस्य स्थापनस्यैव भारते ।
कुर्वन्त्यान्दोलनं सेवानिवृत्ता हिन्दसेवकाः ॥ २७४ ॥

सिडेनहामादयः सर्वे कुटिला हिन्दशत्रवः ।
विद्यार्थिनोऽपि चानीतास्तदर्थं तत्र साग्रहम् ॥ २७५ ॥

भारते तु प्रत्यवायः शासनेन प्रवर्तितः ।
तादृशानां सेवकानां छात्राणां च दुराग्रहात् ॥ २७६ ॥

निधिं ह्यचिन्वन् सकला अनेकायुतसंमितम् ।
न युद्धस्योपयोगाय विरोधायैव केवलम् ॥ २७७ ॥

अधिकारप्रदानस्य भारतायेति सर्वथा ।
भारतीयग्रन्थपुष्टाः कृतघ्नाः काकवृत्तयः ॥ २७८ ॥

कारुण्यं स्वल्पमुत्पन्नं पाषाणहृदयेष्वपि ।
कालेऽस्मिंस्तारतम्येन वर्तितव्यं जनैः किल ॥ २७९ ॥

शिष्टानां प्रेषितव्यानि मण्डलानि च भारतात् ।
आङ्ग्लप्रजाविचारेषु विधातुं परिवर्तनम् ॥ २८० ॥

एकादश सहस्राणि रूप्याणामर्पितानि तैः ।
तिलकाय च वस्त्राणि परिधानाय सज्जनैः ॥ २८१ ॥

मानपत्रोत्तरं पश्चादुवाच तिलकः सभाम् ।
यस्यां तत्पुरतोऽतिष्ठत् संपूर्णं पुण्यपत्तनम् ॥ २८२ ॥

सुखिनोऽप्याङ्ग्लदेशस्थाः कुर्वन्त्यान्दोलनं महत् ।
दुःखिताः सर्वथा यूयं कथं स्वस्था निजे गृहे ॥ २८३ ॥

अनुकूलं यदस्माकमाङ्ग्लदेशेऽपि दृश्यते ।
तदेव स्वकरैर्धृत्वा कर्तुं च बलवत्तरम् ॥ २८४ ॥

अवश्यं क्रियतां यत्नः कुशलैः स्वावलम्बिभिः ।
भारतप्रेषितैः शिष्टैः कर्माकर्मविवेकिभिः ॥ २८५ ॥

इंग्लंडे शिष्टवृन्दानां प्रभावार्थं भवेद् हितः ।
तत्संवादिविचाराणां भारतोत्थप्रतिध्वनिः ॥ २८६ ॥

अपूर्वेऽस्मिन् समारोहेऽदृश्येतां स्फूर्तिदायके ।
लोकानां तिलके भक्तिर्वात्सल्यं तस्य तेषु च ॥ २८७ ॥

प्रासादे शोभने जातः समारम्भो ह्यलौकिकः ।
भव्यश्चेतोहरो दिव्य उद्दिष्टोदात्ततोचितः ॥ २८८ ॥

उपाहारस्तथा पेयं ताम्बूलं कुसुमानि च ।
अतिथिभ्यः प्रदत्तानि वालमेलनहेतुना ॥ २८९ ॥

हरिभाऊ महाराष्ट्रसाहित्यिकशिरोमणिः ।
देहस्वास्थ्यं च कार्येषु बालस्याचिन्तयद् यशः ॥ २९० ॥

गम्यतां दर्शनायेति पुनः शीघ्रमुवाच सः ।
'उषःकाल'स्य निर्माता वाचा गद्गदया हरिः ॥ २९१ ॥

आलिङ्गत् तिलकः प्रेम्णा तमस्ति खलु दुर्लभः ।
महात्मनोश्च संयोगः मर्त्यानां रोमहर्षणः ॥ २९२ ॥

पुण्यग्रामप्रतिष्ठायाः स्थानं धाद्रातिर्ग च यत् ।
सभासौ सार्वजनिकी तिलकायाशिषो ददौ ॥ २९३ ॥

कृत्वातिथ्यं च सत्कारं तिलकस्य यथोचितम् ।
तिलकः पूजितः सभ्यैर्गङ्गा गाङ्गोदकैरिव ॥ २९४ ॥

प्राप्तो गणपतिः श्रीमान् खापर्डेवंशभूषणः ।
लोकवन्द्यो विदर्भाणां नेता पुण्यपुरीं प्रति ॥ २९५ ॥

मुम्बेतरप्रदेशेभ्यो द्वावास्तां शिष्टमण्डले ।
एकः सदस्यः वैदर्भः पालोऽन्यो वङ्गदेशतः ॥ २९६ ॥

चक्रुरातिथ्यसत्कारं जना गणपतेरपि ।
प्रस्थितस्याङ्ग्लयात्रायै योगायोगागतस्य च ॥ २९७ ॥

सायं पञ्चवादने काले त्रयोविंशे दिने तदा ।
प्रतस्थिरे पुण्यपुर्याः शिष्टा मुम्बापुरीं प्रति ॥ २९८ ॥

प्रोढं तेषां वाहनं वै निवासात् स्थानकं प्रति ।
सुशोभितैर्लतापत्रपताकातोरणादिभिः ॥ २९९ ॥

प्रकाशितैर्वायुदीपैः प्रज्वलद्भिः शताधिकैः ।
जयघोषेण वाद्यानां ध्वनिभिश्च निनादितैः ॥ ३०० ॥

पथिभिः संकुलैर्नारीपुरुषैः सार्ववर्णिकैः ।
विभिन्नधर्मिभिश्चैव नानावेषविभूषितैः ॥ ३०१ ॥

स्थानके जनसंमर्दः प्रचण्डः समुपस्थितः ।
महाकष्टेन शिष्टास्ते स्वकक्षां प्राविशंस्तदा ॥ ३०२ ॥

सदस्यानां मण्डलस्य शुभेच्छा दर्शिता जनैः ।
उत्साहो निजविश्वासश्चोदात्तोद्दिष्टकर्मणि ॥ ३०३ ॥

प्रस्थितोऽग्निरथः कृत्वा यन्त्रात् प्रायणिकध्वनिम् ।
दर्शिते हरिते दीपे नियन्त्रा वाहनस्य ह ॥ ३०४ ॥

मुम्बई स रथः प्राप्तः प्रातर्लोकाः समाययुः ।
विजयास्थामकं पुष्पहारैस्तत्स्वागताय च ॥ ३०५ ॥

कार्यक्रमे च तत्रस्थे प्रथमस्थान आस्थिता ।
परिषद् ह्यस्यजादीनामस्पृश्यत्वनिषेधिनी ॥ ३०६ ॥

महत्त्वं तस्य कार्यस्य तिलकेनोपपादितम् ।
समत्वस्य च सर्वेषामवश्यत्वं हि भारते ॥ ३०७ ॥

विद्यते न प्रत्ययाधः सच्छास्त्रेषु यथार्थतः ।
साम्योत्पत्तौ समाजस्य घटकेष्वखिलेषु च ॥ ३०८ ॥

अपराह्णे समाजस्य मरुदेशनिवासिनाम् ।
सभा जाता सदस्यानां तद्विद्यालयमन्दिरे ॥ ३०९ ॥

दानं पञ्चसहस्रं च ददौ त्रिगुणितं तदा ।
लालोत्तरः सभाध्यक्षो गोविन्दस्तिलकाय च ॥ ३१० ॥

जमन्लालयजाजेन निर्मितेन बलेन हि ।
सुव्यवस्था सभास्थानेऽखिला संपादितामवत् ॥ ३११ ॥

यन्त्रशकयुग्मस्थानेष्वखिला श्रमकारिणः ।
स्वीकर्तुं फलताम्बूलं भक्त्या तिलकमाह्वयन् ॥ ३१२ ॥

धनं षोडशसाहस्रमयच्छन् श्रमजीविनः ।
सहस्रमेकं रूप्याणामेवैकाणकसंचयात् ॥ ३१३ ॥

पालस्य कथितो हेतुः सभाध्यक्षेण भाषणे ।
संप्रत्याङ्ग्लप्रदेशस्य गमनस्य समर्पकः ॥ ३१४ ॥

मुम्बापुर्यां सिडन्हामे प्रान्ताधिपपदे स्थिते ।
षड्वत्सरमितं देहदण्डनं बन्धनालये ॥ ३१५ ॥

निवासस्यातिघोरस्य तत्त्वहन्ता समादिशत् ।
श्रेष्ठन्यायासनाधीशो दावरस्तिलकं प्रति ॥ ३१६ ॥

प्रदर्शितो जनक्षोभो मुम्बापुर्यां तदा महान् ।
श्रमिकैरेकसप्ताहं युष्माभिर्वारवृत्तिभिः ॥ ३१७ ॥

स एव प्रस्तुते काले भारतस्य विरोधिनः ।
कर्तुं तस्य प्रतीकारं तिलकस्तत्र गच्छति ॥ ३१८ ॥

ततो पालमुखेनोक्तिं श्रुत्वा वीररसप्रदाम् ।
पूरितं जयघोषैस्तैः सभ्यैराकाशमण्डलम् ॥ ३१९ ॥

अण्णा नेने निदेशो रक्षकः स्वगृहं प्रति ।
तत्सत्कारविशेषाय निनाय तिलकं तदा ॥ ३२० ॥

उपाहारसमारम्भश्चायनोपवने कृतः ।
स्मरणीयो वमनजीमिस्तिलकस्नेहधारिभिः ॥ ३२१ ॥

हार्नीमनैः संकलितं शिरस्त्राणे निजे धनम् ।
सार्धमेकसहस्रं च तिलकाय समर्पितम् ॥ ३२२ ॥

तिलकस्याक्षरीयुक्तं मुद्रितं पत्रकं जनाः ।
अक्रीणन्त सभास्थाने रूप्यैः पञ्चशतेन च ॥ ३२३ ॥

आशीर्वचो वैदिकाश्च समन्त्रं सस्वरं ददुः ।
यशसे देशकार्यस्य पुण्यठाकुरमन्दिरे ॥ ३२४ ॥

मनमोहनदासेन द्रव्यं यच्च समर्जितम् ।
मुळ्जीजेठनिषद्यायां तदर्पणविधिः कृतः ॥ ३२५ ॥

सभायां श्रेष्ठिनः सर्वे तिलकं तद् दिदित्सवः ।
सहस्रमार्पयन् पञ्चदश द्रव्यं मुदा किल ॥ ३२६ ॥

वर्धन्ते संपदो दानात् सत्पात्रक्षेत्रपर्वसु ।
शास्त्रोपितः सुश्रुता सैषा धनिनां धर्मवर्त्मनाम् ॥ ३२७ ॥

शास्त्रप्रोक्तत्रियोगाणां दैवेनैकत्रसंस्थितिः ।
वयं भूमः सविश्वासमस्मिन् दाने भवत्कृते ॥ ३२८ ॥

गच्छन्तु संपदो वृद्धिमौदार्यं चापि वर्धताम् ।
इत्याह भाषणस्यान्ते तिलकः श्रीमतो जनान् ॥ ३२९ ॥

युवकेन वजाजेन तरुणैश्च दलस्थितैः ।
पतित्वा पादयोस्तस्य तिलकस्त्वभिवन्दितः ॥ ३३० ॥

तिलकेन शिरस्तेषां स्पृष्ट्वाङ्गुलिभिरात्मनः ।
युवकानां च सर्वेषाममीष्टं तेन चिन्तितम् ॥ ३३१ ॥

द्रव्यसंचयवृत्तान्तः सत्कारस्य कथाः शुभाः ।
संचारस्य विदर्भेषु संक्षिप्तं च निवेदनम् ॥ ३३२ ॥

यदाधारेण हि प्रोक्तं देववाण्यां यथामति ।
मद्विंगतमिश्रस्य नृसिंहस्य करोम्यहम् ॥ ३३३ ॥

वसतो मत्स्मृतौ नित्यं तदद्गान्तेऽभिवादनम् ।
जिमामोस्तैलकं वृत्तं प्रमाणं खलु तत्कृतिः ॥ ३३४ ॥

तिलकचरितं परमगहनं देशसंसारविम्ब-
मम्मृतमधुरं तरुणहृदयस्पर्शि सद्भावपूर्णम् ।
विमलमतुलं मनुजहृदयाकाशदीप्तिप्रदं यद्
भुवनविरलप्रथितयशसां तुष्टयेऽभ्यासयोग्यम् ॥ ३२५ ॥

इति माधवविरचिते श्रीतिलकयशोऽर्णवे विदर्भादिप्रदेशसंचारनामा षष्टितमस्तरङ्गः ।

# एकषष्टितमस्तरङ्गः

बालप्रमुखनेतॄणां स्वागतं पुरवासिभिः ।
पुण्यपुर्यां च मुम्बय्यां कृतं तद् वर्णितं मया ॥ १ ॥

स्वराज्यसंघकार्यस्य धुरीणाः शिष्टमण्डले ।
नियुक्ता जलयात्रायै संप्राप्ता मुम्बईपुरीम् ॥ २ ॥

ऐच्छन् सदस्याः संघस्य सभाया ह्यधिवेशनम् ।
प्रातिनिध्येन गन्तॄणां कर्तुं प्रेम्णाभिवादनम् ॥ ३ ॥

प्राप्ताः सदस्याः परिषत्स्थलमष्टशताधिकाः ।
भारतस्य प्रदेशेभ्यो दूरस्थेभ्योऽप्युपस्थिताः ॥ ४ ॥

शाखाध्यक्षेण सर्वेषां भाषणे स्वागतं कृतम् ।
मनमोहनदासेन स्वल्पे यदर्थसूचके ॥ ५ ॥

वृत्तानुज्ञा प्रयाणस्य सभया सर्वसंमता ।
आङ्ग्लप्रभृतिदेशेषु यतितुं दास्यमुक्तये ॥ ६ ॥

नामनिर्दिष्टशिष्टेभ्य आङ्ग्लशासनपञ्जरात् ।
लुप्तवैभवसंमानप्राप्तये भारतस्य च ॥ ७ ॥

चिन्तितं तत्प्रयत्नाय विदेशे विपुलं यशः ।
कृपया जगदीशस्य चाशीर्भिः कर्मयोगिनाम् ॥ ८ ॥

तिलकस्य महाकार्ये धनसृभिर्दर्शिताखिलैः ।
पराकाष्ठा स्वनिष्ठायाः स्वव्याख्याने सभास्थले ॥ ९ ॥

कर्णाटके नागपूरे विदर्भेषु च चालकाः ।
शाखानां भाषणं चक्रुर्महाराष्ट्रे च नायकाः ॥ १० ॥

खापर्डेविपिनचन्द्रावूचतुः स्वमनोगतम् ।
प्रमुखौ च वयोमानवृद्धौ यौ शिष्टमण्डले ॥ ११ ॥

यात्रारम्भदिनात् पूर्वं पूजां स्वीकृत्य तैः कृताम् ।
दत्त्वाशिषो यात्रिणश्च ततस्ते सन्ति वर्त्मगाः ॥ २४ ॥

तत्पुराणोपचारस्यानुकृतिर्हि विलोकिता ।
तस्मिन् महोत्सवे भव्ये परिषन्मण्डपे मया ॥ २५ ॥

अथ चेत् संभवेच्छङ्का श्रोतृवृन्दस्य मानसे ।
शिष्टैः प्रयातुमिंग्लंडं कोलंबोगमनं कृतम् ॥ २६ ॥

मुम्बईपत्तनं त्यक्त्वा सुखैवं केन हेतुना ।
ह्रस्वमार्गं परित्यज्य दीर्घमार्गावलम्बनम् ॥ २७ ॥

आङ्ग्लदेशप्रयाणस्य वर्तेते कारणद्वयम् ।
पूर्वग्रन्थे विनिर्दिष्टं कारणं प्रथमं मया ॥ २८ ॥

स्वातन्त्र्याप्तिप्रयत्नार्थं प्रास्त्यं भारतस्य वै ।
अनुकूलत्वमिंग्लंडे लोकानां शासनस्य च ॥ २९ ॥

आसीद् ह तिलको मुख्यः शिष्टानां मण्डलस्य च ।
तस्योद्देशस्य साफल्यं तत्कर्तव्यं महत्तमम् ॥ ३० ॥

उद्देशोऽन्यश्चाधियम्रा कर्तुं चर्चां विशेषतः ।
चिरोलद्रोपसिद्ध्यर्थं ब्रिटिशन्यायमन्दिरे ॥ ३१ ॥

उभयोद्देशपूर्त्यर्थं प्रयाणं सत्वरं हितम् ।
दर्शनायाङ्ग्लमित्राणां तिलकेन विनिश्चितम् ॥ ३२ ॥

कृतदीर्घप्रयत्नोऽपि नाविन्दज्जलवाहिनीम् ।
गामिनीमाङ्ग्लदेशस्य मुम्बय्या निकटावधौ ॥ ३३ ॥

कोलंबोपत्तनादेका लांकेशायाभिधायिनी ।
यूरोपाभिमुखी नौका यास्यत्येवेति विश्रुतम् ॥ ३४ ॥

तयैव नावा गन्तव्यं शिष्टैः सर्वैर्विनिश्चितम् ।
तत्प्राप्त्यै प्रस्थिताः सर्वे लङ्कां शिष्टास्तथानुगाः ॥ ३५ ॥

ततः कल्याणपर्यन्तं विशेषाग्निरथेन ते ।
प्रवासं चक्रिरे शिष्या इष्टमित्रसमन्विताः ॥ ३६ ॥

अवतीर्य रथात् तत्र प्राविशच् शिष्यमण्डलम् ।
मद्रासमेलमायान्तीं लङ्कां गन्तुं सहानुगम् ॥ ३७ ॥

विजयास्थानके शिष्या मया सर्वेऽभिवन्दिताः ।
मागच्छन्नितरैः सार्धं कल्याणस्थानकं प्रति ॥ ३८ ॥

प्रयाणसमयात् पूर्वं विजयास्थानकादहम् ।
आदिष्टो मण्डलज्येष्ठैस्त्रिभिः शिष्टैः पुनः पुनः ॥ ३९ ॥

मुंजे गङ्गाधरस्त्वं च कुरुध्वं सुनिरीक्षणम् ।
स्वराज्यसंघकार्यस्य प्रान्ते चाखिलभारते ॥ ४० ॥

पालयेऽहमनुज्ञां यत्तानवोचं कृताञ्जलिः ।
नत्वा समस्तान् मज्ज्येष्ठानाचार्यान् साश्रुलोचनः ॥ ४१ ॥

प्रस्थिते तद्रथे शीघ्रं गन्तुकामो गृहं बहिः ।
इच्छन् शिष्टेभ्य आयातः सुयात्रां चामलं यशः ॥ ४२ ॥

सप्तविंशे दिने मार्चे प्रवासं तिलकादयः ।
आरेभिरे सुखासीना मद्रासाभिमुखे रथे ॥ ४३ ॥

विजापुरस्थकौजल्गीमुख्यमित्रजनाग्रहात् ।
अवातरन् निवासाय सर्वे सार्धदिनावधिम् ॥ ४४ ॥

दिने त्रिंशत्तमे शिष्टा ऊर्धुर्दक्षिणपत्तने ।
सार्धं दिनावधि सर्वे प्राप्य मद्रपुरीं प्रति ॥ ४५ ॥

व्यतीयुः शिष्टा अड्यारे काले कतिपयं तदा ।
आदृताः सादरं पूर्वं योगिन्या वै बिझांटया ॥ ४६ ॥

आदृता नगरे शिष्टास्तत्रस्थैर्विविधधर्मिभिः ।
हिन्दुभिः सर्ववर्णैश्च भारतोत्कर्षकाङ्क्षिभिः ॥ ४७ ॥

गणेशः पालवाय् च तिलको मण्डलाग्रणीः ।
नृसिंहो रघुनाथश्च सदस्याः शिष्टमण्डले ॥ ४८ ॥

तिलकप्रमुखाः शिष्टा मद्रासप्रान्तवासिभिः ।
मानपत्रप्रदानेन पूजिताः सादरं जनैः ॥ ४९ ॥

स्वागताय हि शिष्टानां तदा तत्र विराट्सभा ।
सुब्रह्मण्याय्यरो नेता सभापतिपदे स्थितः ॥ ५० ॥

भाषणे दर्शयामासुर्विविधाः कार्यचालकाः ।
तिलकेऽविचलां भक्तिं कार्ये तस्य च संमतिम् ॥ ५१ ॥

बालस्य निखिलं कार्यं सभाध्यक्षेण शंसितम् ।
पुरुषो विद्यते नैव भारते तिलकोपमः ॥ ५२ ॥

यदेदमाह न्यायेशः सुब्रह्मण्यः सभापतिः ।
सभासद्भिः कृतो नादस्तालानां व्योमगो महान् ॥ ५३ ॥

आमद्रासधनुष्कोटिप्रवासे वञ्चिता जनाः ।
दर्शनाल्लोकमान्यस्य मार्गस्थग्रामवासिनः ॥ ५४ ॥

मार्गस्थाल्पस्थानकेषु नातिष्ठद् धूम्रवाहनम् ।
यातायाताय लोकानां तस्माद् दर्शनदुर्लभः ॥ ५५ ॥

तिलकोऽभूत् स्वप्नसक्तानां निशायां तिमिरेण च ।
प्रतीक्षां चक्रिरे सर्वे नेतृदर्शनकाङ्क्षिणः ॥ ५६ ॥

मदुरादिस्थानकेषु स्वल्पकालं स्थिरोऽभवत् ।
रथस्तेषां समायाता रात्रावपि दिदृक्षवः ॥ ५७ ॥

सहस्राधिकसामान्यास्तिलकं भारतस्य तम् ।
चक्रुर्व्यवस्थया सर्वे स्वागतं तस्य सज्जनाः ॥ ५८ ॥

केषुचित् तु स्थानकेषु दृष्ट्वा तिलकवाहनम् ।
प्राधावत् सजवं लोकाश्चक्रुस्तज्जयघोषणाः ॥ ५९ ॥

बालस्य दर्शनाभावात् तस्य वाहनदर्शनम् ।
मेनिरे ते स्वागतार्थं तिलकस्य यथोचितम् ॥ ६० ॥

क्षुत्पीडितः पिबत्येव तक्रं दुग्धे सुदुर्लभे ।
सानन्दं वै तथा लोका आचरन् मार्गमास्थिताः ॥ ६१ ॥

पूजया नन्दिनः शैवास्तोषं लिङ्गार्चनार्जितम् ।
भगवद्दर्शनानन्दं वैष्णवास्तार्क्ष्यपूजनात् ॥ ६२ ॥

लभन्त इत्युपास्यस्य भक्त्या वाहनपूजनम् ।
हराच्युतालये भक्ता नित्यं कुर्वन्ति भाविकाः ॥ ६३ ॥

भक्तिर्देवे तथा तस्य वाहनेऽप्युचिता मता ।
संमतो भारतेऽस्माकमाचारोऽयं सनातनः ॥ ६४ ॥

दिवा यातो रथस्तेषां कोलंबोस्थानकं प्रति ।
दीर्घाङ्गणं प्रेक्षणीयं पत्तनस्य विभूषणम् ॥ ६५ ॥

भारतीयाः सिंहलास्तथा जाफनावासितामिलाः ।
प्रत्युद्ययुः स्वागतार्थं शिप्रानां बहुसंख्यया ॥ ६६ ॥

कोलंबोनगरे लोकास्तिलकस्वागतोत्सुकाः ।
लोकोत्तरातिथिभ्यस्ते दर्शयामासुरादरम् ॥ ६७ ॥

श्रोतुं बालस्य वक्तव्यं मिलिता बहवो जनाः ।
ख्यातोऽरुणाचलो नेता सभापतिपदे स्थितः ॥ ६८ ॥

तामिलो जाफनावासी योऽभूत् सर्वजनप्रियः ।
लोकानां हितकर्तापि पार्थिवेन समादृतः ॥ ६९ ॥

तिलको भण्डलाध्यक्षः कथयामास सज्जनान् ।
द्वितीयः सुप्रसङ्गोऽयं लङ्काया दर्शनस्य मे ॥ ७० ॥

पूर्वकालेऽनुभूतस्य स्वागतस्य स्मृतिर्मयि ।
अभवत् स्फूर्तिदा नित्यं न साद्यापि व्यलुप्यत ॥ ७१ ॥

अस्ति साद्य त्रिगुणिता द्वितीये दर्शनोत्सवे ।
आतिथ्यादरसत्कारैरत्यन्तोपकृता वयम् ॥ ७२ ॥

अहर्निशं प्रार्थयेऽहं लङ्काद्वीपस्य मङ्गलम् ।
परस्परप्रेमवृद्धौ विहितं ह्यनयोर्हितम् ॥ ७३ ॥

लङ्काभारतयोरेका संस्कृतिः स्नेहवर्धिनी ।
अहिंसाध्यात्मभूयिष्ठा पापबुद्धिविनाशिनी ॥ ७४ ॥

कनीयान् सिंहलो बन्धुर्भारतस्य सहोदरः ।
देशयोरुभयोर्मध्ये भ्रातृभावो विवर्धताम् ॥ ७५ ॥

शिष्टमण्डलकार्यस्य हेतुं स्पष्टमुवाच सः ।
अन्ते ते प्रार्थिता सभ्याः सहकार्याय सज्जनाः ॥ ७६ ॥

अध्यक्षस्तिलकं प्राह वाञ्छामः सर्वथा यशः ।
भवदङ्गीकृते यत्ने वयं सिंहलवासिनः ॥ ७७ ॥

इंग्लंडाङ्कितदेशानामुद्धारो विजयाद् भवेत् ।
भारतस्येति विश्वासो लङ्काद्वीपे प्रवर्तते ॥ ७८ ॥

नभोनिनादि चक्रुस्तं पौरैः शतशताधिकैः ।
तदा विपिनचन्द्रस्य श्रुतं तत्त्वावबोधकम् ॥ ७९ ॥

यस्यां डिमेलोऽध्यक्षोऽभूद् विद्वन्मान्यः प्रतिष्ठितः ।
सभायां शिष्टपूजार्थं कृतायां लोकनायकैः ॥ ८० ॥

रूप्याणां द्वे सहस्रे वै प्राप्तं द्रव्यं सभास्थले ।
राज्यपालस्मारकाय दत्तं तत्सूत्रचालकैः ॥ ८१ ॥

शिष्टमण्डलकार्यार्थं कर्तुं द्रव्यस्य संचयम् ।
उपक्रमः कृतस्तत्र देशस्थानन्यवादिभिः ॥ ८२ ॥

दिनद्वयं सदस्यानां मण्डलस्य विशेषतः ।
सत्कारस्योपचाराणां व्यतीतं खलु पालने ॥ ८३ ॥

प्रस्थानस्य दिने कश्चिद् मुम्बापुर्यां सुहृज्जनः ।
नरसिंहं प्रति प्राह जापानी जलवाहिनी ॥ ८४ ॥

आगमिष्यति लङ्कायाः पत्तनं पञ्चमे दिने ।
सुखावहा प्रवासाय यीयामाविंति संज्ञिता ॥ ८५ ॥

तया प्रवासः कर्तव्य इत्यभूत् सर्वसंमतम् ।
संप्रार्थिता व्यवस्थायै टामस्कुकधिकारिणः ॥ ८६ ॥

टामस्कुकस्कार्यवाहं प्रष्टुं पेल्लकरः स्वयम् ।
गतः प्राप्याणि पत्राणि नौकायानस्य वा न वा ॥ ८७ ॥

अधिकारी प्रत्युवाच जापानी जलवाहिनी ।
पक्षात् पूर्वं तु नागच्छेल्लङ्कां भवदभीप्सिता ॥ ८८ ॥

भवेदागमनं तस्यास्त्रयोविंशे दिने किल ।
दिनविंशतिविश्रान्तिकालोऽस्माकं न विद्यते ॥ ८९ ॥

अन्यस्यां जलवाहिन्यां नृसिंहः प्राह तं पुनः ।
लांकेसारीनामिकायां व्यवस्थां कृपया कुरु ॥ ९० ॥

जलयानं विशीर्णूणमाङ्ग्ललोकनुयायनिम् ।
शिष्टानां लोकमान्यस्य संघस्याभ्यर्थना मम ॥ ९१ ॥

एतया संभाषणं तेन तत्संघस्याधिकारिभिः ।
प्रतिश्रुतं नृसिंहाय नौकास्थानं सुरक्षितम् ॥ ९२ ॥

सप्तप्रवासिनां तस्यां शिष्टमण्डलवर्तिनाम् ।
भवन्तु तत्पराः सर्वे प्रवासायोचिते दिने ॥ ९३ ॥

नैराश्यपरिप्लुतास्तं नरसिंहमुखाम्बुजम् ।
प्रमोदपूर्णं संजातं श्रवणेन प्रतिश्रुतेः ॥ ९४ ॥

अन्येद्युरपराह्णे सा याम्यायैव ऽियाह्ने ।
मौः पूर्योऽस्तेति संदेशः प्राप्तोऽसौ कार्यपादपैः ॥ ९५ ॥

सार्वभौमाङ्ग्लराज्यस्य विभागः सिंहलो मतः।
तस्य शासनकार्यार्थमासीद् वै सचिवालयम् ॥ ९६ ॥

यात्रापत्रस्य पालस्य संमत्यै गोखले गतः।
प्रातः कार्यालयं तत्र शिष्टानां कार्यवाहकः ॥ ९७ ॥

पालस्य यात्रापत्राय संमतिं न ददाम्यहम्।
भारतस्योपराजस्य शासनादेशतः खलु ॥ ९८ ॥

यात्रापत्रं च पालस्य स्वालये तेन रक्षितम्।
अन्येषामपि पत्राण्यादातुमाज्ञापितोऽधुना ॥ ९९ ॥

संप्रदानं च पत्राणां शिष्टेभ्यो यत्कृतं पुरा।
संप्रेष्य नूतनादेशं सर्वं तच्च निराकृतम् ॥ १०० ॥

सर्वेषां तानि पत्राणि कृपयानय रक्षितुम्।
एवं विज्ञापितस्तेन जातोऽहं स्तिमितस्तदा ॥ १०१ ॥

दामोदरस्य तद् वाक्यं श्रुत्वा सर्वेऽतिविस्मिताः।
प्राप्ताः कार्यालयं क्षिप्रं समित्रास्तिलकादयः ॥ १०२ ॥

विज्ञातं तत्र तैः सर्वं समादेशावलोकनात्।
पूर्वादेशस्य न्यक्कारः सार्वभौमेन सूचितः ॥ १०३ ॥

खापर्डेपालतिलकैस्त्रिभिर्ज्येष्ठैः पृथक् पृथक्।
तिलकोत्तरसंदेशो दर्शितं मण्डलोत्तरम् ॥ १०४ ॥

सर्वैरुत्तरसंदेशा निम्नार्थप्रतिपादकाः।
भारतस्योपराजाय प्रेषिताः पूज्यनेतृभिः ॥ १०५ ॥

दातव्या गमनानुज्ञा नौकामार्गेण सत्वरम्।
वयं प्रयाणसंनद्धा भवत्संमतिकाङ्क्षिणः ॥ १०६ ॥

उत्तरं ह्युपराजस्य संप्राप्तं शासनालये।
राज्यपालस्य लङ्कायाः पठितं तिलकादिभिः ॥ १०७ ॥

निवेदितं मया सर्वं सार्वभौमाधिकारिणे ।
तिलकस्याङ्ग्लदेशं वै गमनस्य प्रयोजनम् ॥ १०८ ॥

तदर्थं गमनानुज्ञा काम्यते तिलकादिभिः ।
दातव्या सा शासनेनाविलम्बेन च तान् प्रति ॥ १०९ ॥

गमनं केपपर्यन्तं नैव नैव ततः परम् ।
यावत् तैः सार्वभौमस्य संदेशो नोपलभ्यते ॥ ११० ॥

स्थितोदधौ महानौका नेतुमिंग्लंदगामिनः ।
सुवेजस्य सुमार्गेण तीर्त्वा वै मध्यभूदधिम् ॥ १११ ॥

न तु गच्छति सा केपमाफ्रिकादक्षिणस्थितम् ।
नोपयुक्ता प्रयासाय ह्याइस्रायोत्तरादपि ॥ ११२ ॥

केपशब्दस्य निर्देशात् तस्मादन्यत् स्थलं प्रति ।
गमनाय न दास्यामि भवद्भ्यः संमतिं किल ॥ ११३ ॥

उवाचैवं राज्यपालो लङ्काद्वीपस्य मण्डलम् ।
केपपर्यन्तशब्दानामिष्टो लोपो भवेत् खलु ॥ ११४ ॥

भारतस्योपराजाय संदेशे प्रार्थना कृता ।
इति संप्रेष्य संदेशं पुनरुद्विग्नचेतसः ॥ ११५ ॥

विमनस्कास्तदा सर्वे कोलंबोनगरे निशि ।
भारतात् प्रेषयामासुः संदेशान् हितचिन्तकाः ॥ ११६ ॥

प्रस्थिता समये नौका पत्तनात् सागरं तदा ।
प्रयासाय नियुक्तानां देशानां च यथाक्रमम् ॥ ११७ ॥

नौका गता स्थिताः शिष्टा दैवागम्यगतिं ननु ।
चिन्तयन्तो मूकवाचो यात्रावैफल्यविस्मिताः ॥ ११८ ॥

ह्याइस्रायस्य संप्राप्तं निराशाजनकोत्तरम् ।
नास्ति मे संमता तेषां शब्दलोपस्य सूचना ॥ ११९ ॥

दुर्दैवस्य विलासोऽयं संकल्पो विफलोऽभवत् ।
मतिभ्रंशेन जातेन बहुविघ्नैरकल्पितैः ॥ १२० ॥

दैवेनैव विपर्यस्ता सानुकूला परिस्थितिः ।
मनसा चिन्तितं कार्यं दैवमन्यच्च चिन्तयेत् ॥ १२१ ॥

शासनप्रतिषेधस्य निषेधः प्रकटीकृतः ।
प्रथमं मुम्बईपौरैर्व्याख्यानेषु सभास्थले ॥ १२२ ॥

आसीज्जिना सभाध्यक्षः पुरस्था बहवो जनाः ।
स्वसंमतेर्दर्शनाय सभास्थानमुपस्थिताः ॥ १२३ ॥

इंग्लंडेऽपि कृता होमरूललीगस्य शाखया ।
विनिन्दा प्रतिषेधस्य कृतस्याङ्ग्लाधिशासकैः ॥ १२४ ॥

स्वोत्तरे सुरराजेन कृतं तस्य समर्थनम् ।
दर्शयित्वा नीतितत्त्वं सार्वभौमस्य संमतम् ॥ १२५ ॥

युद्धोपयोगिकार्ये च राष्ट्रशक्तिर्विशेषतः ।
आङ्ग्लभूम्यां केन्द्रितास्ति प्रस्तुते समरक्षणे ॥ १२६ ॥

प्रतिषेधोऽपि यात्रायास्तत्कारणसमुत्थितः ।
मयैवमपि युष्माकं विज्ञप्तिः प्रेषिताञ्जसा ॥ १२७ ॥

समस्थानां विचारार्थं देशकालविमर्शिनाम् ।
द्वाड्स्वर्योत्तरं भाति स्वरूपस्थितिवर्णनम् ॥ १२८ ॥

सार्वभौमस्वीकृताया राजनीतेर्यथार्थतः ।
युक्तायुक्तत्वदृष्ट्या तद् दोषास्पदमसंशयम् ॥ १२९ ॥

एकस्मिन्नेव काले वै निरुद्धा सा सरोजिनी ।
जिब्राल्टरे निरुद्धोऽभूज् जोसेफो जॉर्जपूर्वगः ॥ १३० ॥

तिलकः प्रेषयामास संदेशमेकमात्मनः ।
प्रयाणसमयात् पूर्वमुपराजाय तद्दिने ॥ १३१ ॥

महामाशा सनिर्बन्धा वानिर्बन्धा प्रदीयताम् ।
येन केनापि मार्गेण गन्तुमाङ्ग्लभुवं प्रति ॥ १३२ ॥

सत्वरं दीयतामार्य यथावसरमुत्तरम् ।
सप्रश्रयं प्रार्थयेऽहं यथेच्छसि तथा कुरु ॥ १३३ ॥

तिलकप्रमुखाः सर्वे भारतागतबान्धवाः ।
गन्तुं प्रतस्थिरे भूमिं स्वर्गादपि गरीयसीम् ॥ १३४ ॥

विघ्ने कार्यविनाशके प्रतिपदं ह्यागुस्थिते नूतने
निर्द्वन्द्वस्तिलकः स्थिरोऽस्ति मरुतां क्षोभेषु मेरुर्यथा ।
दीपस्तम्भ इवोत्प्लुतेऽपि जलधौ मार्गं च संदर्शयं-
स्तिष्ठत्येव पदस्थिरो विमलदृग् दिङ्मूढकैवर्तकान् ॥ १३५ ॥

इति माधवविरचिते श्रीतिलकयशोऽर्णवे यात्राध्यवसायनामा एकषष्टितरङ्गः ।

## द्विषष्टितमस्तरङ्गः

बालश्च बालसुहृदो लङ्कां त्यक्त्वा प्रतस्थिरे ।
सस्नेहं च नमस्कृत्य कोलंबोमित्रमण्डलम् ॥ १ ॥

गन्तुं स्वदेशं निर्णेतुं प्रयाणस्यान्ययोजनाम् ।
आङ्ग्लभूम्यै चिरोलस्य दोषित्वं न्यायमन्दिरे ॥ २ ॥

सप्रमाणं साधयितुं कर्तुं सिद्ध्यानुपङ्क्तिकम् ।
लंदनस्याधिवक्तारं साधनं परिपन्थिनः ॥ ३ ॥

पराजयार्थं वादेऽस्मिन् दातुं च बलवत्तरम् ।
सहकार्याय नेयस्य वाक्कीलस्य च भारतात् ॥ ४ ॥

निर्धारणं व्यवस्थां च कर्तुं संयत्नकर्मणाम् ।
न्यायालयप्रविष्टेन विवादविषयेण च ॥ ५ ॥

ग्रन्थेऽस्मिन् वर्णितं पूर्वं वृत्तं संगरसंसदोः ।
देहल्यां मुम्बईपुर्यां जातयोः शासनाज्ञया ॥ ६ ॥

धूर्त्तिगतेनादरेण जनानां तिलकं प्रति ।
संघोद्योगप्रसारेण समुत्पन्ना मनोव्यथा ॥ ७ ॥

श्रुत्वा तिलकनामैव बभूवुरधिकारिणः ।
गजा इव मदोन्मत्ताः सर्वथैव निरङ्कुशाः ॥ ८ ॥

शासकाश्चिन्तयामासुः कथं भाव्यमतः परम् ।
स्वराज्येच्छां वर्धयन्त्यद्वितीया तिलकस्य वाक् ॥ ९ ॥

सभासंचारयोस्तस्य स्वातन्त्र्यस्य नियन्त्रणम् ।
कर्तुमैच्छन् शासनेशाः लोकराज्यविरोधिनः ॥ १० ॥

प्रैषयंस्ते शासनस्य निम्नार्थप्रतिपादकम् ।
तिलकाय दुराराध्याः पत्रं सत्ताधिकारिणः ॥ ११ ॥

आज्ञां विना शासनस्य न गन्तव्यं गृहाद् बहिः ।
दातव्यं न च व्याख्यानं विना शासनसंमतिम् ॥ १२ ॥

व्यवहारः शासनस्य लोकक्षोभप्रदो महान् ।
कालेऽस्मिन् भीषणे घोरे तिलकेन सहाभवत् ॥ १३ ॥

कृतापमानशल्येन दुःखिता देशबान्धवाः ।
मन्त्रौषधीरुद्धवीर्या नागा इव विषोल्बणाः ॥ १४ ॥

बुद्धिमन्तो निःस्पृहा ये प्रायः साहसपराङ्मुखाः ।
अनुकूलाः शासनस्य भृत्यास्तद्द्रव्यपोषिताः ॥ १५ ॥

मध्यप्रान्तप्रदेशस्य सूत्रधारः पुरातनः ।
स्लोकाकः कार्यवाहाणां मुख्यः प्रकृतिदारुणः ॥ १६ ॥

सहकार्यस्याभिलाषी शासनप्रेरितोद्यमे ।
आह्वये विजयप्राप्त्यै मुंजेप्रभृतिसज्जनान् ॥ १७ ॥

आजुहाव विचारार्थं सादरं कार्यमन्दिरे ।
आलोचनाय युद्धस्य विद्यमानपरिस्थितेः ॥ १८ ॥

पदरक्ष्योपपन्ने मां पत्रे फणिपुरीं प्रति ।
उपस्थित्यै सभास्थाने प्रेषितं तेन सत्वरम् ॥ १९ ॥

मुंजेप्रभृतिमित्राणां जातं तत्रैव दर्शनम् ।
तेषामखिलमित्राणां नामानि कथयाम्यहम् ॥ २० ॥

उधोजी नीलकण्ठाख्यो द्वितीयोऽळेकरः सुधीः ।
तृतीयो भास्करस्तत्र पण्डितः समवर्तन ॥ २१ ॥

चतुर्थोऽत्र माधवाख्यः पञ्चमस्तत्पुरःस्थितः ।
मुंजेवंश्यो बालकृष्णो नेत्ररोगचिकित्सकः ॥ २२ ॥

स्तोकाकाभिमुखाः सर्वे वयं पञ्च जनाः स्थिताः ।
तेषां मध्यासनासीनो मुंजे नेत्रचिकित्सकः ॥ २३ ॥

मुखरो राष्ट्रपक्षीयमण्डलस्याभवत् तदा ।
न केवलं नागपुर्यां त्वखिले मध्यभारते ॥ २४ ॥

कासग्रेव्हाभिधस्तत्र स्लोकाकस्य सहायकः ।
सदस्यः सनदीभृत्यसंघस्यासीत् पुरातनः ॥ २५ ॥

कथितं तेन युद्धस्य समारब्धस्य जर्मनैः ।
भारताक्रमणं चैकमुद्दिष्टं कैसरेप्सितम् ॥ २६ ॥

अंकारानगराद्वह्निमार्गस्य च विनिर्मितिम् ।
हिन्दुस्थानस्य वायव्यसीमाप्रान्तगिरिस्पृशः ॥ २७ ॥

कर्तुं वै योजना सिद्धा वह्निमार्गविदां करे ।
रूपमेतत् संकटस्य ज्ञातव्यं हिन्द्वासिभिः ॥ २८ ॥

संरक्षणं स्वदेशस्य परचक्रादुपस्थितात् ।
कर्तव्यं देशभक्तानां घातातीतमसंशयम् ॥ २९ ॥

अस्मत्पक्षस्य नेतारं स्लोकाकोऽसूचयत् ततः ।
मुंजेऽभिधं बालकृष्णमारब्धुं निजभाषणम् ॥ ३० ॥

कर्तव्यं युद्धसाहाय्यं सर्वैर्भारतसेवकैः ।
इत्युक्तं तत्समीचीनं मुंजे प्रथममुक्तवान् ॥ ३१ ॥

तदर्थमेव सर्वेषां यत्नस्यास्ति प्रयोजनम् ।
वयं सर्वेऽपि सिद्धाः स्मः सहकार्याय सर्वदा ॥ ३२ ॥

प्रशासनस्य त्वेतस्य विजयादुन्नतिर्भवेत् ।
भारतस्येति विश्वासो जनहृत्सु कथं भवेत् ॥ ३३ ॥

अन्यथा भारतीयानां हानिरेव भवेदिति ।
एकस्मिन् विहितं पत्रे सप्रमाणं निवेदनम् ॥ ३४ ॥

आवश्यकं मतेऽस्माकं शासनस्यास्ति संप्रति ।
निर्दिष्टरूपाया घोषणायाः प्रकाशनम् ॥ ३५ ॥

संप्रदानं स्वराज्यस्य भारतायाधिशासनम् ।
करोत्येषाल्पकालेन घोषणा संशयातिगा ॥ ३६ ॥

अब्दात् पञ्चदशात् पूर्वं युद्धान्ताल्लोकशासनम् ।
भवेदुभयसंमत्या शममार्गेण नान्यथा ॥ ३७ ॥

युद्धकालेऽपि दातव्या भारताय हि योग्यता ।
अधिकारपदप्राप्तेस्त्रिषु सेनादलेष्वपि ॥ ३८ ॥

प्रदर्शितं हैकमत्यं बालकृष्णस्य चोदितभिः ।
उधोज्यश्लेकराभ्यां च भास्करेण तथा मया ॥ ३९ ॥

परस्परविचाराणां चर्चास्यानन्तरं कृता ।
स्टैफोर्डोऽदाच्च सर्वेभ्यो धन्यवादान् ततो वयम् ॥ ४० ॥

इत्युत्तरं बहिर्याता हस्तान्दोलनपूर्वकम् ।
विचारमन्थनात् किंचिद् निष्पन्नं नैव शासकैः ॥ ४१ ॥

अनन्तरं पत्रमेकं शासनेन प्रकाशितम् ।
दोषस्तु पत्रके दृष्टो मित्रैः कणिपुरस्थितैः ॥ ४२ ॥

समाकृष्टा तत्र दृष्टिः शासनस्य च तत्क्षणम् ।
निर्दोषं पत्रमन्यत् तैः शासकैः संप्रकाशितम् ॥ ४३ ॥

विचाराणां विनिमयाद् न दृष्टं तैः प्रयोजनम् ।
वर्धां मध्यप्रदेशे ये समाप्ता अधिवेशनम् ॥ ४४ ॥

प्रवृत्तिः प्रतिकूलाभूत् शासनस्याधिकारिणाम् ।
अधिकारपदप्राप्त्यै भारतीयजनं प्रति ॥ ४५ ॥

विचाराणां विनिमये विपादे परिपत्स्थले।
सक्रियानुमतिप्राप्त्या अङ्कितत्वान्तघोषणा ॥ ४८ ॥

दूरस्थे चान्तिके काले स्यात् कदाचन सूचना।
न कृता येन केनापि भारतस्याधिकारिणा ॥ ४९ ॥

उत्कृष्टं तच्च मन्तव्यं विद्यते यच्च संप्रति।
विचारस्य न कालोऽयमुत्कर्षस्य च भाविनः ॥ ५० ॥

एवं दृढं मतं तेषां कठिनं काष्ठदण्डवत्।
उद्वेगकरमस्निग्धं सत्तकैर्यधिरं सदा ॥ ५१ ॥

अमेरिकायाः साहेन जाता युद्धपरिस्थितिः।
जयाशादाङ्ग्लराष्ट्राय तन्मित्रेभ्यस्तथैव च ॥ ५२ ॥

औद्धत्यवर्धिनी सासीदल्पबुद्ध्यधिकारिणाम्।
किंतु शासनमुख्यानां विचारस्य प्रवर्तिनी ॥ ५३ ॥

सार्वभौमाङ्क्षितानां वै संबन्धस्य समीक्षणम्।
अभूदावश्यकं तेषां चर्चाया विल्सनादिभिः ॥ ५४ ॥

आकाङ्क्षा भारतीयानां स्वातन्त्र्यस्यैव सर्वथा।
न्याय्येति च महत् तत्त्वं स्वयंनिर्णयसंज्ञकम् ॥ ५५ ॥

क्षितिजे राजनीत्या यद् मित्रराष्ट्रैर्नवोदितम्।
घोषितं चाल्पराष्ट्राणां स्वातन्त्र्यं युद्धकारणम् ॥ ५६ ॥

दारुणः कलहश्चित्ते तेषां स्वार्थपरार्थयोः।
येषां च हस्तयोः सूत्रं लोकरक्षाक्षयावहम् ॥ ५७ ॥

तिलकाय जुलैमासे शासनेन निवेदितम्।
भवद्गमनमिग्लंडं सार्वभौमस्य संमतम् ॥ ५८ ॥

आन्दोलनं न कर्तव्यं राजकीयं कथंचन।
अयं तेन समादिष्टो निर्बन्धः परिपाल्यताम् ॥ ५९ ॥

अनुज्ञा भारताद् नेतुमाङ्ग्लभूमिं सखित्रयीम् ।
विधिज्ञमेकं मित्रे द्वे प्रवासे भवता सह ॥ ६० ॥

मांटेगस्येतिवृत्तस्य प्रकाशनमपेक्षितम् ।
सप्तेंबरे च युगपद् दिल्लीलंदनयोरभूत् ॥ ६१ ॥

मतभेदः समुद्भूदितिवृत्तप्रकाशनात् ।
विघ्नमैषयस्य भङ्गस्याविरासीत् स्थापितस्य च ॥ ६२ ॥

राष्ट्रयादिषु लोकेषु निर्मितं गौतमीतटे ।
यत्नेन तिलकेनैक्यं सभाया अधिवेशने ॥ ६३ ॥

पठनादितिवृत्तस्य प्रोदतिष्ठंस्तिलाञ्जलिम् ।
उपतैक्याय तु नेमस्ताः प्रदातुं कृतनिश्चयाः ॥ ६४ ॥

नेमस्तप्रमुखैः कैश्चित् स्वतन्त्रमधिवेशनम् ।
निजानुयायिलोकानां मुम्बापुर्यां विनिश्चितम् ॥ ६५ ॥

विचारायेतिवृत्तस्य स्थिरायास्टोबरे तदा ।
नेमस्तैस्तैर्हस्तपत्रैर्घोषितं सर्वभारते ॥ ६६ ॥

महासभासूत्रधारैरष्टाविंशे दिने शुभे ।
दशमे मासि मुम्बय्यां भविष्यत्यधिवेशनम् ॥ ६७ ॥

विशेषमितिवृत्तस्य चर्चायै निर्णयाय च ।
लोकप्रतिनिधीनां च राष्ट्रसंमतसभासदाम् ॥ ६८ ॥

विशेषायाः सभायास्तु द्विधा घोषणयाभवत् ।
नेमस्तानां समाजोऽपि राष्ट्रधर्माभिमानिनाम् ॥ ६९ ॥

तेषां मध्येऽपि यद्य आसन् राष्ट्रैक्यवादिनः ।
अब्रुवंस्ते न योग्यास्ति सभायामनुपस्थितिः ॥ ७० ॥

तदा महासभायास्तु यद्धिक्कारः पुरस्कृतः ।
पुण्यपुर्यां च मुम्बय्यां नेमस्तदलनायकैः ॥ ७१ ॥

निर्णीतस्य च सिद्ध्यर्थं प्रयतन्तां सदा जनाः ।
फलस्यावाप्तिपर्यन्तं सोत्साहमकुतोभयाः ॥ ८४ ॥

मुख्यप्रस्तावनिर्मित्यै जाता चर्चा दिनद्वयम् ।
वि०समित्याः सदस्यानां साङ्गोपाङ्गा च मार्मिकी ॥ ८५ ॥

केचिज्जाता निराशास्तु सूचनानामनादरात् ।
वि०समित्यां तदा वादे नेमस्ताः प्रौढयुक्तयः ॥ ८६ ॥

तान् सदस्यान् समुद्दिश्य तिलको यत् तदावदत् ।
सविनोदमभूत् तद् वै वादस्य विषयो महान् ॥ ८७ ॥

अनुकूलमताभावे सूचनानामनादरः ।
अस्ति लौकिकसंस्थानां व्यवहारः सुसंमतः ॥ ८८ ॥

विवादे कोऽपि जेतुं न बालान् शक्नोति पूरुषः ।
अजेयास्त्रं भवेत् तेषां बालानां रोदनं बलम् ॥ ८९ ॥

शर्मादयोऽपि धीमन्तः सदस्याश्चुक्षुभुस्तदा ।
बालाय वाक्प्रयोगात् तेऽब्रुवन् वै गर्हिता वयम् ॥ ९० ॥

तिलकस्य प्रयोगोऽयमस्ति किं शिष्टसंमतः ।
इति वादः कृतस्तत्र मीमांसाशास्त्रकोविदैः ॥ ९१ ॥

अध्यक्षः प्राह वै वादसमारोपचिकीर्षया ।
श्रुतं सहर्षमस्माभिर्भवद्भिः प्रतिपादितम् ॥ ९२ ॥

विद्वद्भिः सप्रमाणं यद् न दृष्टं वादकारणम् ।
स्वल्पमप्यत्र निर्णेतुं वादस्यास्यात्यये मया ॥ ९३ ॥

यूयं बाला उपाधेतत् तिलकोऽस्मिन् सभागृहे ।
कारणं नैव दोषस्य मम तु तोषस्य मन्मते ॥ ९४ ॥

प्राह्वयत् तिलको यान् वै बालानत्र स्वभाषणे ।
अहो भाग्यं हि मम मेषां प्राप्तत्वात् तदुपस्थताम् ॥ ९५ ॥

यत्साहचर्यपूतत्वात् साक्षात् स्वर्गायते मही ।
को न वाञ्छेदपत्यत्वं तस्य लोके महात्मनः ॥ ९६ ॥

अभवद् शान्तता तस्य भाषणान्ते सभागृहे ।
जातं तदुत्तरं कार्यं सर्वसंतोषदायकम् ॥ ९७ ॥

मांटेगप्रोक्तमार्गस्य गुणदोषविवेचकः ।
सभ्यानां भारतीयानां निर्णयस्य च दर्शकः ॥ ९८ ॥

प्रस्तावो मालवीयेन निहितः संसदः पुरः ।
संमत्यै सर्वसभ्यानां सविशेषाधिवेशने ॥ ९९ ॥

चिन्तामणिरिति सभ्यं । एतेन प्राक्तनं पद्यं क्षेपकं ॥

विद्वांश्च तिलकः पालो मुख्याश्चान्यसभासदः ।
चक्रुः समर्थनं सर्वे प्रस्तावस्य स्वभाषणैः ॥ १०० ॥

रौलेटाख्येतिवृत्तस्य निषेधः सभया कृतः ।
व्यक्तिस्वातन्त्र्यसंकोचो राष्ट्रस्यैवापकारकः ॥ १०१ ॥

संप्रेष्यमाङ्ग्लदेशे वै भारताद् शिष्टमण्डलम् ।
राष्ट्रीयसंसदाकाङ्क्षाप्रचाराय विशेषतः ॥ १०२ ॥

शुभचिन्तनसंदेशाः प्रेषिता राष्ट्रनेतृभिः ।
घोषप्रभृतिभिस्तैस्तैः सभाध्यक्षैः पुरातनैः ॥ १०३ ॥

अनादृत्य तु याच्छ्रां महाराष्ट्रसभासदः ।
प्राप्ताः सभास्थलं केचिद् नेमस्तमतवादिनः ॥ १०४ ॥

सामल्दासः सुप्रसिद्धो गुर्जरो राष्ट्रसेवकः ।
भाषणे कथयामास समास्थाने पुनः पुनः ॥ १०५ ॥

नेमस्तदलमिथाणामपमानोऽधिवेशने ।
भवेदिति कुदाक्कापि निराधारैव सर्वथा ॥ १०६ ॥

शंसनीया यदाऽप्राप्तिरिति राष्ट्रसमापतिः ।
हसन्पूर्वं इमामाख्यः महास्यवदनोऽब्रवीत् ॥ १०७ ॥

समारोपे कार्यकर्तॄनखिलानभिनन्द्य वै ।
भवन्तु सुस्थिराः सर्वे स्वराज्यप्राप्तिनिश्चये ॥ १०८ ॥

दत्त्वाऽध्यक्षपदस्थाय धन्यवादान् समार्पयत् ।
मालां च स्वागताध्यक्षः समारोहविसर्जनम् ॥ १०९ ॥

संजातं जयघोषेषु राष्ट्रगीताद्नन्तरम् ।
सोत्साहं च जनाः सर्वे न्यवर्तन्त गृहान् प्रति ॥ ११० ॥

नेतारो वङ्गदेशस्य वान्ध्रतामिलदेशयोः ।
समागत्य पुनस्त्वस्मान् पुण्यग्रामनिवासिनः ॥ १११ ॥

एवं निमन्त्रिताः श्रेष्ठा नरसिंहेन सादरम् ।
समायाता दर्शनार्थं तिलकस्य पुरीं प्रति ॥ ११२ ॥

घोषो ज्ञानवयोज्येष्ठः पत्रिकालेखकः सुधीः ।
पालो वक्ता तत्त्ववेत्ता लाहिरीचित्तरञ्जनौ ॥ ११३ ॥

अधिवक्ता व्योमकेशो वसन्तस्तरुणप्रियः ।
चिदम्बरपिले कृष्णस्वामिशर्मेति विश्रुतः ॥ ११४ ॥

प्राघूर्णका अतिश्रेष्ठा आहत्य च निमन्त्रणम् ।
आयाता दर्शनं कर्तुं तिलकस्य पुरीं प्रति ॥ ११५ ॥

पूतां तिलकवासेन विख्यातां विक्रमेण च ।
महाराष्ट्रीयवीराणां ब्रह्मक्षेत्रमहौजसाम् ॥ ११६ ॥

ज्ञानदेवतुकादीनां वीणावाद्यनिनादिताम् ।
विभूषितां च विद्वद्भिरर्वाचीनपुरातनैः ॥ ११७ ॥

स्वागतं देशभक्तानां चक्रिरे पुण्यवासिनः ।
व्याख्यानैस्तेऽपि लोकांश्च ज्ञानामृतमपाययन् ॥ ११८ ॥

माधवेन स्थापितायाः सभायाश्च महात्मनः ।
दर्शनाय गताः सर्वे मान्या अतिथयस्ततः ॥ ११९ ॥

संमानितास्तदा सर्वे पुण्यग्रामनिवासिभिः ।
संस्थायाः सार्धजन्यास्तैर्मन्दिरे चैतिहासिके ॥ १२० ॥

उषित्वा सज्जनाः सर्वे त्रिरात्रं तिलकालये ।
निजस्थानं गन्तुकामास्तत्संमत्या प्रतस्थिरे ॥ १२१ ॥

ऊनविंशे दिने मासि नवमे सहसोत्थितः ।
आङ्ग्लदेशप्रयाणाय प्रतस्थे पुण्यपत्तनात् ॥ १२२ ॥

भृत्येन सहितो बालः समित्रः सह मन्त्रिणा ।
अगाद् मुम्बापुरीं तत्र प्राविशज्जलवाहिनीम् ॥ १२३ ॥

वासुदेवः सुहृद्वर्यः सूद्रो गणपतिस्तथा ।
रघुनाथो विधिज्ञश्च करंदीकरवंशजः ॥ १२४ ॥

प्रयत्नदा जना एते तिलकस्य समागमे ।
आसन् लंदनयात्रायां तिलकस्नेहलोलुपाः ॥ १२५ ॥

आष्टोत्तरे दिने विंशे लंडने तिलकोऽविशत् ।
निर्विघ्नस्तत्प्रवासोऽभूत् कुशलाः सहचारिणः ॥ १२६ ॥

संदेशोऽधिगतस्तस्मात् केसरीपत्रचालकैः ।
स्थापितः सर्वलोकस्य ज्ञानाय फलके बहिः ॥ १२७ ॥

महासभायाः प्रमुखैः कार्यकारिसभाजनैः ।
दिल्लीराष्ट्रसभाध्यक्षस्तिलकश्चेति घोषितम् ॥ १२८ ॥

तन्नियुक्तिरियं जाता मतैक्येन सभासदाम् ।
सानन्दं जगृहुः सर्वे लोकास्तां भारतेऽखिले ॥ १२९ ॥

संदेशः स च संप्राप्त इङ्गले रविपत्तने ।
तिलकेनोत्तरं दत्तं साभारं खेदसंयुतम् ॥ १३० ॥

आध्यक्ष्यमक्षमः कर्तुं व्यग्रत्वादन्यकर्मसु ।
उपकारो महानेव कृतः खलु ममोपरि ॥ १३१ ॥

खलजनकपटैः प्रपीडितोऽपि
स्ववचनपरिपालने रतो यः ।
भरतजनसुखैकधामकर्मा
तिलक इव न कोऽपि सद्व्रतस्थः ॥ १३२ ॥

गङ्गानिर्मलतीरपूतचरितः श्रीबालगङ्गाधरो
मूर्तिर्भारतसंस्कृतेर्भरतभूभालोत्तमाभूषणम् ।
दौत्यं स्वास्थ्यलयाय भारतभुवः कर्तुं समित्रो गतः
फेन्द्रं लंदनमाङ्ग्लदेशहृदयं साम्राज्यवादस्य च ॥ १३३ ॥

इति माधवविरचिते श्रीतिलकयशोऽर्णवे आङ्ग्लदेशयात्राप्रयाणनामा
द्विषष्टितमस्तरङ्गः ।

# त्रिषष्टितमस्तरङ्गः

अनन्तकोटिग्रहगोलकेशो
विभर्ति यो शासनदण्डमेकम् ।
इशः परं ज्ञानमयाक्षिगम्यं
तमादिदेवं शरणं प्रपद्ये ॥ १ ॥

धार्धक्यजाड्योपहता प्रतीयते
बुद्धिर्मदीयेति करोमि याचनाम् ।
ग्रन्थस्य भूयात् परिपूर्णता मम
गङ्गाधरापत्यकथामहोदधेः ॥ २ ॥

अतो मतिं देहि सुशब्दनिर्णये
काव्यार्थबोधप्रतिपत्तये मम ।
कृतिश्च पूर्णास्तु तदाश्रयेण मे
संतोषदेयं तिलकस्तवात्मिका ॥ ३ ॥

इंग्लंदगमने हेतुर्द्विविधस्तिलकोऽब्रवीत् ।
मिथ्यारोपप्रतीकारः स्वातन्त्र्याप्तिसमुद्यमः ॥ ४ ॥

प्रथमोऽपि भवेदेव द्वितीयस्य समर्थकः ।
आरब्धौ युगपत् तेन यत्नाविंग्लंदभूतले ॥ ५ ॥

तिलको भारते जातस्तदा श्रेष्ठतमोऽग्रणीः ।
पाश्चात्यानां सुविज्ञातमध्यक्षपदनिर्णयात् ॥ ६ ॥

महासभाधुरीणानां सर्वसंमतनिर्णयम् ।
विज्ञाय भारतात् प्राप्तमाङ्ग्लपत्राणि चुक्षुभुः ॥ ७ ॥

लोकेषु भारतीयेषु तिलकस्य महोन्नतम् ।
पदं हिमगिरेः शृङ्गं कैलासमिव पावनम् ॥ ८ ॥

प्रतिपक्षिप्रतिष्ठाया उत्कर्षोऽसह्यवेदनः ।
कलिकदमलचित्तानां क्षुद्राणां परिपन्थिनाम् ॥ ९ ॥

देवायत्ताङ्ग्लसत्तेयं हिन्दभूदयकारिणी ।
सभासंस्थापकाः पूर्वे निष्ठया तेऽब्रुवन् खलु ॥ १० ॥

लुप्तः पक्षः स्थापकानां सभायां तिलकोदयात् ।
अतिखिन्नाश्च संतप्ता नेमस्ताश्चाधिकारिणः ॥ ११ ॥

तिलकागमने हेतुर्मुख्यतस्त्वनिवेदनम् ।
लोकेभ्यश्चाङ्ग्लदेशस्य मन्त्रिभ्यो हिन्दहृद्गतम् ॥ १२ ॥

लुप्ता सुधारणाकाङ्क्षा स्वातन्त्र्याकाङ्क्षि भारतम् ।
महासभा मुखं तस्य नगण्या इतरे जनाः ॥ १३ ॥

निःसृतं यद् मुखात् तस्य कर्तव्यमधिकारिभिः ।
आङ्ग्लीयैर्भारतीयैश्च जनसंतोषहेतवे ॥ १४ ॥

महासभा भारतस्य गृहद्वयमयी सभा ।
इंग्लंदस्य विचारार्थं क्रियतां मेलनं तयोः ॥ १५ ॥

संभवेद् निर्णयः पथ्यो विचारेणोभयोस्तयोः ।
योग्यप्रतिनिधीनां वै समस्यानां विशेषतः ॥ १६ ॥

तद्वद् युद्धान्तकाले च लघुराष्ट्रसुरक्षणम् ।
निर्माणं नवराष्ट्राणां समस्याश्चानुषङ्गिकाः ॥ १७ ॥

उपस्थास्ते तदर्थं न सर्वराष्ट्राभिसंमना ।
परिषद्योजना काचिद् भाव्या भाग्यवशाद् यदि ॥ १८ ॥

तत्र संगतपक्षेषु स्वयंनिर्णयपोषकः ।
पक्षो यदि भवेत् तेन संबन्धः स्थाप्यतां तदा ॥ १९ ॥

स्वदृष्टिं व्यापिनीं कृत्वा राष्ट्रसंघस्य वै पुरः ।
नेयः प्रश्नो भारतस्य स्वातन्त्र्यप्राप्तिहेतुकः ॥ २० ॥

यात्रा संकल्पिता तेन विविधै राष्ट्रहेतुभिः ।
तेषां च स्थूलनिर्देशः श्लोकेष्विह मया कृतः ॥ २१ ॥

कथितं न प्रवासस्य वृत्तान्तं विस्तरेण वै ।
जलयानेनाङ्ग्लभूम्यां गताध्यायकथानके ॥ २२ ॥

उपलब्धं समग्रं तत् लिखितं नामजोशिना ।
तिलकाख्यायिकाग्रन्थे स्नेहिना सहचारिणा ॥ २३ ॥

प्रकाशितं च तत् सर्वं विख्याते तिलकायने ।
बोधार्थं भारतीयानां नृसिंहेन महाधिया ॥ २४ ॥

त्रिविधानां स्वकार्याणां सौकर्याय नियोजिता ।
तिलकेन स्वामिनिष्ठा कुशला मन्त्रिणां त्रयी ॥ २५ ॥

न्यायालयप्रविष्टस्य रघुनाथः कुशाग्रधीः ।
तिलकस्य सुहृद्वर्यः कर्मणः सचिवो मतः ॥ २६ ॥

संप्राप्तानुभवाद् येन लोककार्येषु दक्षता ।
धूर्ताग्रणीर्वासुदेवो द्वितीयः सचिवोऽभवत् ॥ २७ ॥

तिलकस्य स्वास्थ्यमन्त्री स्नानपानाशनादिषु ।
सावधानः समीपस्थो गणेशो वल्लवोत्तमः ॥ २८ ॥

नामजोशीकुले जातः कृतज्ञः शीलवान् सुधीः ।
सेवाव्रतः सदा मेने तिलकं पुरुषोत्तमम् ॥ २९ ॥

तेन स्वयं प्रवासस्य काले यच्च विलोकितम् ।
जलयाने निवासस्य स्थाने या तद् निवेदितम् ॥ ३० ॥

संक्षेपतो वर्णयेऽहं प्रामाणिकमनुत्तमम् ।
वर्णनं लिखितं तेन सुबोधं तथ्यदर्शकम् ॥ ३१ ॥

ईस्वंद्वयाब्दसिद्ध्यर्थं तिलकस्यान्दोलनोद्यमः ।
नीतो विफलतां नीचैर्लङ्कायां विघ्नकारिभिः ॥ ३२ ॥

शतविघ्नाभिभूतोऽपि धीरः स्वाङ्गीकृतं व्रतम् ।
पालयत्येव सोत्साहं कृत्वा यत्नं पुनः पुनः ॥ ३३ ॥

नीता दीर्घप्रयत्नेन दुराराध्याधिकारिणः ।
ब्रिटानियाप्रयाणार्थं तिलकेनानुकूलताम् ॥ ३४ ॥

कष्टैः प्राप्तं यानपत्रं नवमे मासि शासनात् ।
गन्तुं स्वकार्यसिद्ध्यर्थं तिलकेन ब्रिटानियाम् ॥ ३५ ॥

युद्धकाले समुद्रस्य प्रवासो विषमाकुलः ।
सलिलान्तर्वाहिनीनां प्राचुर्याज् जलवर्त्मसु ॥ ३६ ॥

बहवः स्फोटकास्तद्वद् निहिताः सागरोदरे ।
रिपुनौकाविनाशाय सिन्धुतीरस्थवारिषु ॥ ३७ ॥

समुद्भूतो ज्वरः प्रायस्त्रिदिनव्याधिकारकः ।
युरोपाशीयदेशानां जलस्थलनिवासिनाम् ॥ ३८ ॥

तिलकः प्राविशद् नौकां पयोधिशे दिने किल ।
नवमे मासि मुम्बय्यामाङ्ग्लदेशाभिगामिनीम् ॥ ३९ ॥

विनाशिकानामाघातात् सागरे मज्जिता इति ।
नौका वै मित्रराष्ट्राणां वार्ता लोकभयप्रदाः ॥ ४० ॥

मुहुः प्रकाशिता वृत्तपत्रेषु पठनाज् जनाः ।
बभूवुः संशयग्रस्ता जीवितेष्वाप्तयात्रिणाम् ॥ ४१ ॥

भीतिर्लोकहृदिस्थेयं तिलकाय मयैकदा ।
कथिता तत्क्षणं प्राह मेघगम्भीरया गिरा ॥ ४२ ॥

भाग्यं प्रियस्य राष्ट्रस्य स्वकरेण यदाम्यहम् ।
देवर्षिचिन्तुगुप्तस्य कुतो वै योगिनो भयम् ॥ ४३ ॥

वृथा चिन्ता न कर्तव्या विषये मेऽनुयायिभिः ।
पतितव्यं निर्भयं तैर्भारतोद्धारदीक्षितैः ॥ ४४ ॥

श्रुतिस्मृतिपुराणेषु घोषितं यद् मुहुर्मुहुः ।
करोमि भारतोद्धारं न भेतव्यं जनैर्मम ॥ ४५ ॥

रतानां भारतोद्धारे रक्षको जगदीश्वरः ।
सुदर्शनं भ्रमत्येव भक्तविघ्नान्तकं चिरम् ॥ ४६ ॥

व्रजामि दृढविश्वासो तत्त्वेऽस्मिन्नाङ्ग्लवासिनाम् ।
देशं मम भवेद् यात्रा निर्विघ्ना च सुखप्रदा ॥ ४७ ॥

श्रुत्वोक्तिं मेघगम्भीरां मोहमूढप्रबोधिनीम् ।
भिन्नहृद्ग्रन्थयः सर्वे जाताः संछिन्नसंशयाः ॥ ४८ ॥

प्रायोऽविदितमेवासीत् प्रयाणसमयस्तदा ।
पुणेस्थानां बहिःस्थानां तिलकस्याङ्ग्लकां प्रति ॥ ४९ ॥

वृतानां पञ्चशिष्टानां भारते तु त्रयः स्थिताः ।
रघुनाथद्वितीयोऽगाद् बाल इंग्लंदमेदिनीम् ॥ ५० ॥

अवशिष्टास्त्रयः शिष्टमण्डलात् पूर्वनिश्चितात् ।
पालयायू च खापर्डे केळकरश्च जनप्रियः ॥ ५१ ॥

तैर्विना तिलको यातः कथं वै ब्रुवतो जनान् ।
विरोधिनः समाधातुं क्लृप्तिस्तेन समाश्रिता ॥ ५२ ॥

तिलकस्याङ्ग्लयात्राया रुद्धा अधिकारिणः ।
न्यायकार्यार्थमिंग्लंदे विहिता तदुपस्थितिः ॥ ५३ ॥

तत्कारणं पुरस्कृत्य यानार्थं याचना कृता ।
सार्वभौमप्रतिनिधेः संमता साध्यसिद्धितः ॥ ५४ ॥

स निर्बन्धस्तदैवोक्तो बालस्वातन्त्र्यबाधकः ।
न कर्तव्यो राजकीयः प्रचारस्तु कदाचन ॥ ५५ ॥

व्यपतीश्शुं प्रयाणेऽस्मिन् राजकीयेप्सितं न मे ।
सदस्यास्तेन नीता न मण्डलस्यात्मना सह ॥ ५६ ॥

समारम्भः प्रयाणस्य न कर्तव्यो जनैरिति ।
गोपायितं द्विनं तस्य लोकमान्यैः सहेतुकम् ॥ ५७ ॥

स्वीकृतो यदि निर्बन्ध इह सर्वाधिकारिणः ।
तस्य प्रयाणकाले नु चिन्तितं मोक्षसाधनम् ॥ ५८ ॥

निर्बन्धभङ्गदोषस्य चिह्नमप्यधिकारिणा ।
नैवाप्तव्यं प्रवासान्तपर्यन्तमिति निश्चितम् ॥ ५९ ॥

तिलकेन दृढं चित्ते कृतं पूर्वनियोजनम् ।
व्यसनस्यासंभवाय यास्त्संयमनपूर्वकम् ॥ ६० ॥

तप्तदुग्धप्रदग्धौष्ठस्तक्रं पिबति शीतलम् ।
कृत्वा सुखानिलैः पूर्वं तद्वत् तिलकवर्तनम् ॥ ६१ ॥

इत्याहुः सज्जनाः केचिदज्ञानादेव मन्मते ।
अन्तरायोत्सुकाः शश्वद् द्वेषात् तस्याधिकारिणः ॥ ६२ ॥

आङ्ग्लाधिकारिदौरात्म्यं परां काष्ठां गतं किल ।
इति लङ्कानिवासेऽपि प्रतीतमनुयायिभिः ॥ ६३ ॥

संदर्शिता दूरदृष्टिस्तेनात्यन्तोचिताभवत् ।
आङ्ग्लदेशप्रयाणस्य द्वितीये समये खलु ॥ ६४ ॥

न स्वीकृतं पदं लोकमान्यै राष्ट्रसभापतेः ।
अभ्यर्थितैः सभाधुर्यैर्देहलीनगरस्थितैः ॥ ६५ ॥

संदेशः प्रेषितस्तेन पत्तनादेडनाभिधात् ।
सखेदं कथितं तस्मिंस्तदस्वीकृतिकारणम् ॥ ६६ ॥

पूर्वं संक्षेपतो ग्रन्थे वृत्तं तत् कथितं मया ।
तदुत्तरकथापूर्त्यै पुनरुक्तिरिहाभवत् ॥ ६७ ॥

महासभाधुरीणानामाध्यक्ष्याय गवेषणम् ।
पुरुषस्यातियोग्यस्य बभूवावश्यकं ततः ॥ ६८ ॥

देव्या विमांटया नाम मालवीयस्य सूचितम् ।
टागोरनेहरूयोषा गणेशेन पुरस्कृता: ॥ ६९ ॥

सूचितं नेहरोर्नाम तिलकेन निजोत्तरे ।
इति ज्ञातं मया पुण्यग्रामे कार्यालयात् तदा ॥ ७० ॥

अलंकृतं पदं पूर्वं मालवीयमहाशयैः ।
सुयोग्यमाह खापर्डे तदन्यस्मै पदार्पणम् ॥ ७१ ॥

स्वपत्रे लिखितं देव्या टागोरार्थं मया कृतः ।
यत्नोऽपि निष्फलस्तस्मिन् यत्ना मोघाभवत् तदा ॥ ७२ ॥

अधमे लब्धकामत्वाद् निष्फलत्वं वरं मतम् ।
याचनाया अधिगुणे कवीनां तत्त्वदर्शिनाम् ॥ ७३ ॥

कार्यकारिसभासद्भिर्मालवीयो नियोजितः ।
अलंकर्तुं सभाध्यक्षपदं राष्ट्रमहोत्सवे ॥ ७४ ॥

यन्चोऽस्ति भारते सर्वे मालवीयो महामनाः ।
पण्डितोपाधिविख्यातो नाम्ना मदनमोहनः ॥ ७५ ॥

अभावाल्लोकमान्यस्य सर्वलोकसुसंमता ।
सभापतिपदे तस्य नियुक्तिर्भारतेऽखिले ॥ ७६ ॥

केन्द्रप्रशासनायैष प्रश्नः शिष्टजनैः कृतः ।
अनुज्ञा गन्तुमिंग्लंडं युष्माभिर्दीयते कदा ॥ ७७ ॥

होमरूलादिशिष्टेभ्योऽनुज्ञा गन्तुं न दीयते ।
यावत् समित्योरारब्धं कार्यं नेह समाप्यते ॥ ७८ ॥

दास्यते गमनानुज्ञा शिष्टेभ्यस्तदनन्तरम् ।
पत्रद्वारा गणेशेन तिलकाय निवेदितम् ॥ ७९ ॥

मांटेगुचेम्सफर्डाभ्यां समिती द्वे नियोजिते ।
घटनोद्यमपूर्त्यर्थं फ्रांचायिस्फंक्शनाभिधे ॥ ८० ॥

प्रश्नानां राजकीयानामवश्यं वै समीक्षणम् ।
प्रमाणं तन्मतं प्रायो घटनायन्त्रशिल्पिनाम् ॥ ८१ ॥

नियुक्तास्तत्सदोवर्गे हिन्ददेशाभिमानिनः ।
सुरेन्द्रशास्त्रिवत् केचिद् नेमस्तमतवादिनः ॥ ८२ ॥

विदर्भमध्यदेशानां नागपुर्यामुपस्थितिः ।
साक्षिणां सर्वपक्षेभ्यः शासनेन विनिश्चिता ॥ ८३ ॥

अहं साक्ष्याय गतवान् खापर्डेऽळेकरादिभिः ।
तदा समित्या एकस्याः स्लायोऽध्यक्षपदे स्थितः ॥ ८४ ॥

कमीशनरपदस्थोऽसौ मध्यप्रान्तस्य शासने ।
द्वेष्टा तिलकपक्षस्य विदर्भे लोकनिन्दितः ॥ ८५ ॥

मतदातृगुणादीनां कार्ये निर्वाचनस्य वै ।
विमर्शाय स्थापिता सा समितिः पूर्वदर्शिता ॥ ८६ ॥

अवश्यं व्यवहाराणां यथान्यायं विभाजनम् ।
तस्य सम्यग् विमर्शाय द्वितीया समितिः कृता ॥ ८७ ॥

दिग्दर्शनमसंदिग्धमवश्यं प्रान्तकेन्द्रयोः ।
परस्पराधिकाराणां सम्यक् तत्त्वोपबृंहणम् ॥ ८८ ॥

लोकहस्ते प्रदानार्थं विषयाणां विनिश्चयः ।
दत्तरक्षितकार्याणां व्यवहारैकसूत्रता ॥ ८९ ॥

द्विसूत्रचालनोद्भूतसमस्यानां विचारणा ।
संकल्पस्य च सिद्ध्यर्थमन्ते स्वमतदर्शनम् ॥ ९० ॥

यात्रा समितिकार्यार्थं सभासद्भिः कृता तदा ।
दक्षिणोत्तरमध्येषु हिन्दस्योत्तरपूर्वयोः ॥ ९१ ॥

इतिवृत्तं यथाकालं मुद्रितं च प्रकाशितम् ।
तस्याः कार्यस्याङ्ग्लदेशे भारते चापि शासकैः ॥ ९२ ॥

राष्ट्रीयाणां समारोहः संपन्नोऽभूत् सभासदाम् ।
देहल्यां घटना चेयं राष्ट्रस्य स्फूर्तिदायिनी ॥ ९३ ॥

श्रीगणेशैर्विदर्भाणां नेतृभिस्तस्य वर्णनम् ।
लिखितं मुख्यवार्तानां सारांशेन स्वपत्रके ॥ ९४ ॥

धालाय लंडनस्थाय लिखितं तेन पत्रकम् ।
स्वगृहं प्रति यातेन सभाकार्यात्यये स्वयम् ॥ ९५ ॥

विशेषाग्निरथेनैव बालकृष्णादिका वयम् ।
सोत्साहं प्रस्थिता द्रष्टुं दिल्लीं राष्ट्रमहोत्सवम् ॥ ९६ ॥

स्थानके स्थानके प्राप्ताः स्वागताय प्रवासिनाम् ।
मालाभिः पुष्पगुच्छैश्च देशभक्तान् दिदृक्षवः ॥ ९७ ॥

दुग्धोऽभावे यथा तक्रं प्रायः पीत्वा सुतुष्टताम् ।
क्षुरक्षामो दर्शयत्येव तद्वद् दृष्टा हि सा स्थितिः ॥ ९८ ॥

कुर्वन्ति गौरवं सर्वे राष्ट्रकार्यस्य बान्धवाः ।
स्वयंक्रियन्त प्रदत्तास्तैः पुष्पमालाद्यो मया ॥ ९९ ॥

यथापूर्वं निवासाय लक्ष्मीनारायणस्थलम् ।
निश्चितं तद् गतास्तत्र सर्वेऽपि न्यवसन् सुखम् ॥ १०० ॥

समारोहेण संयातं पण्डितस्य न संमतम् ।
राजधान्यां शासनस्य मत्तदन्त्यनुकारिणः ॥ १०१ ॥

संप्राप्ता राष्ट्रनेतारो देहल्यामधिवेशने ।
भारतीयसभाकार्ययशःसंपादनोत्सुकाः ॥ १०२ ॥

अङ्गवङ्गकलिङ्गादिहिन्दाङ्गोपाङ्गभागतः ।
प्राप्ता उपासका देवि त्वदर्थार्पितजीविताः ॥ १०३ ॥

मतिमन्तश्च विद्वांसस्तपोधूतमनोमलाः ।
यमिनो धार्मिनो धीरा दानशूरा दयाघनाः ॥ १०४ ॥

दशदिग्भ्यो भारतस्याः प्राविशन् पुरुषोत्तमाः ।
सभास्थानं देहलीस्थं मालवीयपुरःसराः ॥ १०५ ॥

उदतिष्ठंस्तत्प्रवेशात् पूर्वागतसभासदः ।
बद्धाञ्जलि स्वागताय विनयानतमस्तकाः॥ १०६ ॥

मुखैरुदीरयामासुरस्य वन्दे ह मातरम् ।
जयतात् पण्डितोऽस्माकं मालवीयो महामनाः ॥ १०७ ॥

तिलकोऽपि जयं यातु मातृभूद्धारदीक्षितः ।
पूरितं चाम्बरं सर्वं जयघोषैः समुत्थितैः ॥ १०८ ॥

क्रमात् सुशोभिते स्थाने जयनादः शमं गतः ।
प्रस्थापिता तत्र शान्तिः कार्यारम्भनिदर्शिनी ॥ १०९ ॥

विरेजे पण्डितः प्राज्ञो मालवीयो महामनाः ।
सभाध्यक्षासने श्रेष्ठे सदस्यैरनुमोदित. ॥ ११० ॥

प्रदीर्घमपि गम्भीरं वाचयामास भाषणम् ।
भारतोन्नतिसंबन्धिप्रश्नानां सुविमर्शकम् ॥ १११॥

पूर्वेतिहाससंबद्धं सप्रमाणं सयुक्तिकम् ।
वस्तुस्थितिज्ञापनार्थमुद्धारपथदर्शकम् ॥ ११२ ॥

तस्य वक्तृत्वसंपन्नां श्रुत्वोक्तिं मुखनिःसृताम् ।
आनन्दसागरे मग्नः सभारूपजनार्दनः ॥ ११३ ॥

निर्देशो न कृतोऽध्यक्षैस्तिलकस्य स्वभाषणे ।
इति व्यक्ता सभासद्भिर्महत्याश्चर्यभावना ॥ ११४ ॥

बालो राष्ट्रसभाध्यक्षो नियुक्तो राष्ट्रनेतृभिः ।
न स्वीकृतं प्रस्थितेन लंदनं तेन तत्पदम् ॥ ११५ ॥

नियुक्तिर्मालवीयस्य तत्पदे राष्ट्रनेतृभिः ।
कृतेति ज्ञातमेवासीद् मण्डपस्थसभासदाम् ॥ ११६ ॥

उपस्थितैः सभासद्भिः कैश्चिद् व्यक्तीकृतं तदा ।
आश्चर्यं मालवीयेन प्रमादोऽयं कथं कृतः ॥ ११७ ॥

श्रुत्वा विस्मरणाज्जातादनुल्लेखाद् मनोव्यथा ।
सुतीव्रासीत् सदस्यानां वालस्याध्यक्षभाषणे ॥ ११८ ॥

ऋजुस्वभावशीलस्य मालवीयस्य मानसे ।
सहसैवोत्थितः प्रश्नो दूषिता मे मतिः कथम् ॥ ११९ ॥

विस्मृतिर्मे कथं जाता वालानुल्लेखरूपिणी ।
करिष्ये क्षालनं तस्याः समारोपस्य भाषणे ॥ १२० ॥

कृताक्षम्यप्रमादोऽहं क्षन्तव्यो देशबन्धुभिः ।
मालवीयोऽब्रवीदेवं समीपस्थानुयायिनः ॥ १२१ ॥

दृश्यते च समारोपे तत्कृतं तिलकार्चनम् ।
उक्तं शास्त्रे सर्वदोषः पश्चात्तापेन शुध्यति ॥ १२२ ॥

महासभानाटकेऽस्मिन् कथा विष्कम्भकोपमा ।
सुखान्ता मालवीयस्य युक्तमार्गावलम्बनात् ॥ १२३ ॥

इतिवृत्ते घोषितस्य मंटिगेन प्रकाशिते ।
क्रमप्रगतिमार्गस्य साङ्गोपाङ्गविवेचने ॥ १२४ ॥

भारतीयसदस्यानामभिव्यक्ते सभागृहे ।
अधिवेशमवैशिष्ट्यं सभाया देहलीपुरे ॥ १२५ ॥

शास्त्रिणं श्रीनिवासाख्यं विना दिल्ल्यधिवेशने ।
तस्मिन्नुपस्थितः कश्चिद् न नेमस्तविचारवान् ॥ १२६ ॥

विशिष्टायां सभायां यो मुख्यायां सर्वसंमतः ।
प्रस्तावः सर्वचर्चायै निहितो वरसंस्थया ॥ १२७ ॥

प्रयत्नः श्रीनिवासस्य ह्यसंतोषनिराशयोः ।
विनिर्देशं लोपयितुं तदा वै व्यर्थतां गतः ॥ १२८ ॥

तिलकेन स्वपक्षिभ्यः स्पष्टं दिग्दर्शनं कृतम् ।
पत्रके लंदनात् तेन प्रेषिते सहकारिणे ॥ १२९ ॥

मुम्बापुर्यां सभायां यो निर्णयो बहुसंमतः ।
येनकेनाप्युपायेन कर्तव्यः सुप्रतिष्ठितः ॥ १३० ॥

श्रेयस्करं च तं कर्तुं यत्नशीला इहागताः ।
पराभवन्तु सर्वे ये देहल्यां प्रतिगामिनः ॥ १३१ ॥

संमतैका चिह्नांटायाः सूचना च सभासदाम् ।
अन्या त्वस्वीकृता तस्मादसंतोषमयाप सा ॥ १३२ ॥

जिना ददौ प्रयत्नेन पुष्टिमात्मानुयायिभिः ।
निहितायै सूचनायै सभाया अधिवेशने ॥ १३३ ॥

कृतोऽवधिः षडब्दानां स्वायत्तप्रान्तनिर्मितेः ।
पूर्वस्मिन् वै पञ्चदशस्थाने संख्या च नूतना ॥ १३४ ॥

युद्धान्ते संधिकार्याय परिषद् युद्धभागिनोः ।
प्रश्नानां च विवादानां पक्षयोर्निर्णयाय च ॥ १३५ ॥

आपदपैतीति विज्ञाय शत्रुमित्रैर्विनिश्चितम् ।
युद्धस्य स्तम्भनाय् शीघ्रं कर्तुं तस्या विनिर्मितिम् ॥ १३६ ॥

अमेरिकारुसचीनफ्रान्सैंग्लंडादिसंयुतिः ।
विजयी शान्ततावादी पक्षोऽयं मन्यते जनैः ॥ १३७ ॥

जपानरुसशार्मण्यसंघ आक्रमको मतः ।
युद्धस्यापत्तिभिस्त्रस्तैर्विश्वशान्तिभयावहः ॥ १३८ ॥

साम्राज्यान्तःस्थदेशानां सार्वभौमैः पुरस्कृता ।
पात्रता प्रातिनैध्यस्य जगतः शान्तिसत्रके ॥ १३९ ॥

दिल्लीराष्ट्रसभाध्यक्षैर्विश्वपञ्चा नियोजिताः ।
हिन्दप्रतिनिधित्वाय तिलकेमामगान्धयः ॥ १४० ॥

प्रेषितः सार्वभौमाय ह्यविलम्बेन निर्णयः ।
पूज्यप्रतिनिधिभ्यश्च पृथक् परिषदे तथा ॥ १४१ ॥

दिल्लीसभावर्णनेन नौकायाननिरूपणे ।
नामजोशीकथासूत्रं त्रुटितं संदधामि तत् ॥ १४२ ॥

षडमं तिलको यासो नौकायां ससुहृज्जनः ।
सुखमित्युक्तमेवाद्री कथये यत् ततः परम् ॥ १४३ ॥

नौकायानं चिरं तिष्ठेत् तत्र ज्ञात्वेति यात्रिकाः ।
जग्मुः कूलं समुद्रस्य द्रष्टुमेडनपत्तनम् ॥ १४४ ॥

ततो नौका समायाता पोर्टसय्यदपत्तनम् ।
चतुरो दिवसांस्तत्र स्थिता संकटसंशयात् ॥ १४५ ॥

निवारिता यथापूर्वमत्रापि गमनाद् बहिः ।
नौकायाः प्रेक्षितुं शोभां पत्तनस्य मनोहराम् ॥ १४६ ॥

नौप्रयाणदिनात् पूर्वं सूचनैका प्रकाशिता ।
गले धृत्वा जीवरक्षावन्धनं यात्रिको जनः ॥ १४७ ॥

आगच्छेद्य स्थितामब्धौ नावं प्राणसुरक्षिणीम् ।
अपराह्णे दिने तत्र काले फलकदर्शिते ॥ १४८ ॥

तदा प्रात्यक्षिकं सर्वं कृतं नौकाधिकारिभिः ।
उद्घोषितं प्रयोगान्ते पुनस्तत्राधिकारिभिः ॥ १४९ ॥

तथैव यात्रिभिः सर्वैः वर्तितव्यं च संकटे ।
आकर्ण्य संकटाशंसिघण्टानादं च सत्वरम् ॥ १५० ॥

तदारोहावरोहाभ्यां तिलकस्यातिचापलम् ।
पश्यन्तस्तरुणस्येव विस्मिता नौस्थिता जनाः ॥ १५१ ॥

अस्माकं प्रस्थिता नौका पोर्टसय्यदपत्तनात् ।
जिब्राल्टरस्याभिमुखी सिन्धौ सततगामिनी ॥ १५२ ॥

सुरक्षार्थे च नौकाया युद्धनौः सहगामिनी ।
पुरतः पृष्ठतश्चासीदेकैकान्तःस्थवाहिनी ॥ १५३ ॥

नभस्येकं बलूनं च विमानानां च पञ्चकम् ।
अग्निनौकाद्वयं तद्वदस्मन्नौरक्षके दृशे ॥ १५४ ॥

नानावर्णैश्चित्रितानि चान्यनौकावाहनानि ह ।
आक्रमन्त्यर्धवेगेन जलमार्गे शनैः शनैः ॥ १५५ ॥

विश्रान्तिसमयः स्वल्पो जिबराल्टरपत्तने ।
न कोऽपि यात्रिकस्तत्र नौकायानाद् बहिर्गतः ॥ १५६ ॥

प्रविवेश ततो नौका युद्धक्षेत्रं भयावहम् ।
शतघ्नीनां दूरध्वानो यातः श्रुतिपथं भृशम् ॥ १५७ ॥

आगच्छाम वयं स्थानं तिल्बरीसंज्ञकं यदा ।
तिलकाय ददौ पत्रं डा.कु.प्रतिनिधिस्तदा ॥ १५८ ॥

ज्ञाते सुनिश्चितं स्थानं निवासायेति लंदने ।
लुप्तचिन्ता वयं सर्वे गतास्तत्सदनं प्रति ॥ १५९ ॥

बाप्टिस्टेन गृहद्वारे तिलकस्यागतं कृतम् ।
दृढं प्रेम्णा समालिङ्ग्य सबाष्पनयनेन वै ॥ १६० ॥

शय्योत्थानविधौ स्थितिभ्रमणयोर्विश्रान्तिकालेऽपि यो
जाग्रत्स्वप्नसुषुप्तिषु प्रकृतिपस्तत्संनिधौ यः स्थितः ।
सेवाधर्मरतश्चरन् निरलस यो नामजोदयन्वय
इंग्लंडेऽन्वसरत् सदा गणपतिश्छायेव गाङ्गाधरिम् ॥ १६१ ॥

# चतुःषष्टितमस्तरङ्गः

आङ्ग्लभूस्थविधिज्ञेन तिलकस्य प्रचोदनात् ।
पिशुनाय चिरोलाय तस्याकारणवैरिणे ॥ १ ॥

सूचनैका यथाशास्त्रं प्रेषिता निम्नवर्तिनी ।
अपवाक्यैरसत्यैश्च निजग्रन्थे त्वया कृतैः ॥ २ ॥

नानाविधं हासंबद्धैर्मलिनं मद्यशः खलु ।
प्रेषितव्यं क्षमापत्रं ततः काले यथोचिते ॥ ३ ॥

त्वदुक्तीनां निषेधाय कृत्वा त्वां प्रतिवादिनम् ।
गन्तास्मि चान्यथा शीघ्रं ब्रिटिशन्यायमन्दिरम् ॥ ४ ॥

ममापमानदण्डार्थं त्वत्तो मानधनस्य च ।
यथान्यायं विनिश्चित्यै सत्यप्रस्थापनाय च ॥ ५ ॥

अत्यहोऽभूद् विचारोऽपि चिरोलस्यातिमानिनः ।
गन्तुं सामप्रधानेन तिलकेनोन्नतात्मना ॥ ६ ॥

सदाग्रहाद् भारतस्य शासनस्याधिकारिणः ।
बभूवुः पापिनस्तस्य साहाय्यदानाय तत्पराः ॥ ७ ॥

युतिर्भयत्यनिष्टानां ग्रहाणां शास्त्रविन्मते ।
उपप्लवाय लोकानां साधूनां च भयावहा ॥ ८ ॥

पापराशिं चिरोलाख्यं याता पापग्रहत्रयी ।
साम्राज्यशासनं पापं पापे च प्रान्तकेन्द्रयोः ॥ ९ ॥

प्रतिकूला भारतस्यात्युग्रा वक्रदशां गता ।
क्रूरग्रहत्रयी नित्यं दुष्कृतां पक्षपातिनी ॥ १० ॥

तद्वक्रगतिनिर्दिष्टश्चिरोलस्यार्थसिद्धये ।
कृतोऽधुना सप्रमाणं यत्नेतेमुल्यलेसकैः ॥ ११ ॥

अधःपातो गतो काष्ठां परां तिलकविद्विषाम् ।
न्यायनीतिविवेकानां स्थानाद् भ्रष्टैव तन्मतिः ॥ १२ ॥

होमरूलप्रचारेण भारते च रणे मुहुः ।
परामर्शैः शत्रुवीरनौकाधायुद्दलैः कृतैः ॥ १३ ॥

संतप्तानां मूढधीनां शासकानां हि भारते ।
तदन्तःस्थो द्वेषवह्निः प्रजज्वालातिरंहसा ॥ १४ ॥

कर्तुं निस्तिलकां भूमिं सर्वेऽपि कृतनिश्चयाः ।
स्वराज्यवादिसंस्थानां नेतॄणां नाशनाय च ॥ १५ ॥

प्रोत्साहनाय शासनस्य चिरोलेन कृतः श्रमः ।
निन्दितुं भारतक्रान्तिं स्वग्रन्थस्य लेखने ॥ १६ ॥

रक्षार्थं स्वप्रतिष्ठाया अयदयं तत्समर्थनम् ।
न्यायालये तथान्यत्र कर्तव्यमिति तन्मतम् ॥ १७ ॥

गुप्तप्रकटलेखानां संग्रहः शासनस्य यः ।
चिरोलस्योपयोगाय सर्वः स सुलभीकृतः ॥ १८ ॥

तदर्थं वै शासनस्य कोशाद् द्रव्यव्ययोऽभवत् ।
अमर्यादाधिकारोऽभूत् केन्द्रस्याधिपतेस्तदा ॥ १९ ॥

नियोजिता शासनेन समितिः केन्द्रवर्तिना ।
रौलेटोऽभूद् तदध्यक्षो विचारार्थं परिस्थितेः ॥ २० ॥

शान्तिभञ्जकशक्तीनां प्रसारस्य च कारणम् ।
चिन्तनं तन्निरासस्य योजनानां समीक्षणम् ॥ २१ ॥

नियन्त्रणं क्रान्तिकानां लेखानां मुद्रणस्य च ।
एतादृशानां प्रश्नानां स्वास्थ्यस्योपयोगिनाम् ॥ २२ ॥

विधिमार्गानुगामित्वं शिक्षणस्य प्रवर्तनम् ।
स्वातन्त्र्यस्य तथा वार्ता राष्ट्रप्रगतिवर्धनः ॥ २३ ॥

एतस्याः समितेर्वृत्तं व्यक्तिस्वातन्त्र्यनाशकम् ।
प्रकाशितं शासनेन स्वल्पकालावधाविह ॥ २४ ॥

समकालं तत्प्रसिद्धिर्जाताङ्ग्लद्वीपयुग्मके ।
साम्राज्यस्य विभागेषु त्रिखण्ड्यां प्रसृतेषु च ॥ २५ ॥

तिलकस्यापराधानां विस्तरेण विवेचनम् ।
कृतं तिलकनिन्दायै लेखैस्तद्विवेचने ॥ २६ ॥

कारणं तद्वर्णनस्य सुस्पष्टं ज्ञायते मया ।
अनुकूलं चिरोलस्य निर्मातुं वायुमण्डलम् ॥ २७ ॥

यूरोपेऽमेरिकायां च तथैंग्लंडे विशेषतः ।
आफ्रिकास्थितदेशेषु चाङ्ग्लसाम्राज्यवर्तिषु ॥ २८ ॥

तिलकेन चिरोलाय दत्तमाह्वानमद्भुतम् ।
स्पर्धे वाग्द्वन्द्वयुद्धाय ब्रिटिशन्यायमन्दिरे ॥ २९ ॥

न्यायेशः पंचसंयुक्तो मध्यस्थ इव राजते ।
क्रीडाक्षेत्रे युध्यमानपक्षयोर्वादनिर्णये ॥ ३० ॥

तेषां मनसि निर्मातुं तिलकप्रतिकूलताम् ।
हिन्दप्रशासकैर्यत्नः कृतो बुद्धिपुरःसरम् ॥ ३१ ॥

न्यायालयस्यापमानदोषार्होऽयं दुरुद्यमः ।
दण्डनीया भवेद् व्यक्तिः शासने दण्डधारिणा ॥ ३२ ॥

मनः कलुषितं कर्तुं न्यायेशस्य यतेत यः ।
न स शिष्टसमाजे ह स्थातुं योग्यो नराधमः ॥ ३३ ॥

त्यागबुद्धिनिवृत्तस्य मदान्धस्याधिकारिणः ।
उपप्लवाय लोकानां चेष्टास्ताः स्वैरगामिनः ॥ ३४ ॥

आनीतं वै शासनेन स्वातन्त्र्यापायकारकम् ।
लोकैश्च निन्दितं सर्वैरौलेटस्य विधेयकम् ॥ ३५ ॥

खापर्डेमालवीयाभ्यां तथा तस्य सभाजनैः ।
प्रतिगामिस्वरूपस्य मीमांसा मार्मिकी कृता ॥ ३६ ॥

सूचितं भाषणे सर्वैर्युक्तं तत् प्रेषणं भवेत् ।
लोकेभ्यः समयं दातुं दर्शनार्थं मतस्य वै ॥ ३७ ॥

मण्डले बहुसंख्यत्वं शासनस्यानुवर्तिनाम् ।
प्रशासनस्य तद्धेतोः सदस्यैः सूचनोज्झिता ॥ ३८ ॥

प्रवराध्यक्षसमित्या च कृता चर्चा निरर्थका ।
संमतिस्तु सदोषस्य प्राप्ता बहुसभासदाम् ॥ ३९ ॥

अनस्वातन्त्र्यसंकोचमसह्यं कारणं विना ।
यदि व्यक्तां शासनेन वृत्तिं लोकपराङ्मुखीम् ॥ ४० ॥

विलोक्याचिन्तयद् गान्धिर्महात्मा समयोऽधुना ।
प्राप्तश्चोपक्रमं कर्तुं प्रतीकारस्य पद्धतेः ॥ ४१ ॥

सयुक्तिवाङ्निषेधस्य प्रयोगो निष्फलोऽभवत् ।
सत्याग्रहेण जेतव्यः शासनस्य दुराग्रहः ॥ ४२ ॥

विधेयकस्य कृष्णस्य न न्याय्यं प्रतिपालनम् ।
प्रकटोल्लङ्घनं तस्य न्याय्यं वीरव्रतोचितम् ॥ ४३ ॥

लोकाः सत्याग्रहं कर्तुं सहस्राणि सहस्रशः ।
अनुगन्तुं महात्मानमुत्तस्थुः सर्वभारते ॥ ४४ ॥

अङ्गवङ्गमहाराष्ट्रमुम्बईगुर्जरादिषु ।
युवकाः प्रायशः सज्जा देशभक्ता युयुत्सवः ॥ ४५ ॥

उत्थितास्तीव्ररूपेण पंजाबप्रान्तवासिनः ।
गुरुजन्यव्ययस्याथास्तत्र कृत उपक्रमः ॥ ४६ ॥

किच्लूसत्यपालादिनेतारस्त्वधिकारिभिः ।
नीताश्च यत्र कुत्रापि प्रक्षुब्धो लोकसागरः ॥ ४७ ॥

गोलिकाछिन्नगात्रेभ्यो दुःखितेभ्यो दिनात्यये ।
नैव दत्तं जलं कैश्चित् पिपासाशमनाय वै ॥ ६० ॥

उपचारस्य का वार्ता सलिलं यत्र दुर्लभम् ।
पिपासूनामार्द्रतायै शुष्कौष्ठान्तस्पृहावताम् ॥ ६१ ॥

गतप्राणाः पञ्चशतं दुःशासनमते तदा ।
छिन्नगात्राः सहस्रं च गोलिकाहतदेहिनः ॥ ६२ ॥

संख्यां ज्ञातुं न यत्नोऽपि डायरेण कृतस्तदा ।
मृतानां वाहतानां वा वह्निनालोत्थगोलकैः ॥ ६३ ॥

सहस्रादधिकप्राया मृत्युसंख्यैव केवला ।
विद्वानां गणनाशक्या कस्यचित् साक्षिणो मते ॥ ६४ ॥

गुर्जरादिप्रदेशेषु कृते हिंसावलम्बनम् ।
स्वप्रतिज्ञामनादृत्य सत्याग्रहयुयुत्सुभिः ॥ ६५ ॥

समुत्पन्ना समस्यैका विचाराय महात्मनः ।
तत्त्वच्युतैः सैनिकानां किं वै कार्यमतःपरम् ॥ ६६ ॥

विचिन्त्य तदशेषेण गान्धिना निर्णयः कृतः ।
पुनः सत्याग्रहस्यान्तो लोकान् किल समादिशत् ॥ ६७ ॥

आन्दोलने तदारब्धे गान्धिर्नायडुसंयुतः ।
शासनाक्षिप्तलेखानां मुम्बय्यां विक्रयेण च ॥ ६८ ॥

तिलकानुगया पुण्यग्रामे खाडिल्करादयः ।
अन्वकुर्वन् महात्मानं कृत्वा पत्रस्य विक्रयम् ॥ ६९ ॥

हत्याकाण्डमयान्यायनिर्णयाय नियोजिता ।
सार्वभौमप्रतीकेन समितिः स्वल्पसंख्यका ॥ ७० ॥

हंटराख्यस्तदध्यक्षो लार्डोपाधिविभूषितः ।
आसीद् यो वै स्कटलैण्डे न्यायाधीशपदस्थितः ॥ ७१ ॥

महात्मनश्चोदनेन सहकार्यस्य निश्चयः ।
कृतः संशोधने तस्मिन् दासप्रमुखनेतृभिः ॥ ७२ ॥

दृष्टोऽस्यानुभवेनैव दोषस्तत्कार्यपद्धतौ ।
जातः सुनिर्णयस्तेषां संपर्को न हितावहः ॥ ७३ ॥

अन्यैव समितिः कार्या कर्तुं सत्यगवेषणम् ।
हत्याकाण्डस्य घोरस्य विनिश्चेतुं च दोषिताम् ॥ ७४ ॥

विशेषतो विधानस्य हंटरस्य प्रकाशनात् ।
दर्शनाच्च मतैक्येन दोषमुक्तोऽस्ति डायरः ॥ ७५ ॥

अहन् प्राणप्रशस्त्रेण जनाश् शान्तान् सभास्थितान् ।
अदत्त्वा समयं तेषां बहिर्गन्तुं यथोचितम् ॥ ७६ ॥

कृतिरेषा डायरस्य गर्हणीयास्ति केवला ।
न शिष्टस्य समाजस्य संमता सा भवेदिति ॥ ७७ ॥

अस्तु ग्राह्यं तद्विधाने सामान्यजनवर्णने ।
दोषित्वस्य तु सिद्ध्यर्थं कर्तृहेतुप्रधानता ॥ ७८ ॥

अयोग्यं कर्म तत् कर्तुं को हेतुस्तस्य वर्तते ।
कथितं निर्भयं तेन कर्तव्यपरिपालनम् ॥ ७९ ॥

किं कर्म किमकर्मेति कवयोऽप्यत्र मोहिताः ।
निर्णयो डायरस्यापि बुद्धिमोहादजायत ॥ ८० ॥

न दौरात्म्यं दृश्यतेऽत्रावश्यं दोषस्य सिद्धये ।
सुसिद्धं तन्मते दोषराहित्यं डायरस्य वै ॥ ८१ ॥

ओडवायरः शासनेशः पंजाबस्य बभूव [illegible] ।
स निर्दोषः सर्वथेति हंटरेण प्रदर्शितः ॥ ८२ ॥

कुतर्कप्रचुरं सर्वं तेषां तत् प्रतिपादनम् ।
सर्वोऽप्रतिष्ठितस्तत्र प्रमाणस्याप्रमाणता ॥ ८३ ॥

यदि स्याद् वै प्रमादोऽत्र स्वकर्तव्यस्य निर्णये ।
हेतुरान्तरिकः शुद्धः कर्तव्यपरिपालनम् ॥ ८४ ॥

नित्येति सात्त्विकी बुद्धिराङ्ग्लानां न्यायवर्तिनी ।
प्रतिमा याचला गान्धेः मनोभूम्यां महात्मनः ॥ ८५ ॥

समित्याः सा गता भङ्गं निर्णयस्यावलोकनात् ।
दृष्टं तत्र तमोवृद्धिप्राधान्यं स्वार्थलम्पटम् ॥ ८६ ॥

सत्त्वं गुणं ह्यतिक्रम्य रजःसंघर्षणाद् महान् ।
तमोभावः प्रादुरासीद् मानवः श्वापदोऽभवत् ॥ ८७ ॥

चिन्तान्तं तच्छासनस्य भारतोद्धारकर्मणि ।
न चान्यो विद्यते पन्था इति तस्य मतिः स्थिता ॥ ८८ ॥

हत्याकाण्डे प्रचण्डे प्रकटितविषमव्याघ्रहिंस्रप्रवृत्तेः
　　साम्राज्यस्याभिमानाज्जितमनुजतिरस्कारभूयिष्ठबुद्धेः ।
विज्ञाता गान्धिनेति प्रखरकुलमतिः साङ्ग्ललोकस्य मूढा
　　दुःखाब्धेर्मन्थनान्ते समभवदमृतं भारतोद्धारकं तत् ॥ ८९ ॥

इति माधवविरचिते श्रीतिलकयशोऽर्णवे जालियनवालोद्यानहत्याकाण्डनामा
चतुःषष्टितमस्तरङ्गः ।

## पञ्चपाग्रितमस्तरङ्गः

आदिलघ्रस्तिलकः प्रेम्णा सहमित्रो गृहागतः ।
गृहद्वारे गतमन्थे थापूटिस्टेनेति घर्षितम् ॥ १ ॥

किन्नाम तद्गृहस्यासीत् कथं प्राप्यं स्थलं प्रति ।
लंदने महति प्राप्ता यात्रिका अतिविस्तृते ॥ २ ॥

हौलेन्लेसेति तन्नाम मैदान्हेलाभिधानके ।
दशाङ्केन विनिर्दिष्टं स्थलमालयगाजिषु ॥ ३ ॥

आस्तां वै स्वामिनौ तस्य मॅक्नाल्टीसंज्ञदम्पती ।
संपादितं निवासाय तिलकस्य यथाविधि ॥ ४ ॥

प्रदेयं मासिकं शुल्कं निवासार्थं विनिश्चितम् ।
सीतारामस्य मित्रस्य मांचेस्टरनिवासिनः ॥ ५ ॥

माध्यस्थ्येन विनायासमवाप्नोत् संमतिं तयोः ।
प्रेषितो लोकमान्येन थापूटिस्टो विधिवद्वरः ॥ ६ ॥

बभूव लंदनस्थेषु भारतीयेषु तत् स्थलम् ।
दशाभारतडौनिंगमार्गनाम्नैव विश्रुतम् ॥ ७ ॥

मॅक्नालिटी भारतीयमशक्नोत् पक्तुमोदनम् ।
तथैव शाकपेयार्थं करीनामेति विश्रुतम् ॥ ८ ॥

पोलिका यवपिष्टस्य घृतान्ताः शाकपल्लवाः ।
मधुमेहनिरोधार्थं नित्यं तिलकभोजनम् ॥ ९ ॥

तन्मित्रपरिवारेण भोजनं प्रथमे दिने ।
सेवितं नित्यभोज्यानां लंदने नूतने गृहे ॥ १० ॥

ताम्हन्करकृते ग्रन्थे कथैका पठिता मया ।
सरहस्या मॅक्नाल्टीपाकनैपुण्यदर्शिनी ॥ ११ ॥

दशमासमितं कालं तिलकस्तद्गृहेऽवसत् ।
भारतप्रियखाद्यानां पाके सा निपुणाभवत् ॥ १२ ॥

तत्स्थानात् निर्गते बाले चालितं भोजनालयम् ।
लेभिरे भोजनं तत्र ग्राहका हिन्द्वभीप्सितम् ॥ १३ ॥

पट्टिकायां गृहस्यासीत् कृतो गौरवपूर्वकम् ।
बालस्य तत्र निर्देशस्तत्संचालिकया तया ॥ १४ ॥

भारतातोपनिर्मातुस्तिलकस्याशिषः शुभाः ।
आद्याभ्यां सर्वथा प्राप्ता इत्याशयनिदर्शकः ॥ १५ ॥

आङ्ग्लभाषामयैः शब्दैर्लिखितः पट्टिकोपरि ।
ग्राहकाणां प्रविष्टानां यस्याः प्रथमदर्शनम् ॥ १६ ॥

एकदा तिलकद्वेष्टा चिरोलः प्राविशद् गृहम् ।
सेवितानि च भोज्यानि यथेच्छं तेन तत्स्थले ॥ १७ ॥

तां नामपट्टिकां दृष्ट्वा चोत्थितो निर्गमोत्सुकः ।
रक्तवस्त्रेण नन्दीव चिरोलस्तीव्रमन्युमान् ॥ १८ ॥

संचालिकां समाहूय प्राहेयं नामपट्टिका ।
मिथ्यार्थबोधिकायोग्या क्षिप्रं वै क्षिप्यतां बहिः ॥ १९ ॥

स्वकीयपुस्तकाधारं लिखितं तत्र वर्णनम् ।
इच्छापूर्तिं न शक्नोमि कर्तुमित्याह सोसरे ॥ २० ॥

डॉक्टरात् पारिराज् ज्ञाता कथा लंडनवासिनः ।
इति ताम्हनकरेणोक्तं ग्रन्थे स्वरचिते किल ॥ २१ ॥

पारिखो नागपूरस्थः प्रस्थितो बोअराहवे ।
शस्त्राघातक्लेशितानां शुश्रूषां कर्तुमुत्सुकः ॥ २२ ॥

आफ्रिकासमरस्यान्ते आङ्ग्लदेशं जगाम सः ।
कौशलेनार्जितं तेन यशः प्रेमधनं बहु ॥ २३ ॥

व्यवसायसुनीत्या च सौहार्देनाङ्ग्लभापिषु ।
युवकानां भारतस्य योऽभवत् मार्गदर्शकः ॥ २४ ॥

आङ्ग्लदेशे स्वबन्धूनां स सुहृद् हिन्दवासिनाम् ।
तिलकस्य महान् भक्तः सुपुत्रो भारतस्य वै ॥ २५ ॥

मुंजेखेंगडिगोपालवुद्धयः सुहृदुत्तमाः ।
आसन् फणिपुरे तस्य स्वातन्त्र्योपासकस्य च ॥ २६ ॥

पूगीफलस्य खण्डानां चर्वणं रोचकं महत् ।
विदितं लोकमान्यस्य सर्वभारतवासिनाम् ॥ २७ ॥

छिद्रपद्मा तीव्रधारा च कर्तनी खण्डकारिणी ।
या पूगीफलखण्डानां चर्वकस्योपयोगिनी ॥ २८ ॥

उल्लेखिता विनोदेन वालस्य सहचारिणी ।
इति वैद्याभिधानेन शब्दश्लेपाभिलाषिणा ॥ २९ ॥

यथाकालं कृतं तेन पूगीफलनिषेवणम् ।
विदेशेऽपि हि निम्नोक्तात् पत्रात् तस्यानुमीयते ॥ ३० ॥

लिखितमिति च पत्रे भागिनेयाय तेन
 सुचितसमयलब्धोरुप्रपूगीफलानाम् ।
अनयनियतपत्राच्छादिता पेटिकैका
 विविधहितकरैः सद्वस्तुभिः साकमद्य ॥ ३१ ॥

केसरीपत्रलेखानां निमग्नोऽपि निवेदने ।
पुरःस्थिताय कस्मैचिद् हस्ताभ्यां फलकर्तनम् ॥ ३२ ॥

चकार कर्तनीं धृत्वा दीर्घं कार्यालये चरन् ।
न प्रमादोऽभवत् तस्य कर्तने वा निवेदने ॥ ३३ ॥

विलोक्य द्व्युद्यधानित्यमाश्चर्यचकिता जनाः ।
दृढाभ्यासेन सिध्यन्ति सिद्धयो योगिनां खलु ॥ ३४ ॥

तिलकस्य चहापानं प्रातःसायं दिने दिने ।
नियतं भोजनं तस्य द्विवारं फलसंयुतम् ॥ ३५ ॥

तृषाशान्त्यर्थपानाय सोडासंमिश्रितं जलम् ।
भारतेऽपि क्रमस्तस्य पानभोजनयोस्तथा ॥ ३६ ॥

अन्यच्च व्यसनं तस्य फलाशनमहत्तरम् ।
सदाङ्गीकृतकार्याणां विविधानां च चिन्तनम् ॥ ३७ ॥

लंदने भ्रमणं तस्य युक्तकार्यार्थमेव हि ।
पुरीशोभादर्शनाय तिलको न गतः किल ॥ ३८ ॥

कृतस्तेन प्रवासोऽपि लंदने यलवाहने ।
नामजोशीद्वितीयेन सुलभे चाल्पशुल्कके ॥ ३९ ॥

अवरोहारोहकाले भृत्यहस्तावलम्बनम् ।
स्वल्पकालस्थितेस्तेषां स्थानकेऽवश्यमेव तत् ॥ ४० ॥

अपघातास्थिभङ्गेन पादस्यासीच्च पङ्गुता ।
पङ्गुत्वात् तिलको गन्तुमशक्तः स्वगृहाद् बहिः ॥ ४१ ॥

तस्मिन् काले नामजोशी प्रोवाह तिलकं स्वयम् ।
तमुत्थाप्यासनात् स्वस्य तथा स्कन्धे निधाय तम् ॥ ४२ ॥

निनाय वाहनस्थानं लंदने राजवर्त्मसु ।
निष्ठया पालयामास स्वधर्मं सेवकोत्तमः ॥ ४३ ॥

गतेषु दशमासेषु लंदनस्थाः स्वबान्धवाः ।
तिलकेऽत्यनुरक्ता ये तत्समीपमुपाययुः ॥ ४४ ॥

जव्हेरी दीपचन्द्राख्यो लंदनस्थः पुरातनः ।
आङ्ग्लदेशे सुविख्यातो नवरत्नपरीक्षकः ॥ ४५ ॥

लोकमान्यं प्रार्थयत निवासाय गृहं मम ।
आगन्तव्यं लंदनस्थं तालयोद्मार्गसंस्थितम् ॥ ४६ ॥

स्वीकृता लोकमान्येन सा स्थानान्तरसूचना ।
कृता या द्युतिमित्रेण सादरं देशबन्धुना ॥ ४७ ॥

जन्हेरीसूचनायां वै प्रतीतं परिवर्तनम् ।
दृशावर्षे च यज्जातं भारतीयमनोभुवि ॥ ४८ ॥

चिन्त्यश्चित्रद्वये लोकैः तिलकः सूक्ष्मबुद्धिभिः ।
वर्णितः श्लोकयुग्मेन निम्नगेन महामतिः ॥ ४९ ॥

व्यासपीठे सभास्थाने तिष्ठन् वै लोकसंमुखः ।
निन्दितो गुर्जरैः क्रुद्धैः सुरते राष्ट्रमण्डपे ॥ ५० ॥

चित्रमन्तश्चक्षुपाऽपश्यद् दीपचन्द्रेण वन्दितः ।
तिलको लंदने नीतः स्वगृहं राष्ट्रनायकः ॥ ५१ ॥

दीपचन्द्रः प्रतीकोऽभूद् भारतस्यैव लंदने ।
तद्दर्शितेनादरेण व्यक्ता भारतसंमतिः ॥ ५२ ॥

पड्रसस्वादुभोज्यानि गुर्जराणां विशेषतः ।
उपलब्धानि मित्राणां तिलकस्य तदालये ॥ ५३ ॥

दीपचन्द्रगृहेऽपश्यन् भारतीयस्य जीवनम् ।
सर्वे वेषेषु भाषासु स्नानपानाशनादिषु ॥ ५४ ॥

तस्यातिथ्येन संतुष्टाः शिष्टास्ते भारतागताः ।
यशसे राष्ट्रकार्यस्य सोत्साहं च प्रयेतिरे ॥ ५५ ॥

शादाख्यो न्यायकार्यार्थं चक्रे नित्यं परिश्रमम् ।
तथापि तिलकस्यापि व्यतीतः समयो बहुः ॥ ५६ ॥

अपश्यत् तिलको विद्वत्संस्था लंडनवर्तिनीः ।
चर्चिता बहवः प्रश्ना वेदवैः पण्डितैः सह ॥ ५७ ॥

यूरोपे दौत्यरक्षायै वर्तितव्यं प्रवासिभिः ।
कार्पासाहृतवस्त्राणि नोपयुक्तानि यात्रिणाम् ॥ ५८ ॥

तिलकेनोत्तरीयं च त्यक्तं कटिविवेष्टितम् ।
धौतवस्त्रं धार्यते यल्लोकैः सर्वत्र भारते ॥ ५९ ॥

तत्स्थले स्वीकृतं तेन सौचिकेन विनिर्मितम् ।
द्विधाभूतमधोभागे पाटलोनामिसंज्ञितम् ॥ ६० ॥

अङ्गरक्षां परित्यज्य पुरातनजनप्रियाम् ।
अङ्गीचक्रे लम्बकोटमाजानुगलदीर्घकम् ॥ ६१ ॥

न स्वीकृता लोकमान्यैर्गलभूषणपट्टिका ।
मता शिष्टसमाजे सा सभ्यानां रुचिदर्शिनी ॥ ६२ ॥

उपानद्वाययोग्यौ च पुण्यग्रामे विनिर्मितौ ।
भारतेऽपि प्रयासाय हेयौ शीतस्थले सदा ॥ ६३ ॥

जलयाने समारेभे धारणं चाङ्ग्लबूटयोः ।
पादावाच्छादितुं तेन प्रशस्ते चोर्णपादुके ॥ ६४ ॥

महाराष्ट्रशिरस्त्राणं निजत्रैशिष्ट्यदर्शकम् ।
धृतमात्मशिरोभागे संचारे लंदने सदा ॥ ६५ ॥

गलग्रन्थिपटाभावात् तत्रस्था मेनिरे जनाः ।
केचिद् भरतखण्डस्य तिलकं धर्मपूरुषम् ॥ ६६ ॥

धर्मोपदेशकस्तत्र नोपयुङ्क्ते च पट्टिकाम्
याले ऽभूत् तन्मतिस्तेषां साद्दश्याद् वेषयोस्तयोः ॥ ६७ ॥

अज्ञानादपि यत् प्रोक्तं तिलको धर्मपूरुषः ।
लोकैरित्याङ्ग्लभूमिस्थैः सत्यमेवावदन् जनाः ॥ ६८ ॥

व्याख्यातो धर्म एवास्ति व्यासेनामितबुद्धिना ।
मानवानां धारणस्य दिव्यं कर्म महत्तमम् ॥ ६९ ॥

अन्यैरपि कृता व्याख्या मोक्षशास्त्रप्रवक्तृभिः ।
सुलभं सर्ववर्णानां चतुर्वर्गस्य साधनम् ॥ ७० ॥

मानवानां हितं श्रेष्ठमैहिकं पारलौकिकम् ।
लभ्यते येन तज् ज्ञेयं सत्यधर्मस्य लक्षणम् ॥ ७१ ॥

असौ धर्मेण संयुक्तस्तिलको भारते महान् ।
धर्मस्य विग्रहः साक्षात् कर्मयोगीति पूज्यते ॥ ७२ ॥

जीवितमस्य कृतं स्वदेशमहिमाख्यातिप्रसारो व्रतं
दत्ता येन सुखाहुतीरनुदिनं यज्ञेश्वरश्चार्चितः ।
उद्धर्तुं मनुजांस्तमोगतधियो गीतामृतं यो ददौ
प्राप्तोऽयं तिलकः कलौ भरतभूद्धाराय धर्मः स्वयम् ॥ ७३ ॥

इति माधवविरचिते श्रीतिलकयशोऽर्णवे धर्मपूरयदर्शननामा पञ्चषष्टितमस्तरङ्गः ।

# षट्षष्टितमस्तरङ्गः

संकल्पितस्य वैफल्यमनुभूतं महात्मना ।
केषुचिद् वै प्रसङ्गेषु तिलकेन निजायुषि ॥ १ ॥

मराठाकेसरीवृत्तपत्रयोः क्लेशवर्णनम् ।
कृतं सत्यं च साधारं करवीरस्य भूपतेः ॥ २ ॥

पर्वं इत्यस्य रोषस्य जातं तत्कारणं महत् ।
कारावासः फलं तस्य न्यायाधीशस्य निर्णयात् ॥ ३ ॥

दीर्घकालविचारान्ते दिशा बालेन निश्चिता ।
उद्धाराय स्वदेशस्य कर्तव्यस्य निजायुषः ॥ ४ ॥

विनिर्मातुं देशभक्तांस्तरुणानां सुशिक्षणम् ।
अयद्धयमिति संकल्पः कृतः संस्थाविनिर्मितेः ॥ ५ ॥

तत्राध्यापनकार्यस्य प्रतिज्ञापूर्वकं व्रतम् ।
स्वीकृतानुष्ठितं तेन दशसंवत्सराधिकम् ॥ ६ ॥

अभवत् तद्व्रतस्यापि त्यागोऽवश्यस्तदा किल ।
मनसा चिन्तितं कार्यं दैवेनान्यच्च चिन्तितम् ॥ ७ ॥

इति मत्वा च वैफल्ये निजप्रज्ञा कृता स्थिरा ।
बालेन यत्नशीलेन तरुणेन युयुत्सुना ॥ ८ ॥

मृतमित्राय दत्तस्य शब्दस्य परिपालने ।
यातना अनुभूता यास्ताः सर्वा वर्णनातिगाः ॥ ९ ॥

हरिश्चन्द्रेण याः सोढा विश्वामित्रकृताः पुरा ।
तत्सरचस्य परीक्षायै ताभिस्तुल्या अमंशयम् ॥ १० ॥

वैफल्यानुभवाद् दीर्घमन्ते सफलतामगात् ।
लोकमान्यः सत्यनिष्ठः कृपयानुग्रहात् प्रभोः ॥ ११ ॥

संघर्षस्तिलकस्यासीच् चिरोलेनापवादिना ।
न्यायालये लंदनस्थे द्वन्द्वयुद्धमिवाद्‌भुतम् ॥ १२ ॥

धर्मयुद्धप्रथा तत्र त्रिखण्डीन्यायसंमता ।
उल्लङ्‌घिता न्यायदानकर्तृभिः पक्षपातिभिः ॥ १३ ॥

संक्षेपेण तरङ्गेऽस्मिंस्तत्संघर्षनिवेदनम् ।
करोमि तत् सावधानं सर्वे शृण्वन्तु पाठकाः ॥ १४ ॥

कारागृहसाध्यसाने तिलकः पूजितो जनैः ।
न लाञ्छितं यशस्तस्य निर्णयाद् यातिजल्पनात् ॥ १५ ॥

न्यायमूर्तेर्डार्लिंगस्य मेनिरे भारते जनाः ।
नेतृभिस्तिलकः सर्वैरादृतः पूज्यबुद्धिभिः ॥ १६ ॥

लोकानामेकनेतेति युद्धकालेऽतिभीषणे ।
उद्‌घोषितं च देहल्यां सभ्यशिरोमणिना गान्धिना ॥ १७ ॥

दत्ता च सर्वराष्ट्रेण तन्नेतृत्वाय संमतिः ।
समर्प्याध्यक्षतां तस्मै सभाया अधिवेशने ॥ १८ ॥

स्वराज्यान्दोलनस्यापि जातमेवाभिवर्धनम् ।
विपरीतमभूत् सर्वं युद्धे जागतिके सति ॥ १९ ॥

वृद्धिस्तस्य प्रतिष्ठाया भारते ब्रिटने तथा ।
साम्राज्यस्य प्रतिष्ठायै सर्वथापायकारिणी ॥ २० ॥

स्वविचारप्रचाराय कृतः साम्राज्यवादिभिः ।
यत्नो महान् भारते च यूरोपामेरिकादिषु ॥ २१ ॥

चिरोलं पुरतः कृत्वा शिखण्डिनमिवार्जुनः ।
साम्राज्यवादिनश्चक्रुः प्रहारांस्तिलकोपरि ॥ २२ ॥

पञ्जरे दृढबद्धस्य सिंहस्येवातिपीडनम् ।
ज्ञानद्भिस्तस्य दौर्बल्यं कृतं तैर्दुष्टबुद्धिभिः ॥ २३ ॥

कारावासस्यावसाने पुनर्बालो न यास्यति ।
स्वभूमिं प्रत्यशक्तः सन् काराक्लेशातिजर्जरः ॥ २४ ॥

यातोऽपि गतसामर्थ्यो दुर्बलश्च हतप्रभः ।
इतीप्सितं च दुष्टानां जातमेव तु निष्फलम् ॥ २५ ॥

तिलकः कृशकायोऽपि चात्मशक्तिसमन्वितः ।
षडब्दान्ते जन्मभूमिं खग्रासान्ते यथा रविः ॥ २६ ॥

प्राप्तः स्वप्रभया युक्तो भक्तानामधिकप्रियः ।
जाता तद्दर्शनादेव नवचैतन्यनिर्मितिः ॥ २७ ॥

वङ्गभङ्गान्दोलनेन जातं शिथिलबन्धनम् ।
स्वयेहमेति महाचिन्ता श्वेतसाम्राज्यवादिनाम् ॥ २८ ॥

तत्स्थैर्याय कृता यत्ना बहवो भ्रष्टनीतिभिः ।
उपयोगश्चिरोलस्य कृतो बुद्धिपुरःसरम् ॥ २९ ॥

तिलकेन षडब्देषु मंडालेबन्धनालये ।
देशाग्रगत्युपायस्य मननं संततं कृतम् ॥ ३० ॥

आङ्ग्लेतरेषां राष्ट्राणां सहकार्यस्य योजना ।
इंग्लंडे राजकीयस्य पक्षस्याप्यनुकूलता ॥ ३१ ॥

समर्थस्य स्वराज्यस्य भारतस्य समुद्यमे ।
मार्गद्वयस्य सिद्ध्यर्थं कृतं तेन विमर्शनम् ॥ ३२ ॥

बन्धागाराद् विमुक्तेन संदृष्टं सूक्ष्मदर्शिना ।
साम्राज्यवादिनां जालं सर्वभूगोलविस्तृतम् ॥ ३३ ॥

लजपत्रायादिमित्रेभ्यो विज्ञातं तेन यत् तदा ।
मतस्तस्य निराकर्तुं यत्नश्चावश्यको महान् ॥ ३४ ॥

न्यायालये दर्शितं यद् प्रश्नानामुत्तरेष्वपि ।
मूलं मम मतेनासीत् चिरोलाख्यानकस्य तत् ॥ ३५ ॥

प्रोक्तं संक्षेपतः पूर्वं तिलकेनैकसूचना ।
दत्ता सालिसिटरद्वारा चिरोलायापवादिने ॥ ३६ ॥

संकल्पितस्य मार्गस्य तस्यां दिग्दर्शनं कृतम् ।
तदुत्तरस्य कालस्य समयस्तत्र दर्शितः ॥ ३७ ॥

काले तत्र विनिर्दिष्टे चिरोलो नोत्तरं ददौ ।
न्यायालये संप्रविष्टं प्रार्थनापत्रकं ततः ॥ ३८ ॥

चिरोलेन कृतं ग्रन्थे प्राधान्येन समर्थनम् ।
प्रवर्तितस्य घोरस्य दमनस्यैव शासकैः ॥ ३९ ॥

महाराष्ट्रान्दोलनस्य कृतं विकृतवर्णनम् ।
अनिष्टं यदभूत् तत्र तद् वै वालप्रचोदनात् ॥ ४० ॥

निष्कर्षस्तस्य लेखानां तद्ग्रन्थे लिखितस्य च ।
स एव मूलं हत्याया राष्ट्रद्रोहिशिरोमणिः ॥ ४१ ॥

लेखानां रचनाकाले ग्रन्थस्यापि विनिर्मितौ ।
तस्मै दत्तं शासनेन साहाय्यं सर्वतोऽधिकम् ॥ ४२ ॥

न्यायालये पत्रिकायामसत्यान्युद्धृतानि च ।
त्रयोविंशतिवाक्यानि घातकीर्तिकराणि वै ॥ ४३ ॥

षड्वर्गे च विभक्तानि पत्रिकायामनुक्रमात् ।
श्रोतणां सुखबोधाय तन्नामानि ददाम्यहम् ॥ ४४ ॥

गोरक्षणप्रचारस्य गोशालास्थापनस्य च ।
निमित्तेन मुसल्मानद्वेषवृक्षस्य वर्धनम् ॥ ४५ ॥

आङ्ग्लानां पारिपत्याय तरुणानां च शिक्षणम् ।
व्यायाममन्दिरादीनां प्रचारो दुष्टहेतुकः ॥ ४६ ॥

संचयायातिद्रव्यस्य निधयस्तेन निर्मिताः ।
संवर्धिता वादिना ते लोभमोहभयादिभिः ॥ ४७ ॥

दत्तकस्य निमित्तेन ताईतिलकयोरभूत् ।
वादो न्यायालये दीर्घमादौ वालापकारकः ॥ ४८ ॥

तिलकस्य कृतिः सत्यं निर्दोषेति विनिर्णयः ।
दत्तः प्रिवीमण्डलस्थैः प्रश्रेष्ठैर्न्यायमूर्तिभिः ॥ ४९ ॥

निजग्रन्थे चिरोलेन वादिनः शीलदूषणम् ।
वाक्यं समुद्धृतं यत् तु त्यक्तं तद् न्यायमूर्तिभिः ॥ ५० ॥

निर्मूलं च निराधारमग्राह्यं न्यायनिर्णये ।
तेषां विनिर्णये स्पष्टं व्यक्तमेतादृशं मतम् ॥ ५१ ॥

चाफेकरेण विप्रेण रँडायर्स्टवधः कृतः ।
कारणं प्रेरणा तस्य जाता तिलकलेखनात् ॥ ५२ ॥

कृता हिंसा जॅक्सनस्य नासिके नासिक्यमन्दिरे ।
यूना क्षुब्धेन केनापि तस्य सर्वस्य कारणम् ॥ ५३ ॥

वाल एव चिरोलेन साग्रहं प्रतिपादितम् ।
कारयापि तद्वनिद्वासं मण्डालेबन्धनालये ॥ ५४ ॥

अप्रमाणं तर्कशून्यं निर्मूलं प्रतिवादिना ।
द्वेषबुद्ध्या प्रेरितेन संप्रोक्तं वाक्यमुद्धृतम् ॥ ५५ ॥

वादस्वरूपविज्ञाने वादप्रश्नसमीक्षणम् ।
युक्तं तस्माद् विस्तरोऽयं विधानानां मया कृतः ॥ ५६ ॥

वालरायर्टयोः पत्रव्यवहारप्रकाशनात् ।
लोकानां भारते ज्ञातमितरास्वपि भूमिषु ॥ ५७ ॥

संघर्षेऽस्मिन् सार्वभौमभारतीयाधिकारिणः ।
चिरोलस्य यशःप्राप्त्यै येतिरे शासनाश्रया ॥ ५८ ॥

साक्षिलोकपरीक्षायै भारतेऽत्र द्विपक्षयोः ।
स्वीकारायै च तदानीतलिखितानां यथाविधि ॥ ५९ ॥

न्यायमूर्तिर्लंदनस्थो न्ययुङ्क्तैकाधिकारिणम् ।
बुद्धिमन्तं भारतस्य खंडेलावालसंज्ञकम् ॥ ६० ॥

कमीशनेति नाम्ना सा बोधिता कार्यपद्धतिः ।
विधिज्ञपरिभाषायां न्यायकार्योपयोगिनी ॥ ६१ ॥

सप्तमे चाष्टमे मासे चक्रे साक्षिपरीक्षणम् ।
पक्षयोर्वादकार्यस्य खंडेल्वालमहाशयः ॥ ६२ ॥

आसन्नष्टादशैकस्य त्रिचत्वारिंशदेव च ।
अन्यस्य साक्षिसंख्ये वै वादिनः प्रतिवादिनः ॥ ६३ ॥

चतुःशताधिका संख्या लेखानां प्रतिवादिनः ।
तिलकेनाङ्किता लेखाः संख्यातास्त्र शताधिकम् ॥ ६४ ॥

चिरोलेन प्रश्नमाला प्रेषिता तिलकं प्रति ।
दत्तं तेनाविलम्बेन प्रश्नानामुचितोत्तरम् ॥ ६५ ॥

प्रश्नान् कतिपयानत्र चोत्तराण्युद्धराम्यहम् ।
मुद्रितेभ्यो नृसिंहेन रचिते चरितोत्तमे ॥ ६६ ॥

आयर्स्टरैंड्‌जैक्सनानां हिंसा तिलकलेखनात् ।
प्रेरणादन्यहेतोर्वा कृतात्याचारवृत्तिभिः ॥ ६७ ॥

न्यायाधीशस्य बुद्धौ च पंचानां शुद्धमानसे ।
उत्पादनं कुशङ्कानां चिरोलस्यास्त्यभीप्सितम् ॥ ६८ ॥

शिवाज्याख्यक्रमे जाता कदा भवदुपस्थितिः ।
करवीरस्थसंस्थायाः सभासंमेलनादिषु ॥ ६९ ॥

नोपस्थितो कदाप्येव तत्संस्थायाः सभास्वहम् ।
पाध्येप्रसादेनामानौ करवीरनिवासिनौ ॥ ७० ॥

दोषिणाविति मेजूनमासयोर्दण्डितौ च तौ ।
एकचित्रे चित्रितो वै ताभ्यां सह भवानपि ॥ ७१ ॥

उभौ तौ न विजानामि दण्डितौ वा न दण्डितौ।
समूहेऽपि च लोकानां बहुशश्चित्रितोऽस्म्यहम् ॥ ७२ ॥

आख्यातुं तेषु लोकेषु तदस्तित्वं न शक्यते।
दर्शितं नैव केनापि छायाचित्रं च तादृशम् ॥ ७३ ॥

विजापूरकरो दोषी दण्डितो न्यायमूर्तिना।
वर्षे प्रश्नविनिर्दिष्टे विज्ञातं वा त्वया न वा।
नन्वसौ भवतो मित्रं चित्रे च युवयोः स्थितिः ॥ ७४ ॥

पुरुषोऽसौ परिचितो मम स्नेही पुरातनः।
तस्माच्च चित्रे च निर्दिष्टे संभाव्या स्थितिरावयोः ॥ ७५ ॥

दर्शिते तादृशे चित्रे कथयिष्यामि निश्चितम्।
वृत्तान्तस्तद्दण्डनस्य श्रुतो मुक्तेरनन्तरम् ॥ ७६ ॥

जानासि किं मोडकं त्वं न्यायाधीशेन दण्डितम्।
मुम्बान्यायालये पूर्वं पश्चात् कोल्हापुरे पुनः।
उभावप्येकचित्रे च दृश्येते चित्रितौ न किम् ॥ ७७ ॥

जानाम्यहं मोडकं तं मुम्बापुर्यां निवासिनम्।
न स्मराम्येकचित्रस्थां तेन साकं स्थितिं मम ॥ ७८ ॥

न्यायालये दण्डनस्य वृत्तं तस्य श्रुतं मया।
बन्दिवासाद् विमुक्तेन संप्राप्तेन गृहं निजम् ॥ ७९ ॥

मित्रमेळासमाजस्य भटसावरकरादयः।
प्रश्ननिर्दिष्टवर्षे किं नाशिकस्य सभासदः ॥ ८० ॥

दण्डितास्तरुणाः किं ते न्यायेशेन ततः परम्।
दत्तानि किं तत्समाजे व्याख्यानानि च कानिचित्।
भवता नाशिकं गत्वा कारणेनैव केनचित् ॥ ८१ ॥

श्रीगणेशसमारोहे गतोऽहं नाशिकं प्रति ।
व्याख्यानानि च दत्तानि तन्निमित्तसभासु वै ॥ ८२ ॥

यासु हिन्दुमुसल्मानसिक्खा अभ्युपस्थिताः ।
सर्वेषां ज्ञातिपक्षाणामायाताश्च स्त्रियो नराः ॥ ८३ ॥

समाहूतः स्वागताय मित्रमेळाजनैरहम् ।
स्वीकर्तुं च तदातिथ्यं पत्रपुष्पफलादिकम् ।
न व्याख्यानं मया दत्तं मित्रमेळास्थले किल ॥ ८४ ॥

न्यायालये न कस्यापि दण्डनं तत्समासदः ।
जातं पूर्वं ममातिथ्यस्वीकृतेर्मण्डलस्थले ॥ ८५ ॥

कदा प्राप्तं सदस्यत्वं सावर्करभटादिभिः ।
न जानेऽहं श्रुतं वृत्तं दण्डनस्याप्यनन्तरम् ।
कारागाराद् विमुक्तेन मयायातेन वै गृहम् ॥ ८६ ॥

संभाषणे पथस्तेषामनौचित्यं प्रदर्शितम् ।
सन्मार्गस्योपदेशश्च कृतो वैधमतानुगः ॥ ८७ ॥

स्वदेशसेवा कर्तव्या तेन मार्गेण नान्यथा ।
॥ मे तैः सह संबन्धस्तत आसीत् कदाचन ॥ ८८ ॥

प्रश्नोत्तरविमर्शेन पाठकानां भवेदिति ।
आशासेऽहं चिरोलस्यान्तरङ्गस्य निदर्शनम् ॥ ८९ ॥

पञ्चप्राणाहुतीर्दत्त्वा सर्वान्नस्य समर्पणम् ।
कुर्वन्ति ब्राह्मणा नित्यं जगत्स्थितवदात्मने ॥ ९० ॥

स्थालीपुलाकन्यायेन पुलाकेन परीक्षणम् ।
भवेदिति सुविज्ञातं तदन्तःस्थौदनस्य च ॥ ९१ ॥

तेन न्यायेन ग्रन्थेऽस्मिन् पञ्चप्रश्नोत्तरोद्धृतिः ।
पर्याप्ता सा समग्रस्य कुटिलत्वस्य दर्शने ॥ ९२ ॥

परीक्षिता एकपष्टिः साक्षिणः पक्षयोर्द्वयोः ।
कमीशनस्याधिकारे नियुक्तेनाधिकारिणा ॥ ९३ ॥

आरेभेऽन्वेषणं जूलैमासस्यैकादशे दिने ।
एकोनविंशतिदिने निनायान्तं स चाष्टमे ॥ ९४ ॥

करवीरस्य राज्यस्य साक्षिणः समुपस्थिताः ।
चिरोलमतपुष्ट्यर्थं तिलकस्य विरोधिनः ॥ ९५ ॥

डोंगरेजाधवौ तेषु संस्थानेऽतिप्रतिष्ठितौ ।
राष्ट्रीयस्यान्दोलनस्य विनाशाय सहायकौ ॥ ९६ ॥

येन केनापि मार्गेण शासनस्याधिकारिणाम् ।
केन्द्रप्रान्तस्थमुख्यानां सर्वदोत्साहतत्परौ ॥ ९७ ॥

स्वामिनिष्ठौ च तौ मुख्यौ संस्थानस्याधिकारिणौ ।
चिरोलेप्सितकार्यार्थं चक्रतुः स्वनिवेदनम् ॥ ९८ ॥

उवाच जाधवो यत् तत् स तिष्ठन् साक्षिपञ्जरे ।
श्लोकेषु चाल्पसंख्येषु संक्षेपेण वदाम्यहम् ॥ ९९ ॥

दृष्ट्वा कांश्चन लेखान् वै प्राह न्यायालये स्वयम् ।
आज्ञापितो योवनेन मामाहूय विशेषतः ॥ १०० ॥

कर्तव्यमाङ्ग्लभाषायां तेषां भाषान्तरं मया ।
अकुर्व्यहं च लेखानामाङ्ग्लभाषान्तरं ततः ॥ १०१ ॥

आदिष्टोऽहं सधुनिसेन सत्वरं गम्यतामितः ।
शिष्टं द्रष्टुं माननीयं करवीर उपस्थितम् ॥ १०२ ॥

चिरोलेन प्रार्थितोऽहं निजसाह्याय साग्रहम् ।
पारं गन्तुं संकटाब्धेस्तिलकक्षोभितस्य वै ॥ १०३ ॥

ओमित्युक्त्वा स्वीकृता सा विज्ञप्तिस्तत्कृता मया ।
दत्तं तेन स्वभावस्य ह्यतिनिष्ठस्य दर्शनम् ॥ १०४ ॥

अतःपरं प्रवक्ष्येऽहं डोंगरेनामसाक्षिणा ।
प्रश्नेभ्यस्तेन दत्तानामुत्तराणां समाशयम् ॥ १०५ ॥

केसरीपत्रलेखानां कृतं संकलनं मया ।
तेषामिंग्लिशभाषायां कृतं रूपान्तरं तथा ॥ १०६ ॥

चिरोलस्यास्य ग्रन्थस्य कृतं वेषान्तरं मया ।
अखिलं तद् महाराष्ट्र्यां मुद्रितं च प्रकाशितम् ॥ १०७ ॥

न तदर्थं मया प्राप्ता ग्रन्थकर्तुस्तु संमतिः ।
महात्मनश्चिरोलस्य मतमावश्यकं न तत् ॥ १०८ ॥

कृतभाषान्तरग्रन्थाः संस्थानेन स्वसंग्रहे ।
क्रीता वै त्रिशतं दत्त्वा रूप्याणां त्वरितं तदा ॥ १०९ ॥

संस्थानेनात्मनः कोशाद् दत्तं नः पूर्णवेतनम् ।
स्थानान्तरस्यवस्थायाः शुल्कं चैवानुषङ्गिकम् ॥ ११० ॥

प्रवर्तितौ हि बालेन गणेशस्य शिवस्य च ।
समारोहौ महाराष्ट्रे शिवाजिः सर्वपूजितः ॥ १११ ॥

महाराष्ट्रे तथान्येषु प्रदेशेष्वपि भारते ।
हिंसावृत्तिं पुरस्कर्तुं चरितं तेन योजितम् ॥ ११२ ॥

मया नैव श्रुतं तस्य व्याख्यानं तु महोत्सवे ।
पठनात् तस्य लेखानां मतं तस्यानुमीयते ॥ ११३ ॥

नैव प्रत्येकशब्दस्य प्रतिशब्दोऽत्र विद्यते ।
वाक्यस्य चाशयो दत्तः संक्षेपाद् वापि विस्तरात् ॥ ११४ ॥

न विरोधः कृतस्तेन वेदोक्तस्य स्वलेखने ।
संस्थानिका महाराष्ट्रे वेदोक्तस्याधिकारिणः ॥ ११५ ॥

ग्रन्थेऽस्मिन् सह भीष्मेन चिरोलस्तुलितो मया ।
भीष्मो बालब्रह्मचारी सेनानी च पितामहः ॥ ११६ ॥

कस्मिन्नपि कृतस्तेन न प्रहारो निरागसि ।
युद्धादन्यत्र कालेषु ज्ञातं तद् भवता न किम् ॥ ११७ ॥

न ज्ञातं तद् मया किंचित् प्राह प्रश्नोत्तरे च सः ।
लोकोत्तरो महात्मेति युक्तौ शब्दौ च वर्णने ।
चिरोलस्य मया ग्रन्थे पूर्वोक्ते ह्यपि तस्य वै ॥ ११८ ॥

संबन्धो मित्रमेळाख्यसंघेन न कदाचन ।
तिलकस्येति सुस्पष्टं कथितं सर्वसाक्षिभिः ॥ ११९ ॥

गोसावीवाळवैद्यैः प्रतिवादिपुरस्कृतैः ।
प्रश्नोत्तरैस्तथा दत्तैः प्रतिप्रश्नोत्तरैरपि ॥ १२० ॥

असंदिग्धैः पदैरुक्तं न संबन्धः कदाचन ।
मित्रमेळाख्यसंघेन तिलकस्येति निश्चितम् ॥ १२१ ॥

तिलकेनोपदिष्टाश्च मित्रमेळासभासदः ।
निवर्तितुं च तन्मार्गाद् गन्तुं च विधिसंमतम् ।
मार्गं तत्र प्रयातेभ्यो युवकेभ्यो मुहुर्मुहुः ॥ १२२ ॥

रावर्ट्सनाभिधः श्रेष्ठः सचिवो न्यायकर्मणः ।
समाहूतः परीक्षार्थं विशेषन्यायकारिणा ॥ १२३ ॥

पत्रोत्तराणामेवास्ति लेखनस्य प्रथा मम ।
आज्ञापितो लेखनाय तस्य कारणमुच्यते ॥ १२४ ॥

पद्धतिः सर्वलेखानां निर्दिष्टा लिखिताख्यया ।
तिलकोद्दिष्टपत्रेषु योजिता सा मयाज्ञया ।
नाहं ता लिखिता आज्ञा अत्र दर्शयितुं क्षमः ॥ १२५ ॥

पत्रेभ्यो वै चिरोलेन प्रार्थितं शासनं च यत् ।
अस्माभिर्न कृतं तस्य तिलकाय निवेदनम् ॥ १२६ ॥

कौन्सिले चर्चितः प्रश्नस्तत्संबन्धि तु लेखनम् ।
गुप्तं तत् प्रकटीकर्तुमयोग्यमिति मन्यते ॥ १२७ ॥

चिरोलसालिसिट्राय निम्नोक्ता सूचना कृता ।
रायर्ड्सनेनानेतव्यः साक्ष्यसत्संगमे खलु ॥ १२८ ॥

आकृष्टं वै मनस्तस्य सूचनायै तदा किल ।
स्पष्टीकुरुष्व तामद्य प्रार्थितः प्रतिवादिना ।
स च प्रत्युत्तरे प्राह तत् करोमि यदीष्यते ॥ १२९ ॥

प्रतिषिद्धं विलिंगेन गुप्तलेखप्रकाशनम् ।
पक्षद्वये प्रवेष्टव्ये न्यायार्थं प्रीविमण्डलम् ॥ १३० ॥

आह न्यायगृहे साक्षी शासनेन च यत्कृतम् ।
चिरोलस्योपकाराय पैयपितकसुखाप्तये ॥ १३१ ॥

अधिकारिण आदिष्टा शोधनाय च साक्षिणाम् ।
नाशिकेतरविद्रोहिषड्यन्त्रसहभागिषु ॥ १३२ ॥

सेस्विजाइल्सप्रायराणामितरेषां च दर्शनम् ।
नामत्रयं वर्जयित्वा निर्देशं कर्तुमक्षमः ॥ १३३ ॥

अन्येषां वान्यथा नाम्ना शासनस्यानुशासनात् ।
चिरोलप्रातिनिध्येन सर्वं चक्रे प्रशासनम् ॥ १३४ ॥

दैनंदिन्यादिलेखानि स्वास्थ्यायोगाधिकारिणाम् ।
तिलकेन प्रार्थितानि तानि सर्वाणि भस्मसात् ।
कृतानि हि तदास्तित्वं लोपितं शासनाज्ञया ॥ १३५ ॥

संगृहीतं स्वास्थ्यरक्षैश्चरितं तिलकस्य वै ।
मुद्रितं यच्च शासनेन विद्यते संनिधौ मम ॥ १३६ ॥

काळसंपादकः ख्यातः शिवरामः परीक्षितः ।
अत्यल्पमाशयं वक्ष्ये तत्प्रोक्तप्रतिपादनात् ॥ १३७ ॥

मम पत्रस्य काळस्य प्रणालिर्निश्चिता मया ।
तिलकस्य विचाराणां प्रणालेः पृथगेव सा ॥ १३८ ॥

मदीयं मुखपत्रं तत् तिलकस्येति यद् वचः।
निराधारमसत्यं तदुपेक्ष्यं न्यायदर्शिभिः ॥ १३९ ॥

परीक्षितः केळकरः साक्षीति न्यायमन्दिरे।
पत्रस्य लोकमान्यस्य संपादकपदस्थितः ॥ १४० ॥

निर्णीता मद्विचाराणां दिशा नित्यं मया स्वयम्।
सामान्यतो विचारा मे तिलकस्यापि संमताः ॥ १४१ ॥

तिलकेन क्वचिद् मह्यं न प्रोक्ता कार्यपद्धतिः।
आत्मना सा निश्चितैव विचारेण मया सदा ॥ १४२ ॥

बालानुपस्थितेस्तस्मिन् दीर्घकालेऽतिभीषणे।
लिखितं वृत्तपत्रे यदभिप्रेतं मया च तत् ॥ १४३ ॥

वर्णितं यत् तरङ्गोऽस्मिन् मन्ये नेपथ्यकर्मवत्।
चिरोलदृश्यकाव्यस्य प्रयोगो लंदनेऽभवत् ॥ १४४ ॥

भवेत् तरङ्गे चान्यस्मिंस्तत्प्रयोगस्य दर्शनम्।
कुर्वेऽस्यान्तं तरङ्गस्य नत्वा विघ्नविनायकम् ॥ १४५ ॥

नेपथ्यान्ते भरतमुनिना सूचितं मङ्गलं तद्
ध्याये भक्त्या गणपतिमहं विघ्ननाशाय देवम्।
सिद्धिप्राप्त्यै करधृतकृतेर्माधवः सूत्रधारो
भूयादेतत् तिलकचरितं संस्कृतं लोकमान्यम् ॥ १४६ ॥

इति माधवविरचिते श्रीतिलकयशोऽर्णवे चिरोलनाट्यनेपथ्यकर्मनामा
षट्पष्टितमस्तरङ्गः।

## सप्तषष्टितमस्तरङ्गः

अन्तं यातं यस्य नेपथ्यकर्म
मुम्बापुर्यां भारते सिन्धुतीरे ।
प्रारम्भस्तस्य यर्वेद्वयान्ते
नाट्यस्यासील् लंदने न्यायधाम्नि ॥ १ ॥

आद्यमासान्त्यसप्ताहादागते प्रथमेऽह्नि ।
ऊर्ध्वं नीता जवनिका नाट्यारम्भनिदर्शिनी ॥ २ ॥

ऊनविंशे शाके चैस्ते सावत्संख्यशतोत्तरे ।
पूर्वं विनिश्चिते काले मुम्बय्यां न्यायमन्दिरे ॥ ३ ॥

न्यायाधीशो डार्लिंगः पंचशिष्टसमावृतः ।
सूत्रधारो नाटकस्य न्यायसिंहासने स्थितः ॥ ४ ॥

रंगस्थलप्रवेशस्य शोभायै परिचारकाः ।
चित्रवेषधराः स्तब्धाः पटे चित्रार्पिता इव ॥ ५ ॥

नायकस्तिलकस्तत्र चिरोलः खलनायकः ।
तयोः प्रतिनिधित्वेन स्थितौ सायमनकार्सनौ ॥ ६ ॥

स्पेन्सो सायमनस्याभूदधिवक्ता सहायकः ।
अभूतां द्वौ कार्सनस्य न्यायकार्यसहायकौ ॥ ७ ॥

डौनर्जान्सः सायमनस्य पूर्वकर्मपटुः सुधीः ।
सोम्सजोन्सौ कार्सनस्य तत्कर्मनिपुणावुभौ ॥ ८ ॥

समस्तमाह्निकं कार्यं वृत्तं यद् न्यायमन्दिरे ।
एकाङ्कस्य कथावस्तु बोद्धव्यं सुज्ञपाठकैः ॥ ९ ॥

दशाङ्कत्वं नाटकस्य कालाद् दशदिनात्मकात् ।
अन्याय्यनिर्णयात् संज्ञा तस्य न्यायविडम्बनम् ॥ १० ॥

तथाद्यस्य समारम्भः स्पेन्सेन विहितस्तदा ।
समादेशाद् न्यायमूर्तेः पठित्वा प्रार्थिपत्रकम् ॥ ११ ॥

स्वभाषणे सायमनेन संक्षिप्तार्थस्य विस्तरः ।
स्पष्टीकर्तुं विवादेऽस्मिन् कृतस्तिलकभूमिकाम् ॥ १२ ॥

ततः सायमनो भाष्यं युक्तितर्कसमन्वितम् ।
चकार प्रार्थिपत्रस्य विधानानामनुक्रमात् ॥ १३ ॥

लेखाः प्रकाशिताः पूर्वं केचिद् टाइम्सनामके ।
स्तनयित्न्विति विख्याते लंदनस्थाङ्ग्लदैनिके ॥ १४ ॥

संगृहीताश्चिरोलेन लेखा ये पूर्ववर्णिताः ।
एकस्मिन् पुस्तके सर्वे भारतोत्थानदूषकाः ॥ १५ ॥

यदा वार्ताहरो भूत्वा चिरोलो भारतं गतः ।
तत्कृतं वर्णनं सर्वं राज्यशासकपोषकम् ॥ १६ ॥

आरोपांस्तिलको वादी चिक्षेप प्रतिवादिनि ।
चिरोले येन लेखेषु निन्दितस्तिलको भृशम् ॥ १७ ॥

समुद्धृतानि वाक्यानि तद्ग्रन्थात् प्रार्थिपत्रके ।
वारिंग्यहननोद्देशप्रधानानि च कानिचित् ॥ १८ ॥

षट्सु भागेषु दृष्टानि वादिनः प्रार्थिपत्रके ।
न्यायमूर्तेर्निर्णयाय विभक्तानि पृथक् पृथक् ॥ १९ ॥

तिलकस्य यशःकार्यं कर्तुमेव मलीमसम् ।
असत्यानि विधानानि कृतानि प्रतिवादिना ॥ २० ॥

प्रतिज्ञायद्धशिष्टानां परिज्ञानाय सर्वथा ।
सायमनो न्यायमूर्तेर्न्यवेदयत् व्यनज्म्यहम् ॥ २१ ॥

वादिनस्तिलकस्याद्य मितशब्दैर्यथोचितम् ।
आवश्यकः परिचयो वादिशीलस्य सम्मतं ॥ २२ ॥

प्रतिवादिविधानं हि वादिशीलविघातकम् ।
नास्ति वास्तीति निर्णेतुं तदेकं मुख्यसाधनम् ॥ २३ ॥

अन्धस्यास्ति यथा यष्टिः साधनं मार्गदर्शने ।
व्यक्तिशीलपरिज्ञानं साधनं न्यायनिर्णये ॥ २४ ॥

प्रतिष्ठाहानिमूलं हि यत्रासीद् वादकारणम् ।
तज्ज्ञानं निकषप्रायं निश्चेतुं शीलशुद्धताम् ॥ २५ ॥

वादिमस्तिलकस्यास्ति द्विपञ्चाशन्मितं वयः ।
एतादृशो वृद्ध इति भारते मन्यते जनैः ॥ २६ ॥

लोककल्याणकार्येषु रतिस्तस्य स्वभावजा ।
परोपकृतिधर्मेषु व्यतीतं तद्वयो बहु ॥ २७ ॥

उपप्लविनमित्याहुः केचिद् नेमस्तवृत्तयः ।
नृपाङ्गणगताः केचिद् वदन्ति तमुपद्रवम् ॥ २८ ॥

नूतनशालां स्थापयित्वा महाविद्यालयं तथा ।
कृता या महती सेवा विश्रुता भारतेऽखिले ॥ २९ ॥

व्याधिग्रस्तोपचारार्थं ग्रान्थिकज्वरसंकटे ।
व्यापृतस्तिलको धीरः पुण्यपुर्यामहर्निशम् ॥ ३० ॥

सस्पृहा अधुना सर्वे भारतीयाः समुन्नतौ ।
स्वदेशस्येति विख्यातं शासनस्याधिकारिभिः ॥ ३१ ॥

समाधातुं स्पृहां तेषामधुनैव पुरस्कृता ।
अधिकारस्य संप्राप्त्यै सार्वभौमेन योजना ॥ ३२ ॥

अवाप तिलकः कीर्तिं विश्वपण्डितसंमताम् ।
ज्ञातेति सर्वविद्यानामाचार्यो वेदवित्तमः ॥ ३३ ॥

सायमनः कथयामास बालो ब्राह्मकुलोद्भवः ।
जातो रत्नगिरिग्रामे रत्नाकरतटस्थिते ॥ ३४ ॥

इतिहासे भारतस्य ब्राह्मणस्थानमुत्तमम् ।
विद्याचारित्र्यवक्तृत्वबुद्धिमत्त्वादिकारणैः ॥ ३५ ॥

इतिहासे स्वराज्यस्य भूपालेन शिवाजिना ।
निर्मितेऽलंकृतं काले प्रधानस्थानमुत्तरे ॥ ३६ ॥

कोङ्कणस्थैर्भटोपाह्वैः शूरै रणधुरंधरैः ।
पेशवे इति विख्यातैरितिहासे यशुश्रुतैः ॥ ३७ ॥

जाता विप्रकुले तस्मिन् रानडेतिलकादयः ।
प्राप्तं यैः सर्वलोकेषु संमानस्थानमद्‌भुतम् ॥ ३८ ॥

न्यायाधीशस्य बोधाय कृत्वेदं वादिवर्णनम् ।
स्पष्टीकर्तुं ततो वादं सायमनस्तत्परोऽवदत् ॥ ३९ ॥

कथयेऽनुक्रमेणाहं विषयान् वादद्योतकान् ।
श्रूयतां तत् सावधानं सज्जनैर्न्यायकर्तृभिः ॥ ४० ॥

गोसंरक्षणमुद्दिश्य तिलकेन कृतं च यत् ।
लिखितं केसरीपत्रे सर्वं तद् द्वेषमूलकम् ॥ ४१ ॥

मुसल्मानसमाजस्य हिन्दुधर्माभिमानिना ।
इति प्रोक्तं चिरोलेन तिलकापायकारकम् ॥ ४२ ॥

अर्चन्ति भारते सर्वे हिन्दुधर्मानुयायिनः ।
गोमातरं सुखं प्राप्तुमैहिकं पारलौकिकम् ॥ ४३ ॥

आश्चर्यास्पदमित्येतत् सर्वथा वा जुगुप्सितम् ।
मांसलोलुपजिह्वस्य प्राणिहिंसोपजीविनः ॥ ४४ ॥

व्यायामशाला वै बह्व्यः स्थापितास्तिलकेन ताः ।
युवकेषु महाराष्ट्रे युयुत्सायाश्च सृष्टये ॥ ४५ ॥

बलादन्यायमार्गेण वादिना द्रव्यसंग्रहः ।
आहृत्य दीनभाग्येभ्यः काले काले कृतो धनम् ॥ ४६ ॥

वादिना क्लेशिता ताई विधवा मित्रगेहिनी ।
तस्या इच्छामनादृत्य दत्तकस्य हितैषिणा ॥ ४७ ॥

विषयः पञ्चमो घोरो हत्या गौराधिकारिणोः ।
रँडस्यायर्स्टनाम्नश्च सम्राज्ञीहीरकोत्सवे ॥ ४८ ॥

जॅक्सनस्यापि घातस्य तिलकः कारणं खलु ।
प्रमादविपुले ग्रन्थे प्रवादी प्रत्यपादयत् ॥ ४९ ॥

उभाभ्यामेव पक्षाभ्यां बहुलेखाः पुरस्कृताः ।
व्यवस्थया रक्षितास्ते कपाटे चेतरे स्थले ॥ ५० ॥

वाचनं खलु सर्वेषां शक्यमावश्यकं न वा ।
यथाकालं दर्शये तत् चिन्तनीयं च यद् भवेत् ॥ ५१ ॥

तिलकः स्थापयामास धेनुरक्षणमण्डलम् ।
कारणं कलहस्याभूद् हिन्दुम्लेच्छसमाजयोः ॥ ५२ ॥

आरोपोऽयं कृतो ग्रन्थे वादिनोऽप्ययशस्करः ।
सर्वथैव निराधारश्चिरोलेनाविवेकिना ॥ ५३ ॥

धेनुसेवामण्डलस्य स्थापको नैव वाचयम् ।
हिन्दुमुस्लिमसंघर्ष उद्भूतो न ततः खलु ॥ ५४ ॥

अनेकानि विधानानि तिलकस्य यशोऽमलम् ।
कर्तुं कलङ्कितं बुद्ध्या कृतानि प्रतिवादिना ॥ ५५ ॥

अपृच्छदेकं न्यायेशः प्रश्नं तं वाग्मिनं प्रति ।
कृतं वादियशोगानं भवद्भिर्भाषणे भृशम् ॥ ५६ ॥

चिरोलस्यापि कर्तव्यमस्मद्बोधाय वर्णनम् ।
न ज्ञायते मयान्येषां कोऽसौ वा वर्तने कथम् ॥ ५७ ॥

प्रेषितो वृत्तपत्राणामित्येव ज्ञायते मया ।
अवाप मान्यतां स्तम्भलेखकैरिति विश्रुतम् ॥ ५८ ॥

भारते गमनं तस्य प्रारब्धं केन हेतुना ।
न्यायाधीशः पुनस्तस्य पृच्छां चक्रे समुत्सुकः ॥ ५९ ॥

अस्य ग्रन्थस्य कर्तासौ पृथ्वीपर्यटनं कृतम् ।
वृत्तपत्रस्य सेवार्थं तेनैवेति श्रुतं मया ॥ ६० ॥

तदर्थं हि कृतं तेन भारतस्यापि दर्शनम् ।
इति मन्येऽधिकं ज्ञानं दुर्दैवान्नास्ति मेऽधुना ॥ ६१ ॥

एवं प्रत्यवदद् वाग्मी न्यायाधीशं महाशयम् ।
चिरोलस्तत्रमुत्कर्णं सोत्साहं श्रोतुमिच्छया ॥ ६२ ॥

गणेशस्य शिवाजेश्च द्वयोरुत्सवयोरपि ।
प्रवर्तनं महाराष्ट्रे तिलकेन कृतं स्वयम् ॥ ६३ ॥

प्रथमो धर्मकार्यार्थमन्यो राष्ट्रीयहेतुना ।
प्रवर्तिताविति स्पष्टं कृतं केसरिपत्रके ॥ ६४ ॥

राजद्रोहप्रसारस्य हेतुना तिलकोद्यमः ।
अयं सर्व इति प्रोक्तं स्वग्रन्थे प्रतिवादिना ॥ ६५ ॥

अविवेकि विधानं तद् निराधारं प्रजल्पिनः ।
लेखकस्य मतिभ्रंशो सावेशं सायमनोऽवदत् ॥ ६६ ॥

क्रामवेलस्मारकादिदृष्टान्तान् प्रत्यपादयत् ।
दर्शयित्वा सायमनो वै न्यायाधीशाय धीमते ॥ ६७ ॥

श्रीगणेशस्य पूजाया दशरात्रमहोत्सवः ।
अतिप्राचीनकालीनो विद्यतेऽखिलभारते ॥ ६८ ॥

एतं रूपान्तरं किंचित् सामाजिकमहोत्सवे ।
कुलाचारिकरूपस्य प्राचीनस्य महात्मना ॥ ६९ ॥

तत्र दृष्टं चिरोलेन छिद्रं वै पापदर्शिना ।
तिलकद्वेषदुष्टेन राजद्रोहप्रवर्धकम् ॥ ७० ॥

तिलकेनार्जितं द्रव्यमन्यायेन जनादिति ।
लिखितं तन्निराधारं ग्रन्थे स्वे प्रतिवादिना ॥ ७१ ॥

तिलकः कारणं मुख्यं हत्याया अधिकारिणोः ।
रँडस्य च सपत्नीकायर्स्टस्य च महोत्सवे ॥ ७२ ॥

रँडहत्यानिर्णये स्वे न्यायाधीशेन यद् मतम् ।
दत्तं तत् तु तिरस्कृत्य वाल एवेति कारणम् ॥ ७३ ॥

तस्या इति निजग्रन्थे लिलेख च निरर्गलः ।
मृतो रविर्गतप्राणो यथा कश्चिद् वदेत् सदा ॥ ७४ ॥

हत्या साभूज् जॅक्सनस्य वाले मण्डालये सति ।
कारागारे महादेवो तथापि प्रतिवादिना ॥ ७५ ॥

तिलकः कारणं तस्या आग्रहेण समर्थितम् ।
मूर्खचित्तसमाधानं कपाले लिख मा प्रभो ॥ ७६ ॥

इति नीतिमहावाक्यं समीचीनं च सर्वथा ।
न्यायेशं मनसोद्विग्नः प्राह सायमनस्तदा ॥ ७७ ॥

आताया नासिके दूरे हत्याया जॅक्सनस्य च ।
क्षद्रस्य एव संबन्धः पुरुषेणापि केनचित् ॥ ७८ ॥

कारागारे निबद्धेन महादेवोऽधिकारिभिः ।
वर्षपदकमितं कालं न्यायाधीशस्य निर्णयात् ॥ ७९ ॥

न हि प्रमाणवित् कश्चिच् श्रद्धातुं शक्नुयात् क्षणम् ।
लिखितं यच् चिरोलेन स्वग्रन्थे दुष्टबुद्धिना ॥ ८० ॥

जन्मान्धेन कृतं यद् वै वस्तुरङ्गस्य वर्णनम् ।
त्याज्यं तत् तत्क्षणं सर्वैर्दृष्टिमद्भिरसंशयम् ॥ ८१ ॥

कृत्वैवं पद्धविचाराणां भाष्यमल्पं च युक्तिमत् ।
अन्तं नीतं सायमनेन द्वितीयेऽहनि भाषणम् ॥ ८२ ॥

साक्षिणः स्थानमायातुं प्रार्थयामास सायमनः ।
तिलकं वादिनं पश्चात् कृतारोपविमुक्तये ॥ ८३ ॥

इति माधवविरचिते श्रीतिलकयशोऽर्णवे न्यायविडम्बननाटकस्य प्रथमाङ्कोभूतः
सप्तषष्टितमस्तरङ्गः ।

# अष्टषष्टितमस्तरङ्गः

तत्पश्चात् सायमनः प्राह वादिनं तिलकं प्रति ।
आयातु साक्षिणः स्थानं प्रश्नानां दातुमुत्तरम् ॥ १ ॥

महाशयः कार्सनाख्यश्चाधिवक्ता भयंकरः ।
प्रतिप्रश्नावधिस्तस्य दिव्यमेवातिदुर्गमम् ॥ २ ॥

श्रुत्वा वचः सायमनस्य सलीलं प्राह कार्सनः ।
साक्षिप्रश्नपरीक्षायां न न्यूनोऽस्ति भवानपि ॥ ३ ॥

सविनोदावभूतां तौ प्रशंसन्तौ परस्परम् ।
स्मारयन्तौ प्रेक्षकांश्च 'अहो रूपमहो ध्वनिः' ॥ ४ ॥

पञ्चतन्त्रकथाप्रोक्तं भाषणं गर्दभोष्ट्रयोः ।
गान्धर्वस्वरशालीयं ध्वनिमाधुर्यशंसकम् ॥ ५ ॥

आञ्जः स्पेन्सः सायमनस्य सहकारी कुशाग्रधीः ।
आदौ पप्रच्छ तं प्रश्नान् साक्षिस्थानसमागतम् ॥ ६ ॥

तत्प्रश्नान्ते समारब्धं कार्सनेन परीक्षणम् ।
पृष्ट्वा किमर्थमायात आङ्ग्लन्यायालयं प्रति ॥ ७ ॥

अपशब्दप्रभूतानि निर्णयाद् अवरस्य सः ।
वाचयामास वाक्यानि तिलको यत्र गर्हितः ॥ ८ ॥

न चिरोलकृतो ग्रन्थ आक्षेपार्हो यथाशयः ।
न्यायाधीशोक्तवाक्यानां तद्यशोहानिकारकः ॥ ९ ॥

एतत् सर्वं समुत्पन्नं भारते किं कृतं त्वया ।
तन्निषेधाय देशे स्वे तिलकं प्राह कार्सनः ॥ १० ॥

वाचनान्ते निर्णयस्य लब्धो नावसरो मया ।
दातुं प्रत्युत्तरं तस्मै तिलकः प्राह कार्सनम् ॥ ११ ॥

स्वातन्त्र्यं मानवस्यास्ति संमतं मतदर्शने ।
न कर्तृत्वाधिरोपार्थं कस्यचिन्निन्द्यकर्मणः ॥ १२ ॥

विशिष्टव्यक्तिहत्यायाः कर्ता वायं प्रचोदकः ।
इत्याशयं वै यद् वाक्यं सदोषं शास्त्रविन्मते ॥ १३ ॥

न्यायमूर्तैर्विधानानि दर्शयन्तीव तन्मतम् ।
सोढव्यस्तद्विधो दोषो दण्डनीतिविदां मते ॥ १४ ॥

विरोधस्य विधानानां वैलक्षण्यं प्रतीयते ।
न्यायमूर्तैर्विनिन्द्योक्तिसंमहात् निर्णये कृतात् ॥ १५ ॥

दत्त्वैवं तर्कसंपन्नमुत्तरं च सयुक्तिकम् ।
कूटप्रश्नः कार्सनस्य वादिना विफलीकृतः ॥ १६ ॥

क्वचित् कालेऽविवेकस्य दुर्लक्ष्यत्वं वरं भवेत् ।
गम्भीरता सुरक्षार्थं शान्तचित्तविवेकिनः ॥ १७ ॥

भारते न भवेत् तेन लोकानां तादृशो भ्रमः ।
यादृशो भिन्नदेशेषु ह्याङ्ग्लसाम्राज्यवर्तिषु ॥ १८ ॥

स्वयं पश्यन्ति मां नित्यं भारते हिन्दबान्धवाः ।
पठन्ति च स्वयं वृत्तपत्रे यल्लिखितं मया ॥ १९ ॥

साम्राज्ये चाङ्ग्लदेशे च विपरीतास्ति वै स्थितिः ।
लंदनादाङ्ग्लभाषायां वदेद् वार्ताहरो यथा ॥ २० ॥

शिरोधार्यं भवेत् तेषां स्वीकार्यमाप्तवाक्यवत् ।
एवं तेषां भवेज् ज्ञानं विषये हिन्दवासिनाम् ॥ २१ ॥

आङ्ग्लदेशस्थसंस्थानां विशेषेण यथादरः ।
न हिन्ददेशसंस्थानां दृश्यते तु तथादरः ॥ २२ ॥

आङ्ग्लभाषे सादराणां तत्साम्राज्यनिवासिनाम् ।
आनुकूल्यमवाप्त्यर्थं संप्राप्तोऽहमिहाधुना ॥ २३ ॥

चिरोलस्य विधानानां प्रभावो हिन्दवन्धुषु ।
तप्तायसि जलस्यैव क्षणिको नास्ति संशयः ॥ २४ ॥

दूरस्थिताङ्ग्ललोकेषु तत्प्रसारोऽल्पसा भवेत् ।
तैलबिन्दोः पृष्ठभागे यथा पात्रस्थिताम्भसाम् ॥ २५ ॥

वादी प्रदर्शयामास चाङ्ग्लभूप्राप्तिकारणम् ।
प्रश्नानां कार्सनस्यैषां निमित्तेन हृदि स्थितम् ॥ २६ ॥

प्रतिद्वन्द्वी कार्सनस्तं पप्रच्छ तिलकं पुनः ।
किमर्थं केसरीपत्र आङ्ग्लराज्यं विनिन्दितम् ॥ २७ ॥

न निन्दितं ह्याङ्ग्लराज्यं निन्दिता अधिकारिणः ।
यत्प्रमादेन लोकानामापत्तिर्जायते सदा ॥ २८ ॥

शासनं मूर्तिमल्लोके ह्यधिकारिस्वरूपि तत् ।
विनिन्द्यते शासनं वै निन्दया चाधिकारिणाम् ॥ २९ ॥

निजप्रश्नस्य पुष्ट्यर्थं सत्वरं कार्सनोऽवदत् ।
कुण्ठितं तिलकं मत्वा स्वयंमन्यः कुशाग्रधीः ॥ ३० ॥

तिलकोऽपि स्थितप्रज्ञः ददौ प्रत्युत्तरं तदा ।
सुबुद्धिरपि यच्छ्रुत्वा प्राश्निकः स्तिमितोऽभवत् ॥ ३१ ॥

कक्षामयानि विद्यन्ते भवनानि महीतले ।
कक्षा भवनमेवेति नैव केनापि मन्यते ॥ ३२ ॥

लोकेऽस्त्यवयवी प्राणी ब्रह्माण्डे प्रभुनिर्मिते ।
संपूर्णत्वे प्राणिसंज्ञा तदंशोऽवयवो मतः ॥ ३३ ॥

अलंकारविशेषोऽयं केषांचिच्छास्त्रिणां मते ।
अंशोल्लेखः प्रपूर्णस्य तथा तस्य विपर्ययः ॥ ३४ ॥

तिलकस्याशयं स्पष्टं कर्तुमेव मयोदितः ।
सुप्रसिद्धः शास्त्रचारुः शब्दमीमांसकैः कृतः ॥ ३५ ॥

मतः पूर्णस्य पर्यायश्चांशोल्लेखोऽपि पण्डितैः ।
वैपरीत्यं तयोस्तद्वद् भाषालंकारवेदिभिः ॥ ३६ ॥

अर्थस्य निश्चयस्तत्र संदर्भादेव जायते ।
संभ्रमो नैव सुज्ञानां भवेदर्थविनिर्णये ॥ ३७ ॥

दृष्टान्तेनापि चान्येन तदुत्तरसमर्थनम् ।
कर्तुं शक्यं च भेदेन वृक्षवृक्षाङ्गयोरपि ॥ ३८ ॥

पत्रपुष्पफलैरेकः सशाखो द्रुम उच्यते ।
अङ्गेषु केषुचित् तस्य द्रुमशब्दो न युज्यते ॥ ३९ ॥

कार्सनः स्फोटकद्रव्यगोलानां विषये बहून् ।
प्रश्नान् रहस्यजिज्ञासुः पप्रच्छ तिलकं प्रति ॥ ४० ॥

नित्यं शंसति गोहत्यां पिशुनश्चापभाषते ।
यो वा स्वयं प्राणघाती मानवस्य निरागसः ॥ ४१ ॥

तयोर्मध्ये कोऽधिकोऽस्ति न्यूनो वा वद सत्वरम् ।
विचिन्त्य तारतम्येन प्रश्नानामुत्तरं मम ॥ ४२ ॥

यद् गृहीतं पूर्वभागे त्वया प्रश्नस्य नास्ति मे ।
संमतं किंचिदेवापि तस्मान्नोत्तरसंभवः ॥ ४३ ॥

कनीयान् शंसकः पापी किमस्ति प्राणघातकात् ।
कथितं पूर्वभागे यत् सत्यं चेदिति मन्यते ॥ ४४ ॥

प्रश्नोक्तस्यानुमानस्य शक्यता स्यादनिश्चिता ।
पततेऽल्पांशमात्रेण संकेतार्थेन सूचितम् ॥ ४५ ॥

उत्तरेणोद्विग्नचेताः साग्रहं कार्सनोऽवदत् ।
अवधारय निम्नोक्तां मनस्येव परिस्थितिम् ॥ ४६ ॥

एको विद्वान् न्यायमूर्तिरायोगेऽन्वेषणे स्थितः ।
समन्वितः पंचजनैः प्रतिज्ञापद्धदाङ्कैः ॥ ४७ ॥

विशेषोत्तरदायित्वमनुभूतं स्वयं मया ।
मतिमन्तोऽपि मत्तुल्याः शतशः सन्ति भारते ॥ ६० ॥

यांधानां क्षेपको वृत्तपत्रयोः न स्तुतो मम ।
कृता तुला दोषिणां तु भिन्नानां लेखकैरिह ॥ ६१ ॥

संपादकोऽस्मि पत्रस्य तस्माद्य मयि संभवेत् ।
पूर्णमुत्तरदायित्वं मुद्रितस्याखिलस्य ह ॥ ६२ ॥

रहस्यं यांधगोलानामिति लेखः प्रकाशितः ।
पत्रे मम ततस्तस्य याथार्थ्यं स्वीकरोम्यहम् ॥ ६३ ॥

अराजकस्य सिद्धान्तो लेखकेनैव वर्णितः ।
योग्यं तेन कृतं कर्म न तेन प्रतिपादितम् ॥ ६४ ॥

रैंडायर्स्टप्राणहत्यादोषस्य प्रतिपत्तये ।
कार्सनस्तिलकं प्रश्नान् प्रष्टुमेवोपचक्रमे ॥ ६५ ॥

संपृष्टस्तिलकः प्राह मया रैंडो विनिन्दितः ।
तथापि सहकारित्वं तस्य कार्ये कृतं मया ॥ ६६ ॥

मया दृष्टः पुण्यपुर्यामप्रसन्नमुखः सदा ।
दुराग्रही मतं श्रोतुं स परस्य पराङ्मुखः ॥ ६७ ॥

पुणेस्थितान् समुद्धर्तुं ग्रन्थिकज्वरसंकटात् ।
प्रयुक्ताः शमनोपाया बभूवुर्जनतापदाः ॥ ६८ ॥

उपायान् केवलापायान् पीडाग्रस्तजनास्तदा ।
मेनिरे प्रार्थयामासु रैंडं तच्छमनाय च ॥ ६९ ॥

दृष्टप्रतिक्रियाभावात् तेषु ये त्वाततायिनः ।
अधिकारिद्वेषिणस्तु जाताः केचिद् मते मम ॥ ७० ॥

एता हत्या द्वेषिभिस्तैः कृत्वा पूर्वनियोजनम् ।
रैंडायर्स्टप्राणहत्या व्यक्तीनामेव दुष्कृतिः ॥ ७१ ॥

हितं किं मन्यते तस्य निर्देशकरणादिह ।
न हि साध्यं हितं किंचिद् व्यक्त्युद्दिष्टाभिमापणात् ॥ ८४ ॥

करोमि नैव निर्देशं विशिष्टव्यक्तिबोधकम् ।
भवद्दर्शितलेखेषु सायर्लैदपरिस्थितिः ।
उल्लेखिता ततो मन्ये तन्निर्देशं सकारणम् ॥ ८५ ॥

देशभक्त्यतिरेकः किं यांवक्षेपो मते न ते ।
प्रश्नस्य तिलकस्तस्य नैव नैवोत्तरेऽवदत् ॥ ८६ ॥

उपक्रमो वङ्गभङ्गाद् यांवक्षेपस्य भारते ।
उत्पद्यन्ते तत्प्रथायामुग्रमार्गास्तथाविधाः ॥ ८७ ॥

अल्स्टरे यच्च वृत्तं वै युष्मद्देशे पुरा किल ।
अभवद् भ्रान्ते सर्वमत्याचारिप्रयोजितम् ॥ ८८ ॥

अतिरेकोऽस्ति वा नास्ति निर्णयो राष्ट्रसंमतः ।
अन्तिमः पूजितो यत्र प्रजातन्त्रं प्रवर्तते ॥ ८९ ॥

अराजकोपयुक्तानि वङ्गस्यान्दोलने भृशम् ।
कार्यसिद्ध्यै साधनानि योजितान्येव चालकैः ॥ ९० ॥

महाहिंद्सभाध्येष्टा वङ्गभङ्गप्रवर्तकाः ।
प्रवृत्ता एककार्येऽपि तस्थुर्दूरमराजकात् ॥ ९१ ॥

प्रश्नस्य कार्सनस्यासौ ददौ तिलक उत्तरम् ।
सार्वभौमे हि राज्येऽस्मिन् मन्निष्ठा वर्तते सदा ॥ ९२ ॥

आत्मसंभावितैर्लोकैः पंजाबेषु प्रकाशितम् ।
शासकानुमतं चैकं राजनिष्ठानिवेदनम् ॥ ९३ ॥

पत्रके स्वाक्षरीं कृत्वा लोकबुद्धिविरोधिनि ।
अत्याग्रहाद् शासकानां ते भूता आत्मवञ्चकाः ॥ ९४ ॥

पंजाबदेशभक्तानां स्वार्थत्यागो महानभूत् ।
दौर्बल्याद् पञ्चकानां तद्यशश्चन्द्रः कलङ्कितः ॥ ९५ ॥

तस्मात् तेषां कृतिर्जाता गर्हणीयैव भारते ।
व्यक्तं लोकमतं पत्रे लेखकेन ममापि तत् ॥ ९६ ॥

परित्यक्ता जीवितस्य वाञ्छा प्राप्त्यै विदेहिभिः ।
जन्मसिद्धस्वराज्यस्य धीरयतनरोत्तमैः ॥ ९७ ॥

*उक्ताशयद्योतकस्य मम लेखस्य संमतिः ।*
निःशस्त्रप्रतिकारेण कर्तव्योऽस्ति तदुद्यमः ॥ ९८ ॥

अन्याय्यस्य विधेर्भङ्ग एकोपायो विधीयते ।
स्थापनार्थं व्यवस्थाया विनाशाय च दुःस्थितेः ॥ ९९ ॥

निर्दिष्टोऽयं मया मार्गश्चायोग्यश्चर्मचक्षुषाम् ।
प्रज्ञाचक्षुष्मतां योग्यः कण्टकेनैव कण्टकः ॥ १०० ॥

संरक्षकप्रतीकारश्चान्यायपरिमार्जकः ।
न्यायमार्गे स्थापयति न्याय्यं यद्य पुरातनम् ॥ १०१ ॥

शासनाशाप्रविष्टस्य न्याय्यस्यं दृश्यते जनैः ।
दण्डो धृतः शासनेन तदर्थं चालितः सदा ॥ १०२ ॥

साध्यः शास्त्रपरीवर्तः प्रतिकारतपस्विभिः ।
न तु शस्त्रास्त्रमार्गेण शान्तिमार्गेण सर्वथा ॥ १०३ ॥

देहदण्डप्रदानेन संतोषेणैव सर्वथा ।
प्रायश्चित्तं जनः कृत्वा पापमुक्तो भविष्यति ॥ १०४ ॥

नाहं ददाम्युत्तराणि यात्वा साक्षिस्थलं प्रति ।
उक्त्वा विपिनचन्द्रेण भग्नाशा न्यायमन्दिरे ॥ १०५ ॥

कारावासः प्रतिज्ञायाः स्वीकृतः पालनाय ह ।
शुद्धधर्मात्मतुष्टेन सानन्दं धैर्यमेरुणा ॥ १०६ ॥

सादये तेन धृतं मौनं समस्तं संमतं मम ।
संच्छिन्नसंशयो लोको जातस्तेनैव सत्वरम् ॥ १०७ ॥

अस्ति यांत्रज्ञानरूपमित्युक्तं भवता च यत् ।
अभिप्रेतार्थसंबोधो न सम्यग् जायते मम ॥ १०८ ॥

दर्शनीयं भवेद् मूर्तं ज्ञानं गुप्तमिति स्थितिः ।
प्रकटं मूर्तमित्युक्तं ज्ञानं दृष्ट्यतिगं भवेत् ॥ १०९ ॥

यांत्रस्य ज्ञानरूपत्वात् तदध्यायस्त्वया स्तुतः ।
खण्डनं कार्सनोक्तस्य कृतं बालेन नेति च ॥ ११० ॥

न त्वदुक्तं समीचीनं संमतं न ममापि च ।
न्यायासनस्थो डार्लिंगः कृतवान् तद्विवेचनम् ॥ १११ ॥

तथा न प्राप्यते यांत्रो गृहनिर्माणमन्दिरे ।
निर्मितं प्राप्यते वस्तु यथैतत् साक्षिसूचितम् ॥ ११२ ॥

मयानुमीयते यत् तत् स्वोत्तरे तेन मन्यते ।
अल्पद्रव्यव्ययात् साध्या सुलभा यांत्रनिर्मितिः ॥ ११३ ॥

श्रमेणाल्पेन साध्योऽसौ दुष्करोऽन्वेषणे परम् ।
डार्लिंगस्य मतं प्रायः तिलकेन समर्थितम् ॥ ११४ ॥

केनोद्देशेन लेखेऽस्मिन् वर्णनं यांत्रनिर्मितेः ।
हिताय किं शासनस्य कृतं वान्येन हेतुना ॥ ११५ ॥

अत्र वै वादिना दत्तमुत्तरं यत् सविस्तरम् ।
आक्षेपखण्डनं कृत्वा कार्सनस्य पदे पदे ॥ ११६ ॥

लभ्यतेऽधिकृतं तस्य सशास्त्रप्रतिपादनम् ।
राष्ट्रोद्धरणमार्गस्य पारतन्त्र्यातिदुःखिनाम् ॥ ११७ ॥

लोकानां हितबोधाय सर्वं तल्लिखितं मया ।
बोधाय शासनस्यापि स्वकर्तव्यस्य वै तथा ॥ ११८ ॥

को मार्गो विहितस्तेषां संकटानां विनाशकः ।
दातुं सौख्यं च लोकेभ्यः तस्य दिग्दर्शनं कृतम् ॥ ११९ ॥

प्रजासंतोषलाभाय शासनस्याधिकारिणः ।
प्रजाभिमुखतावाप्त्यै शमितसंपादनाय च ॥ १२० ॥

एतत् सर्वं समुद्दिष्टं लेखकेन स्वपत्रके ।
लेखनारम्भकाले च सर्वलोकहितैषिणा ॥ १२१ ॥

बांबप्रदर्शनं लोके मन्येऽहं व्याधिलक्षणम् ।
उपचारोऽस्य मूलस्य नाशायावश्यको भवेत् ॥ १२२ ॥

हेतुस्तल्लेखनस्यैव प्रोक्तश्चाल्पाक्षरैरिह ।
ततोऽधिवक्ता पप्रच्छ कार्सनस्तिलकं पुनः ॥ १२३ ॥

न सामर्थ्यं शासकेषु विद्यते बांबनाशने ।
नोपचारो ज्ञायते तैः किमेतच्च मतं तव ॥ १२४ ॥

तिलकः स्वोत्तरे प्राह श्रूयतामाशयो मम ।
समर्थं शासनं कर्तुमुपचारावलम्बनम् ॥ १२५ ॥

बांबप्रथा विनाशार्हा भारतेऽङ्कुरिता च या ।
प्रशासनेन प्राप्तव्यं जनतातोषणं सदा ॥ १२६ ॥

असंतुष्टेषु लोकेषु चोपचारोपयोजना ।
अक्षमा परिणामाय संपूर्णाय मते मम ॥ १२७ ॥

उपचारप्रचारोऽपि कष्टसाध्यो भवेद् बहु ।
न्यूनीकर्तुं तद्विरोधं सामोपायं च योजयेत् ॥ १२८ ॥

कटूषधप्राशनार्थं मधु किंचित् प्रदीयते ।
अनुपानमिति प्राज्ञैरायुर्वेदचिकित्सकैः ॥ १२९ ॥

उपायाः सूचिता अन्ये बांबापत्तिनिवारणे ।
स्फोटकद्रव्यनिर्बन्धादेशास्तेष्वेक इत्ययम् ॥ १३० ॥

मूलं सर्वापदां मन्ये भग्ना लोकमनोरथाः ।
तद्वाहोपशमाद्यन्ति ह्युपायास्ते प्रशस्तिताम् ॥ १३१ ॥

असंतोषो महान् व्याधिर्लोकान्तःकरणस्थितः ।
विना निर्मूलनात् तस्य नोपचाराः प्रभाविणः ॥ १३२ ॥

सार्वभौमस्य सामर्थ्यं जनाः पश्यन्ति नित्यशः ।
सामनीतिप्रयोगेण हानिस्तस्य न संभवः ॥ १३३ ॥

दातुं तुष्टिं प्रजायै यद् मार्दवं दर्शितं भवेत् ।
सामर्थ्यं वर्धते तेन न हानिस्तस्य जायते ॥ १३४ ॥

भारते जातयः सन्ति यद्यपि द्विशताधिकाः ।
एकध्येयप्रेरितास्ताः स्वराज्याधिकृताः खलु ॥ १३५ ॥

अधिकारसमानत्वात् सुबुद्धास्ताः प्रतिष्ठिताः ।
राष्ट्रोद्धारमनस्काश्च राष्ट्रैक्यग्रन्थिना दृढम् ॥ १३६ ॥

अनियन्त्रितरूपेण वर्तते यदि शासनम् ।
असंतुष्टेषु लोकेषु बांबस्फोटस्य संभवः ॥ १३७ ॥

न व्यक्तेरधिकारस्य कृता चर्चा मयाधुना ।
बांबस्फोटविचारेऽस्मिन् राष्ट्रस्यैव तु दुःस्थितेः ॥ १३८ ॥

सन्ति केचिद् महाभागाः स्वराज्यस्य विरोधिनः ।
सुराज्येनैव संतुष्टा वयमित्येववादिनः ॥ १३९ ॥

केचिल्लोकाः प्रजल्पन्ति राजद्रोहप्रचोदनात् ।
बांबोत्पत्तिर्भारतेऽस्मिन् विरते च मयेति तत् ॥ १४० ॥

शासनेन विधानानि यानि निन्दापराणि ते ।
एतान्यासन् समुद्दिश्य न च लोकान् तथैव किम् ॥ १४१ ॥

ओमित्युक्त्वा प्राह वादी न्यायाधीशमतं च तत् ।
न कस्याप्यधिकारोऽस्ति कर्तुं वै तस्य वाच्यताम् ॥ १४२ ॥

न तेन नियमस्यास्ति बाधास्तित्वे कदाचन ।
पत्रकर्तेति कर्तव्यं क्रियते मार्गदर्शनम् ॥ १४४ ॥

मया केसरिपत्रेऽस्मिन् शासनाय जनाय च ।
न भयाद् वा न लोभाद् वा भ्रष्टोऽहं मद्व्रतात् खलु ॥ १४५ ॥

यशोऽर्णवस्य कालस्य सर्गेऽस्मिन् मन्थनं महत् ।
जातं यत् स्यादपूर्वं तद् वाग्युद्धे न्यायमन्दिरे ॥ १४६ ॥

वांयानां हि प्रपातेन नादितं न्यायमन्दिरम् ।
आयुधानां प्रहारेण रणभूमिर्यथा किल ॥ १४७ ॥

समुद्धृता मया केचिद् वाग्युद्धे प्रहिताः शराः ।
कार्सनेम चिरोलस्य रक्षार्थे तिलकोपरि ॥ १४८ ॥

वाग्बाणानां प्रहारेषु ये चासन् मर्मभिच्छराः ।
प्रतिकाराय ये छिन्नाः वादिना स्वोत्तरे शरैः ॥ १४९ ॥

अस्मिन् न्यायविडम्बने विरचिते बालस्य कीर्त्यम्बुधौ
वाग्युद्धं प्रखरं यथामति मया संक्षेपतो वर्णितम् ।
दृष्टो यस्य विशालबुद्धिविभवो वाक्पाटवं चाद्भुतम्
प्रत्युत्पन्नमतिं नमामि तिलकं गङ्गाधरस्यात्मजम् ॥ १५० ॥

# एकोनसप्ततितमस्तरङ्गः

जातं दृग्गोचरं प्रायो द्वन्द्विनोर्युद्धकौशलम् ।
मल्लयुद्धे प्रेक्षकाणामाश्चर्यायैव कल्पते ॥ १ ॥

गताध्याये विनिर्दिष्टं कार्सनः क्षुब्धतां गतः ।
तिलकस्य मुखात् तस्य श्रुत्वाल्स्टरकथानकम् ॥ २ ॥

अन्यप्रसङ्गे तन्नाम वादिनोच्चारितं पुनः ।
वाप्टिस्टेन स्वयं तस्य प्रदत्तं स्वल्पवर्णनम् ॥ ३ ॥

विनोल्लेखं तत्कथाया अपूर्णं युद्धवर्णनम् ।
स्यादेव लोकमान्यस्य चरिते मन्यते मया ॥ ४ ॥

करोमि तस्या निर्देशं स्वल्पं न्यूनस्य पूर्तये ।
ततः पश्चाद् यथाशक्ति तयोर्वक्तृत्वविस्तरम् ॥ ५ ॥

निर्दिष्टेषु प्रसङ्गेषु वाप्टिस्टो न्यायमन्दिरे ।
उपस्थितः स्वयं ह्यासीद् द्रष्टुं तद्युद्धकौशलम् ॥ ६ ॥

कार्सनो वाचयामास बहुलेखान् प्रकाशितान् ।
केसर्यादिषु पत्रेषु चाङ्ग्लभाषानुवादितान् ॥ ७ ॥

कार्सनो वादिनं प्राह प्रोन्नीय स्वरमात्मनः ।
एते लेखाः श्रुताः किं ते पठिता येऽधुना मया ॥ ८ ॥

राजद्रोहात्मका एते न वेति ब्रूहि सत्वरम् ।
तिलकः शान्तचित्तेन न किञ्चिदुत्तरं ददौ ॥ ९ ॥

विदितैव समीक्षा सा शासकेनानुमोदिता ।
प्रवर्तिता भारतेऽस्मिन् दण्डनीतिर्दुराग्रहात् ॥ १० ॥

कार्सनं नष्टसौजन्यमुत्तरे तिलकोऽवदत् ।
आयर्लंदस्वराज्यस्य प्रचारः प्राप्तये कृतः ॥ १२ ॥

युष्माभिश्चान्यभक्तैश्च ग्रन्थ एकः प्रकाशितः ।
तस्माद् ग्रन्थादुद्धृतानि वाक्यानि विविधानि च ।
कुर्वन्ति दर्शनं सम्यग् राजद्रोहस्य मन्मते ॥ १३ ॥

मल्लयुद्धे यथा कश्चिद् मल्लोऽन्यं च भुवि क्षिपेत् ।
पृथ्वीसमान्तरपृष्ठमाकाशासक्तलोचनम् ॥ १४ ॥

जाता वालोत्तरं श्रुत्वा कार्सनस्य स्थितिस्तथा ।
पराभूत इवासीत् स द्वितीये योधनाहवे ॥ १५ ॥

वान्धवं व्यवसायस्थं मित्रं निकटवर्तिनम् ।
उवाचैवं सायमनोऽपि कर्णकर्कशयाचया ॥ १६ ॥

अन्तर्ज्वालातिसंतप्तः सुप्तज्वालामुखो यथा ।
मन्त्रौषधीरुद्धवीर्यो भोगीवेति च सोऽब्रवीत् ॥ १७ ॥

शासनेन कृतः संधिः कौन्सीलस्य सभाजनैः ।
ऐकमत्येन वक्तव्यमखिलैः कर्मचारिभिः ॥ १८ ॥

दुर्भिक्षग्रस्तलोकानां साहाय्यार्थमपेक्षिताः ।
बहूपाया विनिर्दिष्टा दुर्भिक्षशमनाय च ॥ १९ ॥

नोपयुक्ता इति त्यक्तास्तेष्वेके शासनेन च ।
पूर्वं तद् निश्चितं सर्वैः कष्टशब्देन दर्शितम् ॥ २० ॥

केसरिस्थं वादिहस्ते प्रदायैकं यदङ्कितम् ।
अपृच्छद् कार्सनः प्रश्नं वादिनं तिलकं प्रति ॥ २१ ॥

नाक्षिप्तेषु प्रार्थिपत्रे समाविष्टं मयाङ्कितम् ।
गृह्णाम्यहं तथाप्यत्र चाक्षेपार्थमिह स्थले ॥ २२ ॥

कार्सनेनाङ्कितो भागस्तत्पत्रविनिवेशितः ।
उपर्युल्लेखितश्चासीद् यथा वै निम्नदर्शितः ॥ २३ ॥

प्रकाशिताः शिवोद्गारा अत्याचारप्रचोदकाः ।
तिलकेनेति यत् प्रोक्तं किं तत्रापेक्षितं त्वया ।
नैवाक्षिप्तं मया तद्धि इति बालेन भाषितम् ॥ २४ ॥

प्रत्यक्षो नैव संबन्धः प्रेर्यप्रेरकरूपकः ।
मया चापेकरभ्रात्रोः पूर्वमासीत् कदाचन ॥ २५ ॥

अपहृत्यस्य रैंडस्य वर्णनं यत् प्रकाशितम् ।
तत् सत्यमिति मत्वैव पत्रके मुद्रणं कृतम् ॥ २६ ॥

प्रश्नस्य कार्सनस्यैतत् कुत्सितत्वं घृणावहम् ।
निर्देष्टुं पाठकान् सर्वान् तस्योद्धारं करोम्यहम् ॥ २७ ॥

बालाय प्रेषिते पत्रे ह्यमुना लिखितं किल ।
प्रेरितोऽहं ह हत्यायै चिरोलः पुस्तकेऽलिखत् ॥ २८ ॥

अपेक्ष्यते कियद् द्रव्यं यशोहानिप्रपूरकम् ।
एवं पृष्टेन बालेन दत्तं प्रत्युत्तरं तदा ।
नेदृक् चापेकरः पत्रमलिखद् वै कदाचन ॥ २९ ॥

अत्याचाराख्यायिकैका भवद्भिर्गर्हिता भृशम् ।
स्वात्मपरक्षाकराणां च प्रजोपद्रवकारिणाम् ॥ ३० ॥

न्यायप्रधानमार्गे ते भान्ति सर्वेऽपि कण्टकाः ।
घोरमार्गानुगास्ते च घटनाया विरोधिनः ॥ ३१ ॥

पौररक्षापचारास्ते मद्वीक्षाविषयाः खलु ।
केषांचिदपचाराणां निर्देशं कर्तुमर्हसि ॥ ३२ ॥

नयन्ति साक्षिणो मिथ्यावादिनो न्यायमन्दिरम् ।
अपि न्यायासनस्थस्यमिति तं कार्सनोऽब्रवीत् ॥ ३३ ॥

मास्सं न्यायासनस्थोऽहं परं दृष्टं मया तदा ।
मिथ्योक्तेः साक्षिणामेव दोषभाजौ विमोचितौ ॥ ३४ ॥

प्लेगानर्थे प्रवृत्तेऽपि लेखश्चोपरिदर्शितः ।
नेष्टः किं मन्यते नैव पत्रकारैर्भवादृशैः ॥ ३५ ॥

यदा दुर्भिक्षचिह्नानि दृश्यन्ते कर्मचारिभिः ।
आविष्कारो दण्डनीतेस्तदा नास्ति सयुक्तिकः ॥ ३६ ॥

लोकसेवाप्रयुक्तानामुपायानामुपक्रमे ।
भवेच्छ्रेयस्करो नित्यमिति ज्ञेयं च तैः किल ॥ ३७ ॥

प्रार्थनाप्रमुखा मार्गा यदि कालापहारिणः ।
तर्हि तेषां समावेशः शिशुक्रीडासु वै भवेत् ॥ ३८ ॥

ध्येयस्य परिपोषाय मार्गानेतादृशान् खलु ।
व्यग्रत्वेन महाकार्ये योजयन्त्येव सज्जनाः ॥ ३९ ॥

अभावात् स्नेहभावस्य ध्येयप्रज्वलनं कथम् ।
विना स्नेहात् कथं दीपस्याविर्भावस्तु तेजसः ॥ ४० ॥

यदा लोकः स्थिरपदो भवेद् विघ्नशतान्यपि ।
अनुभूयानन्दयुक्तस्तदैवोच्चपदस्थितिः ॥ ४१ ॥

मनुष्याणां मनोभूम्यां दृढत्वेनाङ्कुरायते ।
अयच्छणकमोक्तारो नृत्यन्ति ब्रह्मणः पदे ॥ ४२ ॥

इति श्रीमत्तुकारामवचोऽभङ्गं च शाश्वतम् ।
सत्यं शिक्षां ददात्येव वैराग्यस्याभिलाषिणे ॥ ४३ ॥

यथा स्मृतं शास्त्रकारैः कृष्णद्वैपायनादिभिः ।
ब्राह्मणस्य शरीरं हि क्षुद्रकामाय नेष्यते ॥ ४४ ॥

तदेवोपनिषत्प्रोक्तं तत्त्वं साधुशिरोमणिः ।
चिन्तो द्वारपार्श्वमकरोदाविरिन्द्रायणीतटे ॥ ४५ ॥

विदेशोत्पन्नवस्तूनां होलिका किं त्वया कृता ।
स्वदेशोद्योगवृद्ध्यर्थमिति बाल उवाच ह ॥ ६९ ॥

व्रतं ' स्वदेशी ' प्रथमे स्थाने कार्यक्रमे स्थितम् ।
बहिष्कारोऽभवत् तस्य रूपं सांग्रामिकं ततः ॥ ७० ॥

राष्ट्रशिक्षास्वरूपेण प्रदत्तं तात्त्विकासनम् ।
स्वराज्यस्य ध्येयरूपं हस्तादर्शो विनिर्मलः ।
स्वातन्त्र्यप्रतिबिम्बस्य त्रिवारं व्रतदर्शनम् ॥ ७१ ॥

या भवानी जगन्माता तुळजापूरनिवासिनी ।
शिवाजीनृपतेरासीत् कुलस्योपास्यदेवता ॥ ७२ ॥

आसीत् तस्या गले माला नरमुण्डभयंकरा ।
इति शास्त्रे वर्णिता सा सर्वलोकेषु पूजिता ॥ ७३ ॥

अपि पैसानिधेर्हेतु राजकीयोऽभवद् न वा ।
उद्योगोन्नतिसिद्ध्यर्थं लोकैरेको निधिः कृतः ।
तळेग्रामे सुविख्याते पैसाफंडेतिमंत्रितः ॥ ७४ ॥

सावरकरः किं प्रहितो माङ्गलदेशं प्रति त्वया ।
आनीतं पत्रमाचार्यात् तेन प्रार्थितं मया ॥ ७५ ॥

सावरकरं समुद्दिश्य प्रश्नाः पृष्टास्तदा तु ये ।
तेषामुत्तररूपेण प्रोवाच तिलकः खलु ।
एवं मया श्रुतं नान्यद् वक्तुं शक्नोमि सर्वथा ॥ ७६ ॥

अन्येद्युः सायमनो बालं पप्रच्छ विधिपूर्वकम् ।
ग्लोयराइम्सपत्राभ्यां क्षमा ते किं न याचिता ।
वाग्मिनैवाब्रवीद् बालः स्वयं वै न्यायमन्दिरे ॥ ७७ ॥

वादिकरेण त्वन्नाम निर्दिष्टमपि कुत्रचित् ।
प्रत्युवाच तदा बालो निर्दिष्टं नैव कुत्रचित् ॥ ७८ ॥

मुझफ्फरनगरं केन्द्रं यांबस्फोटस्य यत् खलु ।
दधीयस्तत्पुण्यपुरात् कोऽपि तत्र न पातकः ।
अस्माकं वृत्तपत्रस्य यालेनोक्तमिदं ततः ॥ ७९ ॥

अभिकाङ्क्षा स्वराज्यस्य भारते या प्रतिष्ठिता ।
पुरस्कृता मया सैव सततं वृत्तपत्रयोः ॥ ८० ॥

कदा त्वया चिरोलस्य ग्रन्थो निन्दापरः खलु ।
दृष्टः कारागृहाद् मुक्तो यदा प्रत्यागतस्तदा ॥ ८१ ॥

ताईप्रकरणे लाभो द्रव्यस्यासीत् तदा ननु ।
मित्रोपकारो मद्धेतुर्द्रव्यलाभः कदापि न ॥ ८२ ॥

येन न्यायपथं विहाय सततं न्यायालये जल्पितं
यश्चोलङ्घितसर्वशास्त्रनियमो न्यायालयप्राङ्गणे ।
तस्मिन् दानवतुल्यकर्षनरिपौ बुद्धिप्रभावाद् भ्रम-
श्चक्रे येन नमामि तं हि तिलकं वाग्युद्धसेनापतिम् ॥ ८३ ॥

द्रोणाचार्य इवाभवत् कलियुगे यः शापबाणव्रतः
शत्रोर्निर्दलनं चकार सततं स्वाध्यायदक्षः शुचिः ।
गीताभ्यासरतो बिभर्त्यविरतं वाग्बाणतूणीरकं
शास्त्रास्त्रव्यवहारकोविदममुं वन्दे ह गाङ्गाधरिम् ॥ ८४ ॥

इति माधवविरचिते श्रीतिलकयशोऽर्णवे न्यायविडम्बननाटके तिलकवाग्युद्धनामा
एकोनसप्ततितमस्तरङ्गः ।

# सप्ततितमस्तरङ्गः

वादिप्रतिनिधिः पूर्वं न्यायेशं प्राह वै ततः ।
समाप्तं मे वादिकार्यमाज्ञापयतु कार्सनम् ॥ १ ॥

चिरोलवाह्वनात् पूर्वं कार्सनेन समीक्षणम् ।
कृतं दर्शयितुं स्थानमायोगोभयपक्षयोः ॥ २ ॥

चिरोलो वर्णितस्तेन प्रवासीति सुविश्रुतः ।
वार्ताहरोऽसौ पत्रस्य टाइम्साख्यस्य लंदने ॥ ३ ॥

भारतीयसमस्यानां स सुज्ञ इति गण्यते ।
न भारते तन्निवासो दीर्घकालं कदाचन ॥ ४ ॥

प्रसङ्गापेक्षि तज्ज्ञेन भारते गमनं कृतम् ।
नैवास्ति कारणं किंचिद् द्वेषस्य द्वन्द्विनोः किल ॥ ५ ॥

जानमोर्ले भारतस्य मित्रं विख्यातमुच्यते ।
समर्पितं ग्रन्थकर्त्रा तस्मै प्रस्तुतपुस्तकम् ॥ ६ ॥

पुरस्कृतं च हेरेन लायलेनेति तत् स्वयम् ।
नैव विज्ञा भारतस्य मित्रश्रेष्ठाः कदापि ते ।
येन केनापि वाक्येन ग्रन्थस्य परिशीलनात् ॥ ७ ॥

कथं ज्ञातं कार्सनेन तेषामन्तर्मनोगतम् ।
उद्घोषितं च यत् तेन न्यायमन्दिरभाषणे ॥ ८ ॥

तद्राज्यस्य प्रशंसार्थं लिखितं तेन पुस्तकम् ।
किं स्यात् प्रयोजनं तेषां सर्वग्रन्थसमीक्षणे ॥ ९ ॥

चिरोलश्चेद् द्रव्यकामः केवलः स्वार्थलोलुपः ।
तदर्थं सुलभः पन्था आसीत् तस्येत्यसंशयम् ॥ १० ॥

क्षमापत्रप्रदानं [illegible] स्थानत्यागस्य संमतिः ।
वादिसंतोषसंप्राप्त्यै जगदुद्धारहेतुना ॥ ११ ॥

इति साधनयुग्मेन साध्यं स्वास्थ्यं तथा व्ययः ।
अकारणोऽतिद्रव्यस्य कालस्याल्पप्रयासतः ॥ १२ ॥

अस्ति कश्चिद् वादिहेतुरत्रैवागमनस्य च ।
मार्जनायात्मदोषस्य चारित्र्यस्य विघातिनः ॥ १३ ॥

इंग्लंदस्य भवेत् सर्वं शीतले वायुमण्डले ।
यावज्जन्मेतिहासस्य कथायाश्च निरूपणम् ॥ १४ ॥

भाषाज्ञानविहीनानां जनानां पुरतो यदि ।
मुख्यतः शान्तमार्गेण न्यायायाप्तिप्रपोषकम् ॥ १५ ॥

द्रव्यार्जनस्यापि हेतुर्वादिनस्तस्य विद्यते ।
सर्वमेतद् न्यायदाने चिन्तितव्यं पदस्थितैः ॥ १६ ॥

पूर्वकालसमापन्नं टाइम्सग्लोबयोरपि ।
विवादस्याप्यत्यये मन्ये सर्वथैव निरर्थकम् ॥ १७ ॥

कृता तेनाङ्ग्लराज्यस्य निन्दा निर्भर्त्सना सदा ।
राज्यशासकयोर्मध्ये कृत्वा भेदं च शाब्दिकम् ॥ १८ ॥

अध्याहृतं कृतो यत्नो तिलकेनात्मजीविते ।
विनिन्दितुं चाङ्ग्लराज्यं स्थापितं ब्रिटिशैः किल ॥ १९ ॥

वाचकानां सुबोधाय कार्सनेन कृतस्य च ।
सत्यापलापदोषस्य ह्याविष्कारं करोम्यहम् ॥ २० ॥

कार्सनो वाचयामास वृत्तपत्रे प्रकाशितान् ।
लेखान् वै रँडहत्यादिपूर्ववृत्तान्तदर्शिनः ॥ २१ ॥

उच्चैर्न्यायालये प्राह मह्यं शृणुत सज्जनाः ।
वदामि सांप्रतं शब्दांस्तिलको यांस्तदावदत् ॥ २२ ॥

तिलकोऽहं पण्डितोऽस्मि प्राचार्यः प्रतिपालकः ।
गोब्राह्मणानां सर्वेषां रिपुरिंग्लंदवासिनाम् ॥ २३ ॥

लुप्तमानुषभावानां पशुतुल्योपजीविनाम् ।
परिस्थित्यां विशेषायां हत्या नैवास्ति दूषणम् ॥ २४ ॥

शिवोत्सवसमारोपे तिलकप्रतिपादनम् ।
एवं तेन स्वैरबुद्ध्या सर्वथा विकृतीकृतम् ॥ २५ ॥

नैष सत्यापलापोऽयं प्रलापोऽस्ति निरर्गलः ।
असत्यं मूर्तिमद् नीतेर्मूलोच्छेदि प्रजल्पनम् ॥ २६ ॥

स्वराज्यकार्ये बालस्य भारतैक्यविवर्धिनी ।
शाश्वती निहिता दृष्टिर्वसुधासमदर्शिनी ॥ २७ ॥

सदैव सख्या वृत्तिः शासनस्य च वादिनि ।
सार्वभौममते हन्त जातं सर्वं निरर्थकम् ॥ २८ ॥

कारामुक्तो युद्धकाले चोदयामास भारते ।
भारतस्थं जनं बालो मर्यादातिक्रमं कुरु ॥ २९ ॥

प्रवर्तिता भारते या सार्वभौमेन संप्रति ।
समर्थयेऽत्र नाहं तामाङ्ग्लानां शासनप्रथाम् ॥ ३० ॥

तिलको देशभक्तोऽस्ति क्षणेऽस्मिन् मन्यते मया ।
आवश्यकी मनुष्याणां यदि हत्या हि गण्यते ॥ ३१ ॥

वक्तव्यं प्रकटं तेन गुप्तं तत् स्वमनोगतम् ।
सोढव्यः परिणामोऽपि संभाव्यो धीरवृत्तिना ॥ ३२ ॥

सरला न भवेत् तस्य जटिला भूमिका सदा ।
उत्तेजयति लोकान् स शाश्वतं गूढकर्मणि ॥ ३३ ॥

केनापि चेद् दर्शितं तद् महाक्रोशं करोति सः ।
उच्चैरुद्घोष्यते तेन यशोहानिः कृता मम ॥ ३४ ॥

डायरेणापवाक्यानि प्रविष्टानि स्वनिर्णये ।
चार्मनो वाचयामास पंचानां पुरतः पुनः ॥ ३५ ॥

तथैवानेकवारं स पपाठोच्चैर्निवेदनम् ।
अनन्तेन कृतं पूर्वं स्वयं जॅक्सनघातिना ॥ ३६ ॥

न प्रमाणं कार्सनेन स्वविधानसमर्थने ।
दृत्तं तेन विशेषेण जातं तत् पिष्टपेषणम् ॥ ३७ ॥

पशवः स्वक्षुधाशान्त्यै खाद्यं निजपुरःस्थितम् ।
अदन्ति सकलं शीघ्रं पश्चात् चर्वन्ति तत् पुनः ॥ ३८ ॥

लेखव्याख्यानयोर्दोषः सुज्ञैश्चर्वितचर्वणम् ।
तादृशः संज्ञितो दृष्टो भाति मेऽन्वर्थकश्च सः ॥ ३९ ॥

यद्युक्तदोषानुल्लेखः स्याच् चिरोलस्य पुस्तके ।
टीकापात्रं जनानां स भवेदेवेत्यसंशयम् ॥ ४० ॥

पश्यन्त्रनिर्मितौ यादी सततं भारताद् बहिः ।
आङ्ग्लनिष्कासनार्थं स यत्नशीलो मतं मम ॥ ४१ ॥

कार्सनव्याख्यानवैशिष्ट्यं शेषं कोपेन पूरयेत् ।
पूर्णाभावे प्रमाणानां वक्ता भाषणमात्मनः ॥ ४२ ॥

आङ्ग्लद्वेषोत्पादनाय राष्ट्रे जागरणाय च ।
उपयुक्तानि ते नासन् साधनानि निरन्तरम् ॥ ४३ ॥

सत्यो विचारो बालस्य को वै स्याद् राजनैतिकः ।
ज्यूरराणामुत्तरार्थं प्रश्नोऽयं जटिलः खलु ॥ ४४ ॥

प्रथमं पूजितो बालः पुण्यपुर्यां ततः परम् ।
महाराष्ट्रे सर्वदेशकेन्द्रराष्ट्रसभास्थले ॥ ४५ ॥

विश्वव्याप्यभवत् तस्य यशः शुभ्रं च निर्मलम् ।
गौरवं तिलकैराप्तं राष्ट्रनेतृजनेषु तत् ॥ ४६ ॥

लालो बालश्च पालश्च भारतोद्धारकत्रयी ।
पूजिता भारते सर्वै राष्ट्रस्वातन्त्र्यकाङ्क्षिभिः ॥ ४७ ॥

अरविन्दविपिनचन्द्राद्यो वङ्गधुरंधराः ।
स्वीचक्रुर्लोकमान्यस्य नेतृत्वमविशङ्कितम् ॥ ४८ ॥

सुरेन्द्रोऽपि ददौ तस्मै साहाय्यवचनं स्वयम् ।
एककेन्द्रमेकतन्त्रं वङ्गभङ्गसमुत्थितम् ॥ ४९ ॥

आन्दोलनं तदा जातं लोकमान्यप्रवर्तितम् ।
उत्तरे दक्षिणे देशे पूर्वस्मिन् पश्चिमे तथा ॥ ५० ॥

चतुर्दिक्षु प्रजज्वाल तिलकस्य महो महत् ।
भास्करस्येव मध्याह्ने विश्वचैतन्यदायकम् ॥ ५१ ॥

मनुष्याणां प्राणघातस्तिलकस्यानुशिक्षया ।
पुरस्कृतो वङ्गदेशे हिंसाचारानुयायिभिः ॥ ५२ ॥

वङ्गभङ्गनिषेधस्य बांबस्फोटस्वरूपिणी ।
जाता परिणतिस्तत्र नाश्चर्यं मन्यते मया ॥ ५३ ॥

कथं तु विषवृक्षस्य विस्तारो नाधिकोऽभवत् ।
इत्येव विस्मयस्तस्य कार्सनो निर्भयोऽब्रवीत् ॥ ५४ ॥

अराजकं स्वराज्यं वै परराज्याद् वरं खलु ।
वादी स्वपत्रलेखेषु निरन्तरमशिक्षयत् ॥ ५५ ॥

यदनिष्टं गर्हणीयं चासीत् तच्च पुरस्कृतम् ।
आङ्ग्लाधःपातहेतोर्वै तिलकेन निरन्तरम् ॥ ५६ ॥

एवंगुणविशिष्टोऽयमागतो भारतादिह ।
न्यायस्य याचनां कर्तुं भवतां न्यायमन्दिरम् ॥ ५७ ॥

विषयाः प्रार्थिपत्रे षड् दर्शिता दूषणार्थकाः ।
रिपवः षड् यथा देहे मनुष्यमनिघातिनः ॥ ५८ ॥

सर्वे ते सन्ति संबद्धा न हि योग्यं पृथक् पृथक् ।
कर्तुं विवेचनं तेषां कार्सनः प्राह साग्रहम् ॥ ५९ ॥

ताडयित्वा प्रतोदेन लोकेऽस्मिस्तिलको धनम् ।
प्रापेति लिखितं यत् तु तदर्थस्य विपर्ययः ॥ ७२ ॥

प्रतोदस्य प्रहारा न कृता द्रव्यमुपार्जितुम् ।
कार्सनः कथयामास भाषा सालंकृतेय ह ॥ ७३ ॥

यदा वै न कृतं दानं सत्कार्याय कदाचन ।
अन्याय्यकल्पना दानं सूचनामङ्गलस्य तत् ॥ ७४ ॥

योजनं ह्यस्य मार्गस्य तन्मतेन घृणास्पदम् ।
लेखने वर्तते हेतुश्चिरोलस्येति सोऽवदत् ॥ ७५ ॥

निधिद्रव्यस्यापहारः कृतो वालेन सर्वथा ।
नैतत् ज्ञातं चिरोलेन यत्र कुत्रापि तेन वै ॥ ७६ ॥

एवमाभाषणं कृत्वा चिरोलं प्रति कार्सनः ।
आगच्छ साक्षिणः स्थानमुक्त्वासौ विरराम ह ॥ ७७ ॥

सहायस्तस्य धृस्टेसो चिरोलस्य परीक्षणम् ।
चकार प्रश्नरूपेण पक्षप्रथमसाक्षिणः ॥ ७८ ॥

चिरोलस्तेन संपृष्टः प्राहाहं वृत्तलेखकः ।
टाइम्साख्यस्य पत्रस्य परराष्ट्रे नियोजितः ॥ ७९ ॥

नियुक्त आङ्ग्लराज्येन सदस्यो मण्डलस्य च ।
विश्वस्य प्रेषितश्चाहं प्रति युद्धस्य मण्डलम् ॥ ८० ॥

साक्षिणा वर्णनं प्रोक्तं प्रयासस्य कृतस्य च ।
भूगोले भारते चैव स्वकर्तव्यस्य पूर्तये ॥ ८१ ॥

महाराष्ट्रे तथान्यत्र संदृष्टेषु स्थलेषु च ।
कोल्हापूरे नासिके च यच्च तत्र विलोकितम् ॥ ८२ ॥

संमेलितं च यत्प्राप्तं स्थाने स्थाने विशेषतः ।
आन्दोलनस्य रूपस्य बोधाय प्रकृतस्य च ॥ ८३ ॥

ततः परं सायमनेन चिरोलस्य परीक्षणम् ।
कृतं तद् वाचकैः सर्वैः पठितव्यं विशेषतः ॥ ९६ ॥

विज्ञाप्यैवं वाचकानां वृन्दं वालपरायणम् ।
यशोऽर्णवाकृष्टचित्तं प्रस्तुतं कथयाम्यहम् ॥ ९७ ॥

सायमनेन चिरोलस्य कृतं तिर्यक्परीक्षणम् ।
तदा तेनोक्तमासीद् यत् संक्षेपेण निवेद्यते ॥ ९८ ॥

ग्रन्थप्रकाशनात् पूर्वं भेदः कश्चिद् मया कृतः ।
ताईदत्तविधानस्य वृत्तान्ते परिवर्तनम् ।
भेदरूपेण तद् मुख्यमिति प्राह निजोत्तरे ॥ ९९ ॥

कोल्हापुरे महाराजदर्शनार्थं गतोऽस्म्यहम् ।
नाभवं त्वतिथिस्तस्य नियालङ्कावधावपि ॥ १०० ॥

पंढरपुरनिर्णयस्य प्राप्ता प्रतिलिपिर्मया ।
आसीद् निर्णयसारांशः पत्रके च मयार्जिते ॥ १०१ ॥

आरोपो यः कृतो बाले सोऽसहेतुविनिर्मितः ।
इति न्यायालये प्रोक्तं चिरोलेनोत्तरे निजे ॥ १०२ ॥

प्राह सायमनस्तं वै वितथं ते निवेदनम् ।
प्रदीयतां सावधानं पुनः प्रश्नोत्तरं त्वया ॥ १०३ ॥

न हि सम्यक् चिरोलेन ज्ञातः प्रश्नाशयस्तदा ।
इति प्राह न्यायमूर्तिर्डार्लिंगः सायमनं प्रति ।
चकार सायमनस्तस्मै स्पष्टं सर्वं निवेदनम् ॥ १०४ ॥

नैव बालस्तदारोपन्यायार्थं च पुरस्कृतः ।
तस्मात् सर्वं यदुक्तं तद् भवताज्ञानमूलकम् ॥ १०५ ॥

परीक्षणे सायमनो ह चिरोलं प्रोक्तवांस्तदा ।
तवोत्तरेऽभवत् स्पष्टं नोचितं भवता कृतम् ॥ १०७ ॥

परीक्षणं च प्रश्नस्य तस्मादन्वेषणं च तत् ।
वृथाभूतं न्यायकार्यसिद्ध्यै त्याज्यं च सर्वथा ॥ १०८ ॥

चिरोल उत्तरे प्राह नोपयोगो भवेदिति ।
विषयेऽस्मिन् न्यायसिद्ध्यै मान्यमित्यवदत् पुनः ॥ १०९ ॥

चंद्रावर्कर्निर्णयेन निर्दोषत्वे न वाध्यता ।
आसीदिति चिरोलेन प्रदत्ता निजसंमतिः ॥ ११० ॥

विमोचनाद् वै बालस्य जातं स्थित्यन्तरं महत् ।
मयापि पूर्वलेखास्ते पुनश्चैव परीक्षिताः ।
स्थलेषु केषुचिद् भेदा जाताश्चावश्यकास्ततः ॥ १११ ॥

पत्रद्वारा परिचितः करवीरस्य भूपतिः ।
नासीत् संभाषणं तस्य विषयेऽस्मिन् मया सह ॥ ११२ ॥

तव चेत् संग्रहे सन्ति नृपपत्राणि कानिचित् ।
तेषामन्वेषणं कृत्वा समानेयानि तानि वै ॥ ११३ ॥

सन्ति भूपस्य पत्राणि तेषु तेन प्रदर्शिता ।
सहानुभूतिर्मत्कार्ये चिरोलः स्वोत्तरेऽवदत् ॥ ११४ ॥,

प्रश्नस्य वै सायमनस्य चिरोलोऽयदद्दुत्तरम् ।
न किंचिदपि जानामि भाषां तां सर्वविश्रुताम् ।
महाराष्ट्रीं ग्रान्थिकीं वा नित्यं लोकेषु भाषिताम् ॥ ११५ ॥

नियुक्तो न मया कोऽपि कर्तुं भाषान्तरं खलु ।
आङ्ग्लवाण्यां यथावच्च लेखानां निजपुस्तके ॥ ११६ ॥

उच्चन्यायालये सन्ति तदर्थं कर्मचारिणः ।
ट्रान्स्लेटरा इति ज्ञाता ज्ञायते न्यायलिप्सुभिः ॥ ११७ ॥

ममोद्देशः परिज्ञातुं चिरोलस्य यथामति ।
केसरीलेखबोधे च पात्रतां ग्रन्थनिर्मितौ ॥ ११८ ॥

तस्य ज्ञानस्य मर्यादा तत्कालीना बभूव ह ।
अवश्यमखिलं ज्ञानं स्वमतस्यैव निर्मितौ ॥ ११९ ॥

चिरोलः स्वोत्तरे प्राह तेन दृष्टानि कानिचित् ।
कृतानि लीवार्नराधैराङ्ग्लरूपान्तराणि च ॥ १२० ॥

प्रशासनाद् मयाप्तानि नैव तानि कदाचन ।
अङ्कितेभ्योऽधिकारिभ्यः प्राप्तानि तु मया तदा ॥ १२१ ॥

न मया पुस्तकं प्राप्तं चाङ्ग्लिलेखयुतं च यत् ।
आयोगेऽस्ति विनिर्दिष्टं सच्चजे चिह्नितं पुनः ॥ १२२ ॥

आमूलाग्रं मयाधीतं रँडप्रकरणं किल ।
बालस्य कोऽपि संबन्धो न दृष्टो ह्यथवा मया ॥ १२३ ॥

चाफेकराख्यभ्रातृभ्यां प्रदत्ते द्वे निवेदने ।
न दृष्टस्तिलकोल्लेखः कस्मिन्नपि तयोर्मया ॥ १२४ ॥

तद्वत् केसरिपत्रस्य निर्देशो नैव विद्यते ।
स तु सर्वैश्च संदर्भाद् वाक्यैरनुमीयते ॥ १२५ ॥

त्वया न लिखितं सत्यं प्रमादेनैव संयुतम् ।
पत्रमित्युत्तरे प्राह चिरोलः सायमनं प्रति ॥ १२६ ॥

प्रथमे च द्वितीये च भेदोऽस्ति कथमुत्तरे ।
नास्त्येवेत्यवदत् कोऽपि प्रतिवाद्युत्तरे स्वके ॥ १२७ ॥

एतदस्त्युपयोगः किं क्रियते न निवेदने ।
जानाति कारणं तस्य बॅरिस्टरमहाशयः ॥ १२८ ॥

चाफेकरोऽपठच् श्लोकान् संमुखे तिलके सति ।
इति नैव मया तत्र लिखितं मम पुस्तके ॥ १२९ ॥

चाफेकरचरित्रस्य किंचिदंशो विलोकितः ।
कृपया लीवानेरस्य जातं तदवलोकनम् ॥ १३० ॥

मांटगाम्रिः प्रतिनिधिः शासनस्यास्य विद्यते ।
विधातुं मम साहाय्यमायोगेऽवश्यमेव हि ॥ १३१ ॥

पक्षपातप्रवृत्तिश्च शासनस्य तु नोचिता ।
इत्युत्तरे चिरोलेन प्रदत्तं मतमात्मना ॥ १३२ ॥

उत्सवार्थे शिवस्यासीत् पुरा प्राप्तं हि शासनात् ।
दानमौदार्यभूयिष्ठं पञ्चसाहस्रसंमितम् ॥ १३३ ॥

दत्तं दानं शासनेन जीर्णोद्धारस्य कर्मणे ।
शिवस्यासीच्छ्रपतेः समाधी राष्ट्रपूजिता ॥ १३४ ॥

तद्योद्धारव्ययस्यार्थे द्रव्यं शासनकर्तृभिः ।
शिवोत्सवस्य पुष्ट्यर्थं न दत्तमिति सोऽवदत् ॥ १३५ ॥

कोल्हापूरमहाराजः सोऽनुदानं स्वयं ददौ ।
समाधिजीर्णोद्धाराय राज्यसंस्थापकप्रभोः ॥ १३६ ॥

उत्सवः क्रियते सर्वैं राष्ट्रप्रेम्णा च सज्जनैः ।
न जातु राष्ट्रद्रोहेण समाधिर्दृष्यते प्रभोः ॥ १३७ ॥

कान्हेरेसंज्ञको दोषी च प्राद्दादुत्तरद्वयम् ।
तयोर्मध्ये मया भेदो विशेषो नावलोकितः ॥ १३८ ॥

मण्डलं गुप्तमेवासीदेकस्मिन्नुत्तरेऽवदत् ।
नासीद् गुप्तमिति प्राह चान्यस्मिंस्तद्विरोधि सः ॥ १३९ ॥

स्वमण्डलं महाराष्ट्रे दोषिणा स्थापितं यदा ।
कारागृहे ब्रह्मदेशे निबद्धस्तिलकस्तदा ॥ १४० ॥

कोल्हापुरे छत्रपतिशिवराजमहोत्सवः ।
समारोहेण प्रत्यब्दं क्रियते श्रद्धया जनैः ॥ १४१ ॥

रथयात्रासमारम्भः संप्रदायानुसारतः ।
अनिश्चितमुवाचासावभूत् तत्र न वेति वा ॥ १४२ ॥

न मेने करवीरस्थो राजा विश्वासघातिनम् ।
विषयेऽफ्झलखानस्य महाराजं शिवाभिधम् ॥ १४३ ॥

चिरोलः प्राह माहात्म्यं संमतं शिवभूपतेः ।
हत्याकारीत्ययं श्रेष्ठस्तिलकप्रतिपादनम् ॥ १४४ ॥

न तत् संमतमस्माकं यादस्य विषयोऽभवत् ।
अफ्झलवधः कथं जात इति चैतिह्यवेदिषु ॥ १४५ ॥

प्राचीनास्ति समस्येयं गोरक्षणविवेचिनी ।
पूज्यन्ते हिन्दुभिः सर्वैर्गावः संपूर्णभारते ॥ १४६ ॥

मुसल्मानैर्हन्यते गौर्भोजनार्थं क्वचित् क्वचित् ।
आदेशो नैव धर्मस्य कर्तव्य इति गोवधः ॥ १४७ ॥

नैवाशक्यं भवेज्ञ आरयोः सामञ्जस्यं च भारते ।
आन्दोलनेन जातस्तु विरोधो दुस्तरोऽधुना ॥ १४८ ॥

एतत्संबन्धिसंघर्षो हिन्दुमुस्लिमयोरभूत् ।
पूर्वकालेऽपि बालस्य ज्ञायते शासकैरपि ॥ १४९ ॥

वृद्धिराधुनिके काले जातेत्येवाविचारिभिः ।
मन्यते तद्दुष्करत्वात् शान्तिस्थापनकर्मणः ॥ १५० ॥

अतः कृतं कार्सनेन चिरोलस्य परीक्षणम् ।
निन्दितो नैव लेखेषु शिवधर्मोत्सवो मया ॥ १५१ ॥

विचारश्चैव लेखेषु प्राधान्येन परिस्थितेः ।
सर्वभारतवर्षस्य नित्यं मनसि चिन्तिता ॥ १५२ ॥

मत्कृतान्यनुमानानि युक्तियुक्तानि मन्वते ।
किं नु सुज्ञमतेऽयोग्यं साक्षिणो मतदर्शनम् ॥ १५३ ॥

ग्रन्थस्य भाग एकस्मिन् कोल्हापूरपरिस्थितिः ।
वर्णिता कलहश्चास्तीतरेषां ब्राह्मणैः सह ॥ १५४ ॥

प्रत्यब्दं शिवराजस्य कोल्हापूरे कृतोत्सवः ।
राजाज्ञयास्ति भिन्नोऽसावितरस्माच्च शिवोत्सवात् ॥ १५५ ॥

कृतं स्पष्टं चिरोलेन भिन्नत्वमुभयोस्तदा ।
प्रश्नोत्तरं कार्सनस्य प्रश्नानां न्यायमन्दिरे ॥ १५६ ॥

यद् वै दत्तं शासनेन किंवा तदधिकारिभिः ।
लाभं महां च तत् सर्वं दातव्यं प्रतिपक्षिणे ॥ १५७ ॥

न पक्षभेदः कर्तव्यः पक्षपातविरोधिना ।
न्यायालये विशेषेण विश्वासोत्पादनाय च ॥ १५८ ॥

अनन्तरं चिरोलस्य साक्षिणः प्रतिवादिनः ।
परीक्षिता भूमिकायाः पुष्ट्यर्थं न्यायमन्दिरे ॥ १५९ ॥

आसीत् तेषामग्रणीर्वै सँढर्स्ट इति दृश्यते ।
साक्षिस्थानं प्रति प्राप्तः समाहूतो यथाविधि ॥ १६० ॥

पुण्यपुर्यां व्यवस्थायै मया रँडो नियोजितः ।
प्लेगोद्भवस्थितेश्चासौ विज्ञाता धैर्यवानिति ॥ १६१ ॥

नाहं वै सैनिकैः सार्धं संचाराय गतः किल ।
नाहं वास्तविकं मन्ये पठितं रँडवर्णनम् ॥ १६२ ॥

गोपालस्य क्षमापत्रमानीतं च मयाधुना ।
न तद् ग्राह्यं न्यायमूर्तिरादिशद् न्यायवस्तुषु ॥ १६३ ॥

सायमनेन कृताः प्रश्नास्तस्य प्रतिपरीक्षणे ।
गव्हर्नर्-इन्-कौन्सिलेति मत्पदस्यास्ति वर्णनम् ॥ १६४ ॥

आयोगः प्लेगविषये मयैवासीद् नियोजितः ।
कारागाराद् मयादेशात् तिलकोऽपि विमोचितः ।
पूर्वं कालाद् विनिर्दिष्टाद् निर्णये न्यायमूर्तिना ॥ १६५ ॥

मातृभूमिं चागतोऽहमूनविंशशते शके ।
आश्वासनानि दत्तानि मयासन् पालितानि च ॥ १६६ ॥

सहानुभूतिर्लोकानामत्यन्तावश्यकी च सा ।
व्यवस्थायाः प्रपूर्त्यर्थं कर्तुं व्याधिनिवारणम् ॥ १६७ ॥

केचिल् लोका वदन्ति स्म व्याधिपीडातिरिच्यते ।
पीडानिवारकाणां ये स्वैरोपद्रवविवर्तनात् ॥ १६८ ॥

प्राह साक्षी परंत्वत्र द्रष्टव्यन्तरमपेक्ष्यते ।
तत्प्रश्नस्य विचारार्थं राष्ट्रस्य हितकर्तृषु ॥ १६९ ॥

लोकानां च निवासाय व्यवस्था निर्मिता मया ।
तत्रैव वसतिस्तेषामावश्यक्यभवत् तदा ॥ १७० ॥

तिलकेन कृता सेवा प्लेगग्रस्तजनस्य या ।
स्तुतादिना शंसिता नाहं कुर्वे तद्यमूलनम् ॥ १७१ ॥

अहं वक्तुं न शक्नोमि तिलकस्य मया सह ।
जातं संभाषणं वा न लोकपीडाविमुक्तये ॥ १७२ ॥

प्लेगोद्भवस्य क्षोभस्योपयोगो वादिना कृतः ।
कृतं कर्तव्यमुचितं सैनिकैश्चाधिकारिभिः ॥ १७३ ॥

संप्राप्तश्चालेसो लॉयः साक्षिस्थानं ततः परम् ।
अवदत् क्वापि न प्राप्ता लोकेभ्यः प्रार्थना मया ॥ १७४ ॥

संनियुक्तोऽहमध्यक्षस्तदानीं प्लेगसंसदः ।
ततः पश्चाद् मया ज्ञातं जनतादुःखकारणम् ॥ १७५ ॥

पठितं वृत्तपत्रेषु काले तस्मिन् मयावहे ।
व्यवस्थाजन्यदुःखानां वर्णनं यत् प्रकाशितम् ॥ १७६ ॥

यानि वृत्तपत्राणि प्रसिद्धानि तदाभवन् ।
समस्तामुम्बईग्रान्ते पुरोगामिनि विस्तृते ॥ १७७ ॥

न मे वासः पुण्यपुर्यां रँडमृत्योरनन्तरम्।
पुनः प्लेगोद्भवो जातस्तुलनां कर्तुमक्षमः ॥ १७८ ॥

कार्सनेन प्रतिप्रश्नः कृतस्तस्मै तदुत्तरे।
प्राह साक्षी समीचीनं प्रश्नगर्भितमुत्तरम् ॥ १७९ ॥

व्यवस्था शिथिला जाता यथा व्याधेरुपद्रवः।
कालेनैवाभवद् न्यूनः शमोपायादिभिस्तथा ॥ १८० ॥

त्वया कृतं भाषणं यद् शासनस्याज्ञया तदा।
निजपत्रे कृतं तस्य तिलकेन समीक्षणम् ॥ १८१ ॥

अहं सत्यं भाषणार्थमादिष्टः शासनेन ह।
परंतु लेखनं तस्य सर्वमेव मया कृतम् ॥ १८२ ॥

जाइल्सश्च ततः प्राप्तः साक्षिस्थाने बभूव यः।
प्लेगकाले प्रदेशस्यशिक्षायोगस्य चालकः ॥ १८३ ॥

वृत्तपत्रस्य लेखानामाकृत्तानां विलोकनम्।
कर्तुं नित्यं ममोद्योगः संचाराय गतः क्वचित् ॥ १८४ ॥

द्रष्टुं व्यवस्थां ग्रामेषु प्लेगव्याधिनिवारिणीम्।
शासनेन कृतां सर्वां दृष्ट्वातुष्यं तदाप्यहम् ॥ १८५ ॥

सैनिकानां मया दृष्टा व्याधितेषु दयार्द्रता।
प्रेमलत्वं च सौहार्दं दृष्टं तद् वर्णनातिगम् ॥ १८६ ॥

अत्याचारो व्यवस्थायां कृतायां कर्मचारिभिः।
विहितश्चेदागतः स्याद् मत्कर्णं स तदैव च ॥ १८७ ॥

शालाधिकारिणां मुख्यमारोग्यस्य निरीक्षणम्।
विद्यार्थिपालकानां वै कर्तव्यं खलु मादृशाम् ॥ १८८ ॥

राजकीयान्दोलनस्य शिक्षाकार्ये शनैः शनैः।
प्रचारकैः प्रवेशार्थं कृतो यत्नो विशेषतः ॥ १८९ ॥

परांजपे प्रसिद्धो य आचार्यपदमास्थितः।
पदच्युतो मद्रादेशात् संचालकगणेन सः॥ १९० ॥

जाह्लसः कथयामास सर्वमेतद् निवेदने।
अपृष्ट इति डार्लिंगं सायमनोऽसूचयत् तदा॥ १९१ ॥

किं निष्पन्नं भाषणे ते बालेन सह सत्वरम्।
निवेदयेति पृष्टोऽसौ निम्नोक्तं चोत्तरं ददौ॥ १९२॥

निष्फलो मन्यसे मार्गो लोकैः सद्योऽवलम्बितः।
शासनस्यार्गलीभूतो यः पन्था व्यत्ययप्रदः।
स कार्ये सफलो भूयाद् नित्ये नैमित्तिके तथा॥ १९३॥

सर्वं यद् यद् मया प्रोक्तं विंशत्यब्दकपूर्वगाम्।
द्योतते तिलकस्यैतां विचाराणां परिस्थितिम्॥ १९४॥

समारोपप्रसङ्गोऽद्य संप्राप्त इति कार्सनः।
दीर्घकालस्य वादस्य समाधानमदर्शयत्॥ १९५॥

अन्ते दीर्घप्रवासस्य वृत्तिर्वै पदचारिणः।
यथा भवति दृष्ट्वैव दूरतः स्थानमीप्सितम्॥ १९६॥

जना ऐच्छन् शीघ्रमन्तं वादस्योभयपक्षयोः।
दीर्घकालश्रमक्लान्ता मनःस्वास्थ्याभिलाषिणः॥ १९७॥

न्यायालयीनवादस्य महत्त्वं त्वस्य वर्तने।
इत्यवादीत् कार्सनोऽसौ ज्यूरीसंघकसज्जनान्॥ १९८॥

नापि व्यक्तिगतो वादः केवलं पक्षयोस्तयोः।
साम्राज्यस्य प्रतिष्ठायाः प्रश्नो वादस्य निर्णये॥ १९९॥

आन्दोलनं भारते यज्जातं तस्यैव वर्णनम्।
चिरोलेन कृतं ग्रन्थे दोषाश्च प्रकटीकृताः॥ २००॥

आन्दोलनस्य नेतॄणां तद्देय समर्थनम्।
मद्रासनस्य मार्गाणां दमनार्थं च मागमे॥ २०१॥

न्यायप्राप्तेर्भवेत् तस्य संभवो भारते मनाक् ।
इति द्योतयितुं प्राप्तो मया वादीति मन्यते ॥ २०२ ॥

तेन दत्तं धारणं यद् युक्तं तद् न समर्थकम् ।
ग्रन्थोऽयं वै चिरोलस्य पठ्यते ह्याङ्ग्लभाषिभिः ॥ २०३ ॥

साम्राज्ये विस्तृते चास्मिन् पूर्वपश्चिमभागयोः ।
कानडास्ट्रेलियादीनां प्रदेशेषु विशेषतः ॥ २०४ ॥

आदरो हि महानासीदाङ्ग्लभून्यायनिर्णये ।
विशेष इति संपश्यन्नेवाहं समागतः ॥ २०५ ॥

कार्सनो वर्णयामास निन्दाप्रचुरभाषणे ।
धालं तद्भाषणं चात्र संक्षेपेण ददाम्यहम् ॥ २०६ ॥

यावज्जन्म कृता निन्दा परराज्यस्य भारते ।
तेषामुच्चाटनार्थं यो यत्नशीलः सदाभवत् ॥ २०७ ॥

न्यायालये द्विवारं यो राजद्रोहीति दण्डितः ।
तिरस्करोति यो देश आङ्ग्लराज्यं च मङ्गलम् ॥ २०८ ॥

व्याख्यानानि न देयानि युद्धकाले त्वयाधुना ।
समादिष्टः शासनेन तद्विद्विष्टस्य शङ्कया ॥ २०९ ॥

आङ्ग्लापत्तिश्च देशस्य भाग्यकालोदयो भवेत् ।
इत्युक्त्वा योऽकरोत् सर्वान् लोकान् युद्धपराङ्मुखान् ॥ २१० ॥

हिन्दुमुस्लीमधर्मीयविद्वेषस्य प्रवर्तकः ।
जातिवादपुरस्कर्ता ब्राह्मणानां शिरोमणिः ॥ २११ ॥

शरीरे तस्य नैव स्यादपकीर्त्या वृतेऽखिले ।
नूतनस्य वर्तते स्थानं हानिचिह्नस्य कुत्रचित् ॥ २१२ ॥

कपर्दिकातुल्यमूल्या हानिर्नैवापि विद्यते ।
चारित्र्यस्य हि धालस्य निःशङ्कं कार्सनोऽवदत् ॥ २१३ ॥

जनः संभावितो लोके केनाप्यन्येन निन्दितः।
न्यायालयं क्वचिद् याति हानिद्रव्याप्तिहेतुना ॥२१४॥

प्रतिष्ठितत्वं लोकेन मन्यते संशयास्पदम्।
तस्य हानेः कारणस्य परिणामस्यापि निर्णयम्।
कर्तुमर्हन्ति मानार्हा न्यायेशो ज्यूर्यस्तथा ॥२१५॥

यः सदा कुरुते निन्दामन्येषां दोषदर्शनम्।
अहोऽद्य निन्दितश्चान्यैः शीलहानिं स याचते ॥२१६॥

दीर्घकाले महान् वादः ताईचिरोलस्तयोरभूत्।
विधिन्यायालये कश्चिद् दण्डन्यायालये तथा ॥२१७॥

कृतः प्रीवीकौन्सिलेन तद्वादस्य विनिर्णयः।
चिरोलस्तेन कृतं सर्वं योग्यं च न्याय्यमेव च ॥२१८॥

तं निर्णयं तिरस्कृत्य प्रतिकूलं च लेखनम्।
वादिद्वेषात् कृतं सर्वं चिरोलेन दुराग्रहात् ॥२१९॥

असल्लेखविनिर्मित्यै तिलको दण्डितः पुरा।
इत्यर्थकं च तद्वाक्यं वादिचारित्र्यदूषकम् ॥२२०॥

असत्यं तत् सर्वथाभूत् चिरोलेन निवेदने।
प्रतिप्रश्नोत्तरे प्रोक्तं स्पष्टं न्यायगृहे स्वयम् ॥२२१॥

कार्सनो भाषणे प्राह चिरोलेन यथार्थतः।
न ज्ञातं सत्यमित्येव प्रमादोऽज्ञानमूलकः ॥२२२॥

दुर्लक्ष्यीकरणीयोऽयं ज्यूरिस्थैः सज्जनैरिति।
कार्सनेन विधानं यत् कृतं तच्च निरर्गलम् ॥२२३॥

शुष्कस्य नष्टमांसस्य चास्थिनश्चर्वणं यथा।
करोति श्वा दीर्घकालं तद्वत् कार्सनभाषणम् ॥२२४॥

चिरोलस्य प्रमादा हि स्वनाम्ना इति याचना।
विविदाख्येऽतिनैपुण्यं तस्य नास्तीति दाक्षाद् ॥२२५॥

विषमः परिणामोऽयं दूरगामीति सज्जनैः ।
कृत्वा विचारं गहनं प्रदेयं स्वमतं च तैः ॥ २३८ ॥

सत्यारिन्द्यार्णवस्यास्य तीरे तु सिकतामये ।
शुक्तिकापि च नायाता कार्सनस्य करे तदा ॥ २३९ ॥

धर्मचक्षुष्मतो ज्ञानं तलस्पर्श्येव विद्यते ।
अन्तःस्थितानां रत्नानां दुर्लभं तस्य दर्शनम् ॥ २४० ॥

प्रतिवादियशःसिद्ध्यै कार्सनेन विलङ्घितः ।
यशोऽर्णवो यद्वदब्धि त्रेतायां वानरैरिव ॥ २४१ ॥

साध्यं प्रज्ञावतामेव सिन्धोरन्तःस्थदर्शनम् ।
तेषां मन्थनकाराणां दिव्यरत्नसुदर्शनम् ॥ २४२ ॥

पुनःपरीक्षणं तस्य सायमनेन कृतं तदा ।
समाप्तिमगमत् षष्ठेऽभियोगस्य दिने किल ॥ २४३ ॥

आङ्ग्लो भारतवासिसर्वजनतावृन्दस्य संशोषणं
　　कृत्वा देशमिमं शताधिकसमाः प्रास्यत् सदास्यार्णवे ।
यण्डं गर्जति प्रौढवैभवमयं माहात्म्यमेव स्वय-
　　मिंग्लंडस्य मुखं निरङ्कुशविदितं टाइम्सपत्रं महत् ॥ २४४ ॥

स्वातन्त्र्यस्य सुहृद् रिपुश्च सुमहान् साम्राज्यवादस्य यो
　　द्रोणाचार्य इवाभवत् कलियुगे यः शापबाणप्रभुः ।
अन्यो लंदनपाश्चात्यपक्षगः साम्राज्यवार्ताहर
　　आयोगे प्रतिवाद्यसौ न कलहो यस्माद् विरोधस्तयोः ॥ २४५ ॥

वाग्युद्धं सकलं तयोरनुदिनं न्यायालये चाङ्ग्लिके
　　नान्दी भारतराज्यकार्यसमरस्येवाभवद् भाविनः ।
तत्रापि प्रखरं बभूव कुतुकस्थानं च लोके महद्
　　युद्धं कार्सनवादिनोरिति मया संक्षेपतो वर्णितम् ॥ २४६ ॥

इति माधवविरचिते श्रीतिलकयशोऽर्णवे कार्सनविग्रहकाण्डनामा सप्ततितमस्तरङ्गः ।

# एकसप्ततितमस्तरङ्गः

ज्यूरिस्थितानां पंचानां भवति श्रमदायकम् ।
परीक्षणं दीर्घकालं यदा न्यायालये भवेत् ॥ १ ॥

अन्वेषणाय सत्यस्य न्यायकार्यस्य भागिनाम् ।
आवश्यको भवेत् कालव्यय एतादृशः किल ॥ २ ॥

क्षमस्वेति प्रार्थयेऽहं यथादौ कार्सनः स्वयम् ।
अन्तिमाद् भाषणात् पूर्वमादौ न्यायालयेऽद्य वै ॥ ३ ॥

अधिवक्ता न्यायपादे करोत्येव समर्थनम् ।
स्वपक्षस्य यथाशास्त्रं न मतस्यात्मनः क्वचित् ॥ ४ ॥

स्थितिः पंचजनानां च मतस्यास्ति तथैव ह ।
कर्तव्यं तैर्न्यायदानं शास्त्रा यच्च पुरस्कृतम् ॥ ५ ॥

स्वपक्षस्य प्रपुष्ट्यर्थं पक्षिभिर्न्यायमन्दिरे ।
वैयक्तिकानां भावानां तत्र नावसरः खलु ॥ ६ ॥

यथा वाजी वाहनस्य राजमार्गेण गच्छति ।
द्विपट्टान्तर्हिताक्षश्च पार्श्वस्थं नावलोकयन् ॥ ७ ॥

तद्वत् सर्वैर्वर्तितव्यं निरतैर्न्यायकर्मसु ।
अत एवोच्यते लोकैरन्धास्ति न्यायदेवता ॥ ८ ॥

दोषिणां बहुनामानि वाचयित्वा च कार्सनः ।
तत्संबन्धस्थापनाय प्रयेते वादिना सह ॥ ९ ॥

स यत्नः सफलो नाभूत् कथयेऽहं सुनिश्चितम् ।
विस्मर्तव्यानि नामानि निर्दिष्टानि निरर्थकम् ॥ १० ॥

अफ्झुल्खानस्य को हन्ता इत्यापन्नस्य युक्तता ।
गोपालेन प्रदत्तस्य चात्मदोषनिवृत्तये ॥ ११ ॥

नैतादृशविचाराणां देयं स्थानं स्वमानसे ।
सुचिन्तनविचाराभ्यां प्रस्तुतन्यायनिर्णये ॥ १२ ॥

राजद्रोहापराधार्थे वालो द्विर्दण्डितः पुरा ।
अप्रस्तुतस्तदुल्लेखो वादवस्तुविनिर्णये ॥ १३ ॥

ज्यूररत्नां निर्णयाय प्रश्न एक उपस्थितः ।
पुस्तकोद्धृतवाक्यानां सत्यमिथ्यात्वनिश्चयः ॥ १४ ॥

अधिकारोऽस्ति टीकाया जनान्तरकृतेरपि ।
लेखकस्येति यत् प्रोक्तं सर्वलोकहिताय हि ॥ १५ ॥

सीमा तस्याधिकारस्य वर्तते वा न चेति वै ।
स्पष्टीकर्तुं निर्णये स्वेऽधिकारो भवतां खलु ॥ १६ ॥

प्रतिकूलं गर्हणीयं चिरोलेन स्वपुस्तके ।
उक्तं तस्य विनिर्देशं कर्तुमिच्छामि संप्रति ॥ १७ ॥

प्रामाणिकत्वबुद्धिर्या सामान्येषूपलभ्यते ।
अभावस्तिलके तस्याश्चिरोलः पुस्तकेऽलिखत् ॥ १८ ॥

चिरोलकृतनिन्दायां ते दोषा इति दर्शिताः ।
परसंबन्धे न्यायमूर्तिरधियस्ता तथैव सः ॥ १९ ॥

शब्दैः स्पष्टैरसंदिग्धैर्वक्तुर्मतमात्मनः ।
अधोलिखितवाक्येन शुद्धया चाङ्ग्लभाषया ।
तिलकस्य न संबन्धो हत्याकाण्डे कथंचन ॥ २० ॥

तिलकस्य प्रतिष्ठाया न विचारः कृतः किल ।
■ द्विवारं महाराष्ट्रे सदस्यः कौन्सिलेऽभवत् ॥ २१ ॥

तत्काले योग्यता तस्य सँदर्हस्यापि संमता ।
काकदृष्टिश्चिरोलो यां दुर्दैवाद् नैव पश्यति ॥ २२ ॥

पुराणोक्तकथोल्लेखं तिलकः स्वसमर्थने ।
अकरोद् भाषणे यस्मिन् प्रभुत्वस्तेन कार्सनः ॥ २३ ॥

यदा यवता स्वसिद्धान्तं स्पष्टीकर्तुं प्रवर्तते ।
युङ्क्ते तदा लोकबुद्धिगम्यं दृष्टान्तमञ्जसा ॥ २४ ॥

डार्लिङ्कार्सनयोर्मध्ये तिष्ठामि न्यायमन्दिरे ।
करोम्यहं वर्णनं तत् सलीलं चाङ्ग्लभाषया ॥ २५ ॥

तिष्ठाम्यहमहो मध्ये दैत्यागाधसमुद्रयोः ।
नाक्षेपार्हं मन्यते तद् देशेऽस्मिन् कोऽपि सज्जनः ॥ २६ ॥

दैत्योदधिप्रयोगेण महत्त्वमुभयोरपि ।
आसीदविकृतं दृष्ट्या सामान्यानां च पूर्ववत् ॥ २७ ॥

ततः क्षोभः कार्सनस्य चिरोलस्य निरर्थकः ।
पुराणग्रन्थदृष्टान्तैर्भाषणे वादियोजितैः ॥ २८ ॥

उल्लेखः केसरीपत्रे रँडस्यैव पुनः पुनः ।
आसीत् प्लेगव्यवस्थाया यतो मुख्यः स केवलः ॥ २९ ॥

कान्हेरे कृतवान् हत्यां जॅक्सनस्येति नासिके ।
तिलकः कारणं तस्याश्चिरोलः पुस्तकेऽलिखत् ॥ ३० ॥

न जॅक्सनस्य नामापि वृत्तपत्रे प्रकाशितम् ।
कदापि तस्य वा तेन समुल्लेखोऽन्यकारणात् ॥ ३१ ॥

तिलकस्तस्य हत्यायाः कारणं वै कथं भवेत् ।
समर्थनं विचित्रं च विहितं प्रतिवादिना ॥ ३२ ॥

पठितं केसरीकाळपत्रयोरितरेष्वपि ।
आसीद् वै भारते राज्यमाङ्ग्लानां दुःखकारणम् ॥ ३३ ॥

लोकानां तद्विनाशाय यत्नोऽवश्योऽस्ति सर्वथा ।
गौराधिकारिणः सन्ति हिन्दभूद्वेषिणस्तथा ॥ ३४ ॥

प्रेरितस्तद्विचारेण निहतो जॅक्सनो मया ।
नैवान्यायः कोऽपि तेन कृतो व्यक्तिगतो मम ॥ ३५ ॥

पश्चात्तापेन तीव्रा मे हृदयस्य व्यथाभवत् ।
कृता हत्या सज्जनस्य वृथा मूढधिया मया ॥ ३६ ॥

अस्मिन् निवेदने तेन संबन्धो वादिना सह ।
तस्य पत्रेण वा नास्ति यत्रकुत्रापि दर्शितः ॥ ३७ ॥

प्रवृत्तिर्दृश्यते नित्यमल्पप्रज्ञापराधिषु ।
आख्यातुं कारणत्वेन नामेतरजनस्य ह ॥ ३८ ॥

जॅक्सनस्य प्राणघाती शासनस्याधिकारिणे ।
प्रादर्शयद् भिन्नकाले भिन्नं भिन्नं च कारणम् ॥ ३९ ॥

न विश्वासास्पदं वाक्यं भयभीतातुरस्य तत् ।
न्यायाधीशेन मन्तव्यं ज्यूरीसंस्थैश्च सज्जनैः ॥ ४० ॥

भवेयुर्वादिलेखेषु चाक्षेपार्हाणि कानिचित् ।
विधानानि ह तुल्यानां देशेऽस्मिन् भारते तथा ॥ ४१ ॥

न वक्तुं सत्यमित्येव चिरोल्लिखितं च यत् ।
वादिनिन्दापरग्रन्थे शक्यं केनापि सर्वथा ॥ ४२ ॥

सायमनो भाषणस्यादौ प्राहाहं स्वल्पभाषणम् ।
करोम्यत्र भवेदन्तं वादस्याद्येति हेतुना ॥ ४३ ॥

वहिर्वादस्य कक्षायाः प्रश्नाः सन्ति महत्तमाः ।
वैभवं च प्रभावश्च साम्राज्यस्य चिरन्तनम् ।
भूयात् संयुक्तराज्यस्य चिन्तेयं भूषणास्पदा ॥ ४४ ॥

सर्वेषामेव लोकानामाङ्ग्लद्वीपनिवासिनाम् ।
विधूयतेऽभिमानस्य त्रिलोक्यां दुन्दुभिध्वनिम् ॥ ४५ ॥

तथापि न्यायकार्येषु दीक्षितानां दृढव्रतम् ।
केन्द्रितव्यो मनोधर्मो वादवस्तुविनिर्णये ॥ ४६ ॥

शासनेन कृता पूर्वं व्यवस्थावश्यकी तु या ।
निधाय तस्यां विश्वासं कुर्यादङ्गीकृतं च यत् ॥ ४७ ॥

अविभक्तेन चित्तेन न्यायरीतिमनुसरन्।
न्यायवर्त्मनि संतिष्ठन् पालयन् निर्मलं व्रतम् ॥ ४८ ॥

अत एव प्रार्थयेऽहं न्यायदानार्थमागतः।
दूरीकृत्य बहिःप्रश्नान् कुर्युर्लक्ष्ये स्थिरं मनः ॥ ४९ ॥

प्रश्नानामुचितानां तु करोम्यद्य विवेचनम्।
सावधानेन चित्तेन श्रूयतां भाषणं मम ॥ ५० ॥

उच्चजातिसमुद्भूतस्तिलकः संमुखः स्थितः।
विनिन्दितद्विरोलेन कर्तुं न्यायस्य याचनाम् ॥ ५१ ॥

आङ्ग्लन्यायासनस्यास्ति परीक्षासमयो महान्।
सर्वदाव्यभिचारेण पूज्यते न्यायदेवता ॥ ५२ ॥

न्यायालये साम्यदर्शिनि नीचोच्चविचारणा।
धर्मदण्डप्रमाणेन भीयन्ते मानवा इह ॥ ५३ ॥

आङ्ग्लन्यायासनं मूलं न्यायदाने प्रतिष्ठितम्।
वर्णधर्मादिभेदानां न स्थानं न्यायमन्दिरे ॥ ५४ ॥

अभिमानस्थानमेतदाङ्ग्लसाम्राज्यवादिनाम्।
अद्यैव निकषो भूयाद् भवतां भाविनिर्णयः ॥ ५५ ॥

न्यायाधीशो न जानाति मित्रं शत्रुं पृथक् पृथक्।
विलोकयति दोषं च गुणं चापि नरस्य सः ॥ ५६ ॥

उपस्थितस्य न्यायार्थं पुरतो निजमन्दिरे।
कृत्वाभ्यासं विचारं स प्रोद्घोषयति निर्णयम् ॥ ५७ ॥

इति कीर्तिः पालनीया न्यायस्थाने विशेषतः।
न्यायाधीशेन ज्यूरीस्थैः सज्जनैर्न्यायदीक्षितैः ॥ ५८ ॥

इतिहासे सुप्रसिद्धो वादिराष्ट्रपराक्रमः।
कुलशीलादिसंपन्नो वादी तिलकवंशजः ॥ ५९ ॥

तथाऽिन्यविचारस्य सूक्ष्ममेव समीक्षणम् ।
मतप्रदर्शनात् पूर्वं कर्तव्यं ज्यूरिसज्जनैः ॥ ६० ॥

गोरक्षणस्य प्रश्नोऽस्ति हिन्दुधर्मेण संयुतः ।
न श्रद्धया स्वधर्मस्य चर्चितो वादिनेति सः ॥ ६१ ॥

भूमिकेयं चिरोलस्य वादिचारित्र्यघातिनी ।
आरोपोऽयं कृतोऽसत्यो ग्रन्थेऽस्मिन् प्रतिवादिना ॥ ६२ ॥

तिलकस्थापितैकापि संस्था गोरक्षणाभिधा ।
विद्यते न महाराष्ट्रे किंवान्यत्रैव भारते ॥ ६३ ॥

असत्यं च विधानं तद् वादिचारित्र्यघातकम् ।
निःसंशयं सिद्धमेव भाषणे दर्शितं मया ॥ ६४ ॥

शिवोत्सवपुरस्कारं तिलकः श्रद्धया युतः ।
चक्रेऽखिले महाराष्ट्रे चिरोलस्तेन दुःखितः ॥ ६५ ॥

विपरीता कृता टीका ग्रन्थे तेन तु सर्वथा ।
आङ्ग्लदेशस्थलोकेषु कर्तुं वृत्तिं विरोधिनीम् ॥ ६६ ॥

केसरीपत्रलेखानां वाचनाद् योग्यकल्पना ।
उत्पद्यते महत्त्वस्य शिवाजेश्छत्रधारिणः ॥ ६७ ॥

लोकोत्तरो मानवेषु चक्रे यत्नं यशस्विनम् ।
महाराष्ट्रे स्थापयितुं स्वराज्यं हिन्दुधर्मिणाम् ॥ ६८ ॥

युद्धं कृत्वा महायुक्त्या तेजसा साहसेन च ।
संपादितं यशस्तेन लोकविस्मयकारकम् ॥ ६९ ॥

स्वराज्यं घोषितं तेन समुच्छ्रित्य नवध्वजम् ।
रायदुर्गे राजधान्यां तुच्छीकृत्यैव मोगलम् ॥ ७० ॥

तिलकेन समारब्धः दिवसस्यास्य महोत्सवः ।
नैराश्योद्विग्नलोकेषु कर्तुमुत्साहवर्धनम् ॥ ७१ ॥

तद्वदेव गणेशस्य चोत्सवस्य प्रथा नवा ।
निर्मिता तत्प्रसाराय यत्नस्तेन कृतो महान् ॥ ७२ ॥

आक्षेपाणां यथायोग्यमुत्तरं तिलको ददौ ।
केसरीपत्रलेखेषु पठितव्यं च सज्जनैः ॥ ७३ ॥

उत्सवाभ्यामसंतुष्टा केचिद् मुस्लिमबान्धवाः ।
नवोत्सवस्थापकस्य दोषस्तत्र न विद्यते ॥ ७४ ॥

धर्मनिष्ठा परित्याज्या नैव लोकैः सुधार्मिकैः ।
समाधानाय लोकानां भिन्नधर्मानुयायिनाम् ॥ ७५ ॥

भूषणं तच्च राष्ट्रस्य यत्र भिन्नजनाः सुखम् ।
वसन्ति साहचर्येण सानन्दं सादरं यदा ॥ ७६ ॥

हिन्दुमुस्लिमसंघर्षो वर्णितः प्रतिवादिना ।
संघर्षोऽभूत् पूर्वकाले भिन्नस्थानेषु भारते ॥ ७७ ॥

न यत्र कोऽपि संबन्धस्तिलकस्याभवत् क्वचित् ।
तिलकः कारणं तस्य वदत्युच्चैस्तु दुर्जनः ॥ ७८ ॥

ब्रह्मापि नो रञ्जयति दुर्महग्रस्तमानवम् ।
कद्युक्तिः प्रत्ययं याति दर्शनादविवेकिनः ॥ ७९ ॥

हिन्दुमुस्लिमसंघर्षो वर्णितः प्रतिवादिना ।
पाणियुग्मस्य संघर्षात् संभवेत् तालिकाध्वनिः ॥ ८० ॥

एकेनैव स्वहस्तेन न भवेत् तालिकाध्वनिः ।
संघर्षेण तथावश्या पक्षद्वन्द्वात्मिका स्थितिः ॥ ८१ ॥

संघर्षस्येतिवृत्तं च शासनेन प्रकाशितम् ।
संघर्षस्य स्थितिस्तत्र वर्णितोभयपक्षयोः ॥ ८२ ॥

वृत्तं तद् हि चिरोलेन न दृष्टमिति विस्मयः ।
शासनेन कृतं सर्वं साहाय्यस्यैव कर्मणि ॥ ८३ ॥

जागरूकोऽस्ति नित्यं वै तस्य प्रतिनिधिः स्वयम् ।
तत्परस्तस्य साह्याय दृश्यते न्यायमन्दिरे ॥ ८४ ॥

प्रान्तेशस्य मतं स्पष्टमितिवृत्ते तु वर्तते ।
संघर्षस्यास्ति मूले न गोरक्षणमहोत्सवः ॥ ८५ ॥

मल्लविद्याशिक्षणस्य स्थानमाखाडकं विदुः ।
प्रायः प्राकृतभाषासु विद्यमानासु भारते ॥ ८६ ॥

तिलकस्थापितं नैकं क्रीडास्थानं च वर्णितम् ।
कुत्रापि तु महाराष्ट्रे नूतनं वा पुरातनम् ॥ ८७ ॥

बालस्य नातुभ्रात्रोश्च संबन्धः सुदृढोऽभवत् ।
न प्रमाणं विधानस्य तत्संबन्धस्य दर्शकम् ॥ ८८ ॥

राजद्रोहापराधार्थं कृतं तिलकबन्धनम् ।
ऋषिग्रहमिते वर्षे साष्टादशशतोत्तरे ॥ ८९ ॥

तस्मिन्नब्दे नातुबन्धू पुण्यपुर्यां निरोधितौ ।
मृतप्रायस्थिताशाया आधाराच्च शासनेच्छया ॥ ९० ॥

बहिष्कृतोऽसौ नातृभ्यां बालो ब्रह्मसमूहतः ।
संबन्धः सहकार्यस्य दर्शकोऽयं कथं भवेत् ॥ ९१ ॥

आङ्ग्लराज्यविनाशाय यूनां साह्येन सर्वथा ।
प्रयत्नं तिलकश्चक्र इत्युक्तं प्रतिवादिना ॥ ९२ ॥

भृशमुक्तं चिरोलेन वादी बुद्धिमतां वरः ।
कथं न दृश्यते तेन स्ववचःसत्यसंगतिः ॥ ९३ ॥

नैवाक्षेपस्य वै दत्तमुत्तरं प्रतिवादिना ।
ज्यूररैः श्रवणीयं तद् निधातव्यं च मानसे ॥ ९४ ॥

तीव्राघातैः प्रतोदस्य विपुलो धनसंचयः ।
आन्दोलनस्य सिद्ध्यर्थं लोकेभ्यो वादिना कृतः ॥ ९५ ॥

उक्तं स्वभाषणे वक्त्रा कार्सनेन यथाश्रुतम् ।
प्रतोद इति शब्दोऽयं मूलार्थे नैव योजितः ।
गौणार्थ एव स्पष्टं स चिरोलेन स्वपुस्तके ॥ ९६ ॥

अनवद्यं कार्सनस्य भाष्यमेतत् तथाप्यहम् ।
विश्वासं विदधे तस्मिन् गौणार्थेनैव योजना ॥ ९७ ॥

प्रतोदस्य कृता ग्रन्थे विषयस्य विवेचने ।
आसीद् मतं चिरोलस्य चास्माकमपि संमतम् ॥ ९८ ॥

एतादृशं तद्विधानं गौणार्थे पठनादपि ।
अभिप्रेतं ग्रन्थकर्त्रा यद्विचारिष्यदूषणम् ॥ ९९ ॥

पुष्टीकर्तुं स्वसिद्धान्तं पार्लमेंटसभासदः ।
विरोधिनस्ताडयन्ति दुःशब्दैर्मर्मभेदिभिः ॥ १०० ॥

वक्ता प्रयोजको भूयाद् यदि कोऽपि वदेत् खलु ।
उद्देशस्तीव्रटीकाया वाममार्गावलम्बनम् ॥ १०१ ॥

उत्पाद्यैव प्रतिस्पर्धिहृदये तु महाभयम् ।
चिकीर्षुरर्जनं तस्माद् द्रव्यस्यैव कथंचन ॥ १०२ ॥

एवंविधं चिन्तयतो वदतो नैव मान्यता ।
स्थानं किल समाजे स्यात् प्रजातन्त्रस्य शासने ॥ १०३ ॥

चारित्र्यहानिकार्येऽस्मिन् विवादानां समर्थनम् ।
आवश्यकं च वाक्यानां रक्षणे प्रतिवादिनः ॥ १०४ ॥

न्यायशास्त्रस्य सिद्धान्तो मूलाधारस्य सुस्थितः ।
न्यायसंस्थामन्दिरस्य प्रस्तारश्च व्यवस्थितः ॥ १०५ ॥

तन्न्यायहेलनं क्रियाविवेको वापि विस्मृतिः ।
विवादिनो भूमिकायाः सर्वथा हानिकारिणी ॥ १०६ ॥

एकोपायोऽस्ति तत्रैव यदुक्तं तत्समर्थनम् ।
न्यायालये सप्रमाणं तर्कनीतिसमन्वितम् ॥ १०७ ॥

न्यायाधीशेन स्मर्तव्यं ज्यूरिस्थैः सज्जनैरपि ।
स्वराज्यं वादिना प्रोक्तं साम्राज्यान्तर्गतं भवेत् ।
स्पष्टीकृतं वादिना तद् बहुवारं स्वभाषणे ॥ १२० ॥

राष्ट्रव्यापिक्रान्तियुद्धे हिंसावर्ज्येऽपि काश्चन ।
आवश्यक्यो भवन्त्येव घटना अनपेक्षिताः ॥ १२१ ॥

शान्ततास्थापनोद्देशाः समायाता नरोत्तमाः ।
आततायिन्यकरोद् यत्नं यथार्थं कोऽपि कस्यचित् ॥ १२२ ॥

परिव्राजकदण्डस्तु परित्यज्यापराधिनम् ।
अयुक्तोऽसौ सर्वथेति मन्यते नीतिशास्त्रिभिः ॥ १२३ ॥

ताईकार्यस्य निर्देशः किमर्थं प्रतिवादिना ।
कृतो ग्रन्थे प्रचण्डे स्वे जिज्ञासा मयि वर्तते ॥ १२४ ॥

प्रोत्तरं दृश्यते किंचित् प्रदत्तं प्रतिपक्षिणा ।
न्यायालयीनवक्तृत्वे वादिवक्तुश्च भाषणे ॥ १२५ ॥

चिरोलेन स्वग्रन्थस्य ह्युद्देशः कथितः स्वयम् ।
भारते विद्यमानस्य चासंतोषस्य कारणम् ।
मया कृता समन्वेष्टुं हिन्दयात्रेति मुख्यतः ॥ १२६ ॥

वर्तते किं तु संबन्धस्ताईकार्यस्य भारते ।
असंतोषेण दृष्टेन चिरोलेन स्वचक्षुषा ॥ १२७ ॥

आवश्यकमिति ज्ञात्वा वादिनाङ्गीकृतं च तत् ।
मृत्युशय्याप्रपन्नस्य मित्रस्येच्छेति केवलम् ॥ १२८ ॥

वैयक्तिकं तत्स्वरूपं मृतमित्रस्य संपदाम् ।
विधवायाः सुखस्यापि व्यवस्थाया निरीक्षणम् ॥ १२९ ॥

अन्यविश्वस्तमित्राणां विचारेण च चालनम् ।
इच्छापूर्त्यै स्वर्गतस्य सुहृदो वै विशेषतः ॥ १३० ॥

चर्चाया विषयस्यास्य चिरोलस्य प्रयोजनम् ।
न दृश्यते तु कुत्रापि पृथक्त्वेन निदर्शितम् ॥ १३१ ॥

चिरोलो व्यलिखद् ग्रन्थे लेखनस्य प्रयोजनम् ।
भारते विद्यमानस्य ह्यसंतोषस्य शोधनम् ॥ १३२ ॥

यश्चिता तिलकेनैका युवती विधवेति यः ।
उद्घाक्रोशः पुस्तके स्वे लेखकेन कृतः खलु ॥ १३३ ॥

असंतोषस्य शोधार्थं नैव तस्य प्रयोजनम् ।
यदं कृतं तस्य चित्ते विद्वेषादिकदुर्गुणैः ॥ १३४ ॥

कृष्णेन वर्णिता चास्ति गीतायां संपदासुरी ।
तत्प्रभावाद् चिरोलस्य बुद्धिर्वै भ्रष्टतां गता ॥ १३५ ॥

वैयक्तिको मत्सरश्च विद्वेषः क्रोध एव च ।
कारणं तादृकार्यस्य निर्देशास्त्वेत्यसंशयम् ॥ १३६ ॥

चंदावर्करनिर्णयस्य वृथाधारोऽवलम्बितः ।
सोऽन्याय्य इति वै सिद्धः सर्वोच्चन्यायनिर्णये ॥ १३७ ॥

प्रामाणिको न वादीति प्रतिवादिप्रजल्पनम् ।
अप्रस्तुतं निराधारमविचार्यं च सज्जनैः ॥ १३८ ॥

अदत्त्वा तादृकार्यस्य वृत्तं किमपि लेखने ।
चंदावर्करनिर्णयस्य कृतमङ्गुलिदर्शनम् ॥ १३९ ॥

सावेशं सायमनः प्राह कार्सनं प्रति मुख्यतः ।
प्रवर्तते जनः कोऽपि ह्यसंतोषस्य शोधनम् ॥ १४० ॥

कर्झमीरप्रदेशे च गत्वा तेन कृतं यदि ।
धुरीणव्यक्तिदोषाणां दर्शनं वै कुटुम्बशः ॥ १४१ ॥

प्रामाणिको जनो नायमपवादस्य वर्णनम् ।
लोकक्षोभकरं तत् तु क्षटित्येव भवेत् किल ॥ १४२ ॥

भवेच्च तच्छोधकस्य विषये क्रोधभावना ।
अप्रस्तुतविधानेन क्षोभो निःसंशयं भवेत् ॥ १४३ ॥

न रोचते स्वात्मने यत् तदन्यस्मा अरोचकम् ।
इयं न्यायस्य नीतेश्च भूमिका वै सुसंमता ॥ १४४ ॥

विषयेऽस्मिन् दर्शितं न प्रमाणं न्यायमन्दिरे ।
समर्थनक्षमं किंचित् प्रोक्तं न प्रतिवादिना ॥ १४५ ॥

विद्वेषाद् वादिनस्तेन प्रोक्तमप्रस्तुतं च तत् ।
इत्येव स्वमतं युक्तं दातव्यं सज्जनैः किल ।
अनुकूलं वादिनश्च विरुद्धं प्रतिवादिनः ॥ १४६ ॥

विपरीतमतस्यापि परिणामो भवेत् कथम् ।
निवेदनं सुबोधाय संक्षेपेण करोम्यहम् ॥ १४७ ॥

ज्यूरीसंस्थायशः सर्वं भवेदेव कलङ्कितम् ।
सत्यनिर्णयसामर्थ्यं नष्टमेव मया कृतम् ॥ १४८ ॥

इति प्रौढिं चिरोलोऽयं कर्तुं शक्नोति निर्भयः ।
भवेज् ज्यूरीयशस्तेन राहुग्रस्तार्कवत् तदा ॥ १४९ ॥

मतदानमिदं सर्वं भवद्भिश्चिन्त्यतां खलु ।
रक्षणाय प्रतिष्ठाया आङ्ग्लन्यायासनस्य च ॥ १५० ॥

हत्यायाः कारणं वादी रैंडऑक्सनयोरयम् ।
इत्यारोपस्य सिद्ध्यर्थं प्रमाणं नोपलभ्यते ॥ १५१ ॥

समाजे वादिनः स्थानं विद्यते सुप्रतिष्ठितम् ।
आनीतव्यं शुद्धबुद्ध्या चित्ते तद् न्यायदातृभिः ॥ १५२ ॥

प्लेगस्थलेषु सर्वेषु वादिना यः परिश्रमः ।
दुःखोपशमकार्येषु कृतः करुणचेतसा ॥ १५३ ॥

मुक्तकण्ठं प्रशंसा या स्ट्राचिना निर्णये कृता ।
सर्वमेतच्च मन्तव्यं तदुद्देशस्य निश्चये ॥ १५४ ॥

अहं समर्थनं कर्तुमागतोऽस्मीह वादिनः ।
टीकाया विषयो वादी प्रेरितः शुद्धहेतुना ॥ १५५ ॥

सम्यक् च चिन्तनं कृत्वा समालोच्य परिस्थितिम् ।
अवशिष्टा न मे शङ्का वादिसद्धेतुबाधिका ॥ १५६ ॥

चापेकराभ्यां भ्रातृभ्यां साक्ष्ये दत्तेऽपि कुत्रचित् ।
बालस्य तत्पत्रयोश्च नामोल्लेखो न विद्यते ॥ १५७ ॥

यांशोत्पत्तिर्यादृलेखाज् जाता क्रिया भविष्यति ।
एवंविधविधानस्य प्रमाणं नोपलभ्यते ॥ १५८ ॥

संदेशो भाषणे यूनां दत्तो बालेन नासिके ।
पन्थाः श्रेयस्करो नैव विद्यते क्रान्तिकारिणाम् ॥ १५९ ॥

एतानि षड् विधानानि वादिना खण्डितानि वै ।
अवश्यं वादिने देयं द्रव्यं तु प्रतिपक्षिणा ॥ १६० ॥

वादी प्रार्थयते न्याय्यं न हि द्रव्यमिति स्थितिः ।
योग्यं यत् तत् प्रदेयं च कथ्यतेऽन्ते निवेदनम् ॥ १६१ ॥

न साम्राज्यसुरक्षायाः साधनं सैनिकं बलम् ।
तत्रस्थितन्यायसंस्था विश्वास्यैवास्तु सर्वथा ॥ १६२ ॥

तस्मात् सर्वप्रधानेन न्याये श्रद्धा दृढा भवेत् ।
इत्येवाचरणे श्रेयः साम्राज्यस्य हितैषिणाम् ॥ १६३ ॥

अभ्यायोगस्य कोऽन्तः स्याज् जिज्ञासा प्रबलास्ति हि ।
अस्मिन् न्यायप्रतिष्ठा किं विलुप्ता विश्रुतागसा ।
एवं सर्वं समालोच्य दानार्थं सज्जनैर्मतम् ॥ १६४ ॥

# द्विसप्ततितमस्तरङ्गः

भाषणान्ते सायमनस्य न्यायमूर्तिरुपाक्रमत् ।
ज्यूरीसदस्यबोधाय समारोपस्य भाषणम् ॥ १ ॥

अस्य कार्यस्य विषयो यशोहानिसमीक्षणम् ।
पुण्यप्रेम्णो मनुष्यस्य यशःप्रेमाधिकं भवेत् ॥ २ ॥

दुष्टस्यापि वृथा निन्दा तस्य कीर्तिविघातिनी ।
संमतं वै धुरीणानां शास्त्रतत्त्वविदामपि ॥ ३ ॥

चरिते तिलकस्यास्ति गम्भीरो जटिलस्तथा ।
आक्षेपसुलभो दोषः प्रतिपक्षिप्रदर्शितः ॥ ४ ॥

द्विवारं दण्डितो सोऽभूद् राजद्रोहीति भारते ।
न्यायालये वादिनेह स्वीकृता तस्य सत्यता ॥ ५ ॥

कृत्वाङ्गुलिविनिर्देशं मां चेत् कोऽपि वदेज्ज जनः ।
राजद्रोहीति सिद्धोऽयं केसरीपत्रलेखकः ॥ ६ ॥

न तेन मे यशः किंचित् मन्येऽहं च कलङ्कितम् ।
न तदर्थमहं किंचित् करोमि परिदेवनम् ।
कृतप्रश्नस्योत्तरे च स्वयं वाल इहावदत् ॥ ७ ॥

न सामान्यापराधोऽयं राजद्रोहाभिसंज्ञकः ।
सम्राड्द्रोहादल्पमेव नीचस्थाने स्थितो ह्ययम् ।
दोषश्रेण्यां पुस्तकेषु राष्ट्रास्तित्वविघातकः ॥ ८ ॥

सिद्धिं कर्तुं द्रीक्षनस्य प्रत्यक्षकृतिप्रत्ययः ।
न्यायाधीशाय दातव्यमिति न्यायविदां मतम् ॥ ९ ॥

नैतादृशा क्षतिः कापि तिलकस्येति दर्शितम् ।
तद्विरुद्धे निर्णयेऽपि न्यायनिर्णयकारिणा ॥ १० ॥

न्यायालये भारतस्य न तच् चिन्त्यं भवेदिह ।
अस्वास्थ्यपीडिते देशे बांबस्फोटो भयावहः ॥ ११ ॥

मन्तव्या घटना घोरा राजद्रोहस्य कारणात् ।
न दोषोऽस्त्यनुमानेऽस्मिन् कोऽपि ज्यूरिस्थसज्जनाः ॥ १२ ॥

आक्षेपार्हेषु वाक्येषु न सर्वेषां समानता ।
वादिनश्च प्रतिष्ठाया यशसो हानिमापने ॥ १३ ॥

परदेशादागतोऽयं शुभ्मन्न्यायालयं प्रति ।
न्यायस्य जागृतं स्थानमिति तस्य दृढा मतिः ॥ १४ ॥

धैर्यस्य च पराकाष्ठां न्यायनिष्ठाप्रदर्शनम् ।
कुर्वन्त्विति सायमनेन प्रार्थिता ज्यूरिसज्जनाः ॥ १५ ॥

आङ्ग्लो न्यायी प्रकृत्यासौ परेषां न्यायकारकः ।
प्रसङ्गेन करोत्येव स्वकीयस्य च रक्षणम् ॥ १६ ॥

उदारचरितस्यास्ति ह्यास्था परहिते सदा ।
मतमेव ततस्तेभ्यो नैवान्यायभयं क्वचित् ॥ १७ ॥

विषयाः षड् विनिर्दिष्टाः प्रार्थिपत्रे विशेषतः ।
तत्संबद्धविधानानां निर्देशं च पृथक् पृथक् ॥ १८ ॥

कृतया प्रार्थ्यते वादी प्रत्येकस्य परीक्षणम् ।
कर्तव्यं मतदानार्थं ज्यूरिणापि पृथक् पृथक् ॥ १९ ॥

तत्पृथक्करणं मन्ये मतदानाय ज्यूरिरैः ।
निरर्थकं सर्वथैव त्वपकीर्तिविनिर्णये ॥ २० ॥

मतदानाधिकारोऽयं ज्यूरिसंस्थसभासदाम् ।
शतकेऽष्टादशे प्राप्तो न्यायप्रगतिकारकः ॥ २१ ॥

ज्यूरिस्थसज्जनाः सर्वे प्रातिनिध्याधिकारिणः ।
जनतायाः स्वदेशस्य श्रेष्ठशास्त्रविदां मते ॥ २२ ॥

महती योग्यता तस्मात् सज्जनानां विनिर्णये ।
मतं व्यक्तिगतं नैव किंतु राष्ट्रमतं हि तत् ॥ २३ ॥

चंद्रावर्कर्निर्णयोऽसौ यद्बुधोल्लेखितोऽभवत् ।
नष्टप्रायस्तु संजातः तद्द्वैधत्वनिराकृतेः ॥ ३५ ॥

सारांशस्तन्निर्णयस्य मुद्रितः प्रतिवादिना ।
प्रतिवादी न दोषार्हो यथार्थश्च भवेद् यदि ॥ ३६ ॥

प्रकाशने तत्सारस्य बाधते न निराकृतिः ।
उद्यन्यायसमुद्भूता ग्रन्थे स्वे प्रतिवादिना ॥ ३७ ॥

निर्णेतव्यं तथा सभ्यैर्युक्तायुक्तत्वमेव च ।
हिन्दुमुस्लिमसंघर्षलेखानां प्रतिवादिनः ॥ ३८ ॥

संघर्षलेखाः पठिता न्यायस्थाने द्विपक्षिणोः ।
जनैरधिकृतैः सर्वैर्भवतां श्रुतमेव तत् ॥ ३९ ॥

न प्रमादो विधानेषु कृतेषु प्रतिवादिना ।
नास्ति तेषु विधानेषु किंचित् कीर्तिविनाशकम् ॥ ४० ॥

सज्जनैः श्रुतमेवैतत् पठितं पक्षयकृभिः ।
विद्यार्थिभिः कृतं देशे तीव्रमान्दोलनं तदा ॥ ४१ ॥

तिलकस्य न सिद्धस्तु छात्रैः शालानुगामिभिः ।
संबन्धः कीदृशोऽपीति युक्तापेक्षा न सा भवेत् ॥ ४२ ॥

विद्यार्थिनो भारतेऽस्मिंस्तिलकेन प्रचोदिताः ।
आन्दोलनस्य कार्याय चेत्याक्षेपो न मण्डितः ।
चिरोलेन प्रमाणेन मन्तव्यं नोचितं च तत् ॥ ४३ ॥

नैवासीत् स्नेहसंबन्धः कोल्हापुरमहीपतेः ।
वादिना सह तस्माद् वा औदासीन्यं परस्परम् ॥ ४४ ॥

वादिना वृत्तपत्रे स्वे प्रोत्साहितमहोत्सवे ।
शिवाजेरत्र गणेशस्य धर्मस्योत्थानकारके ॥ ४५ ॥

स्वदेशीव्रतनिष्ठाया विषयो व्यावहारिकः ।
हेतुः प्रवर्तनस्यासीद् होलिकोद्दीपनस्य सः ॥ ४६ ॥

किं यत्नो भस्मसात् कर्तुमाङ्ग्लवस्तूनि केवलम् ।
आन्दोलने कृतो घोरे तिलकेन प्रवर्तिते ॥ ४७ ॥

इष्टं खलु स्वराज्यं यत् साम्राज्यान्तर्गतस्थितम् ।
अस्मिन् न्यायालये वादिनोक्तमात्मनिवेदने ॥ ४८ ॥

सोऽर्थः सर्वेषु लेखेषु तस्य किंतु न दृश्यते ।
कथं तस्य विधानं च याति विश्वासयोग्यताम् ॥ ४९ ॥

ऊनं वै मोगलानीकादाङ्ग्लसैन्यं च भारते ।
संख्ययेति विधानं यत् तिलकेन पुरा कृतम् ॥ ५० ॥

हेतुस्तस्यैव लोकेभ्य आङ्ग्लराज्यविरोधकम् ।
कर्तव्यं प्रबलोत्थानमितीयं चोदना खलु ॥ ५१ ॥

मोगलानां पारिपत्यं महाराष्ट्रे कृतं पुरा ।
जनैर्दृष्यादिहीनैश्च शिवराजपुरस्कृतैः ॥ ५२ ॥

आखाडामिमितैर्हेतुरेको व्यायामशिक्षणम् ।
तरुणेभ्योऽथवान्यश्च निर्णेतव्यं च सज्जनैः ॥ ५३ ॥

प्रतोदस्य प्रहारैश्च कृतं द्रव्यार्जनं खलु ।
निधिरेको महांस्तेन वादिना स्थापितोऽभवत् ॥ ५४ ॥

अथ प्रतोदशब्दस्य कार्सनेन पुरस्कृतम् ।
सायूमनो न निराकर्तुं यशः प्राग निजोत्तरे ॥ ५५ ॥

दत्तश्चस्य निमित्तेन तिलकद्वेष्टृभिः कृतः ।
नाशाय कुटिलो यत्नस्तिलकस्यैव सर्वथा ॥ ५६ ॥

अभवत् सोऽस्टनस्तस्य षड्यन्त्रस्य प्रचोदकः ।
साई गता दर्शनाय ह्यस्टनस्येति विश्रुतम् ॥ ५७ ॥

दुष्टबुद्धिस्तु दुष्टानां काले भवति कुण्ठिता ।
स्वभावादेव सत्यस्य दृश्यते रूपमुज्ज्वलम् ॥ ५८ ॥

पूर्वारब्धं कार्यमेकं दिवाणिन्यायमन्दिरे ।
स्थगितं दीर्घकालं यद् बहुव्यत्ययकारणात् ॥ ५९ ॥

घोषितो निर्णयस्तस्य पुणेन्यायाधिकारिणा ।
वर्षद्वयान्वेषणान्ते सोऽनुकूलश्च वादिनः ॥ ६० ॥

उच्चन्यायालये मूलन्यायाद् निरसनेच्छया ।
अपीलं स्थापितं तेन पराभूतविपक्षिणा ॥ ६१ ॥

न्यायमूर्तिद्वयं तस्य श्रवणार्थं नियोजितम् ।
चंदावरकर्हीरनौ तौ परस्परविरोधिनीम् ॥ ६२ ॥

भूमिकां सकलां श्रुत्वा पक्षद्वयसमर्थिताम् ।
विरुद्धं वादिपक्षस्य चक्रतुर्निजनिर्णयम् ॥ ६३ ॥

चंदावर्कनिर्णयस्य खण्डनाय ततोऽगमत् ।
लब्धविरया सप्तसिंधुस्तिलकः प्रीविमण्डलम् ॥ ६४ ॥

चंदावरकर्न्यायमूर्तेर्निर्णयोऽभूद् निराकृतः ।
विनिर्णयो दावरस्य मिथ्या नैव कृतोऽभवत् ॥ ६५ ॥

षड्वत्सरावधिस्तेन कारागारे निबद्धता ।
सोढेति घटना घोरा चिन्तनीया भवेदिह ॥ ६६ ॥

किं वै मूल्यं चरित्रस्य पुरुषस्यापराधिनः ।
विचारः शान्तचित्तेन कर्तव्यो ज्यूरिसज्जनैः ॥ ६७ ॥

यद् प्रश्नान् वादिनिर्दिष्टांश्चिन्तयित्वा समासतः ।
देयं मतं चिरोलः किमपराधीति वा न वा ॥ ६८ ॥

भवेद्य युक्तः कार्येऽस्मिन् सर्वप्रश्नसमुच्चयः ।
सद्भक्त्या ज्यूरिसंस्थाया अन्यस्थानं ततः परम् ॥ ६९ ॥

गताः सर्वे विचारार्थं कर्तुं स्वमतनिर्णयम् ।
आगता अल्पकालेन पुनश्च न्यायमन्दिरम् ॥ ७० ॥

सर्वैरपि मतैक्येन निर्दोषः प्रतिवाद्यसौ ।
इति सामूहिकं व्यक्तं मतं ज्यूरिस्थसज्जनैः ॥ ७१ ॥

विशिष्टा याचिता ज्यूरी वादिनेति निवेदनम् ।
न्यायेशाय यदा स्पष्टं कार्सनोऽपि तदावदत् ॥ ७२ ॥

अनुकूलो निर्णयो मो देयं द्रव्यं व्ययीकृतम् ।
स्वीकृता सा झटित्येव न्यायाधीशेन याचना ॥ ७३ ॥

प्रश्नं पप्रच्छ डार्लिंगः पंचानामग्रिमं प्रति ।
निर्णयो नानुकूलः किं द्वितीयप्रतिवादिनः ।
वादमित्युत्तरं दत्तं तत्कालं पंचसज्जनैः ॥ ७४ ॥

आस्मा भारतदेशवासिजनतासामान्यदेहस्थितः
सम्राड् लोकहृदि स्थितः सुविततः श्रीबालगङ्गाधरः ।
आङ्ग्लस्तद्विषयान्ध एव जडधीराढ्योऽधिकारप्रियो
ज्ञातुं तत् तिलकस्वरूपममलं मूढो न येते क्वचित् ॥ ७५ ॥

शुभ्रा भारतदास्यमोचनमतिर्यत्नस्तु तत्सिद्धये
दिव्यं भारतजीवने सुविततं स्थित्यन्तरं सोऽकरोत् ।
राष्ट्रोत्थानविशालकर्मनिरतः सन् ध्येयनिष्ठोऽपि यद्-
दृष्टिः साधनयोजनासु विमला यस्त्वेकनिष्ठाभवत् ॥ ७६ ॥

आङ्ग्ले न्यायमतिः प्रबुद्धसुजने प्रायोऽधिका वर्तते
विश्वासो दृढमूल एव तिलकेऽभ्यासात् स्वदेशस्थिते ।
निःशस्त्रप्रतिकारमूलमखिलं सद्भावनाभावनं
न्यायादिव्यवहारकार्यकुशले सापत्नमुख्ये तथा ॥ ७७ ॥

घोरं न्यायविडम्बनं च सकलं डार्लिंगहस्तेन यज्
जातं तीव्रतमं जनस्य हृदये स्थित्यन्तरं तेन च ।
दग्धो न्यायतरुश्च लंदनवने साम्राज्यदावाग्निना
डार्लिंगेन च तेन बोधिविटपी श्वासानिलैः स स्वयम् ॥ ७८ ॥

पंजाबे घटिते विभीषणतमे डायरेण संचोदिते
हत्याकर्मणि दोषभाग् न जनरल्डायरोऽथवाँड्वायरः ।
श्रुत्वा हंटरदत्तनिर्णयमिमं गान्धिः स्वयं प्रोक्तवान्
विश्वासो मम नष्ट आङ्ग्लनृपतेर्न्यायेऽधुना सर्वथा ॥७९॥

संजाता स्थितिरेव शुद्धमनसि श्रुत्वैव डार्लिग्मतं
तद्वत् तेन समानदृष्टिरधिका प्रोत्तुङ्गनेतृद्वये ।
उक्तं यीशमिशानुयायिहृदये श्रीलोकमान्यस्य च
सत्ताधीशविदेशशासकगणैः त्यागस्य वैरस्य च ॥ ८० ॥

भवतु भवतु नष्टं दैन्यमस्मज्जनस्य
भवतु पुरुषयत्नश्चात्मविश्वासयुक्तः ।
भवतु भरतभूमिर्भाग्यलक्ष्मीनिवासः
प्रसरतु समताया विश्वगोले स्वराज्यम् ॥ ८१ ॥

इति माधवविरचिते श्रीतिलकयशोऽर्णवे स्वार्थविसर्जननामा द्विसप्ततितमस्तरङ्गः ।

# त्रिसप्ततितमस्तरङ्गः

देशोद्धारप्रवृत्तीनां कार्यरूपेण वृद्धये ।
गाङ्गाधरे राजनीतेर्लोकोद्योगविवृद्धये ॥ १ ॥

क्रियाशीलयतां यूनां समूहाश्च स्थले स्थले ।
संस्थापिता महाराष्ट्रे कर्णाटकविदर्भयोः ॥ २ ॥

तत्क्रियायाः स्वरूपेण नवचैतन्यनिर्मितिः ।
जाता सामान्यलोकेषु दुःसहा प्रतिपक्षिणः ॥ ३ ॥

वैमनस्यं च निष्पन्नं शासनस्याधिकारिषु ।
इंग्लंडे हितशत्रूणां वाल्न्टेपात् समुत्थिता ॥ ४ ॥

वृद्धिः साम्राज्यवादस्य कलहश्चात्यवर्धत ।
लोकनेतृपदस्थानां शासनालम्बिनां तथा ॥ ५ ॥

तिलकस्य चिरोलेन नासीद् वादः कदाचन ।
आङ्ग्लसाम्राज्यवादित्वात् तिलकस्तद्विरोधकः ॥ ६ ॥

लंडन्टाइम्सपत्रस्य स्थानमासीद् महत्तमम् ।
साम्राज्यवादिनां मध्ये जगत्यामाङ्ग्लभाषिषु ॥ ७ ॥

परदेशासमस्थानां तत्पत्रे मार्गदर्शकः ।
आसीच् चिरोलस्तत्स्थानं मण्डले सुप्रतिष्ठितम् ॥ ८ ॥

साम्राज्ये जितराष्ट्राणामङ्कितत्वं चिरंतनम् ।
ब्रिटिशानां भवेदेव चिन्ताया विषयः सदा ॥ ९ ॥

तेषां तैः सह मित्रत्वं स्वातन्त्र्याकाङ्क्षिभिर्जनैः ।
अशक्यं सुतरामेव नकुलोरगयोरिव ॥ १० ॥

तिलकस्योदयात् पूर्वं राजनीतिनभोऽङ्गने ।
राजकारणमर्यादा ह्यूमवेडर्बनादिभिः ।
नवरोज्यादिवृद्धानां संमत्यैव विनिश्चिता ॥ ११ ॥

लोकाकाङ्क्षादर्शनार्थं प्रतिवार्षिकमेलनम् ।
विहितं नेतृभी राष्ट्रनृपलोकहितैषिभिः ॥ १२ ॥

हिन्दराष्ट्रसभाकार्यमुपयुक्तेन वर्त्मना ।
संचालितं सुविख्यातैः सर्वैर्नेमस्तनेतृभिः ॥ १३ ॥

तिलकोऽपि ददौ तेभ्यः सहकार्यं सहेतुकम् ।
राष्ट्राभ्युत्थानसिद्ध्यर्थं हिन्दराष्ट्रसभाश्रयात् ॥ १४ ॥

दिनत्रयात्मकं वर्षे सावित्रीव्रतसंनिभम् ।
बाह्योपचारभूयिष्ठं फलहीनं प्रदर्शनम् ॥ १५ ॥

त्यागपूर्वं तत्त्वदृष्ट्या व्रतमाचरितं यदि ।
अभीप्सितं व्रती विन्देत् फलं मर्त्यस्य दुर्लभम् ॥ १६ ॥

व्रतस्य शक्त्या सावित्र्या आनीतः स्वपतिर्गृहम् ।
गृहीतो यमराजेन राज्यवैभवसंयुतः ॥ १७ ॥

निर्भीकानुगता देवी यमं महिषवाहनम् ।
पतिप्राणस्य हन्तारं पाशपाणिं भयावहम् ॥ १८ ॥

प्रलोभनं तिरस्कृत्य निश्चये साचला स्थिता ।
अशंसद् यमराजं तमात्मनो दृढनिश्चयम् ॥ १९ ॥

पतिं विना निवर्ते न गृहमेकाकिनी किल ।
भिक्षां देहि स्वकन्यायै सौभाग्यस्य यम प्रभो ॥ २० ॥

दण्डेभ्यो नैव भीतासायामिषैश्चाप्रलोभिता ।
निष्ठयैवात्मकार्यार्थं यमो देव्या वशीकृतः ॥ २१ ॥

आख्यानकमिदं दिव्यं नारीणां भारते सदा ।
व्यसने स्फूर्तिदं जातं शीलसौभाग्यरक्षणे ॥ २२ ॥

निश्चितेनैव यत्नेन ध्येयसिद्धिर्भविष्यति ।
ऐहिके वामुष्मिके वा लोककल्याणकर्मणि ॥ २३ ॥

परिहर्तुं राष्ट्रदुःखं यत्नोऽवश्यश्च राष्ट्रियः ।
समुदायमतव्यक्तिस्तस्तदर्थस्य समुद्गमः ॥ २४ ॥

विहितश्रुतिगात्रस्य परिषद्स्याधिकारिणः ।
प्रबोधनाय कर्तव्यः प्रचण्डान्दोलनध्वनिः ॥ २५ ॥

हिन्दराष्ट्रसभामध्ये नेतारो ये प्रतिष्ठिताः ।
प्रायस्ते बहुसंख्याका आन्दोलनविरोधिनः ॥ २६ ॥

तस्मादेव समुत्पन्नस्तीव्रनेमस्तसंज्ञकः ।
पक्षभेदः सभामध्ये शासनस्याप्यभीप्सितः ॥ २७ ॥

साम्राज्यवादिनां तेन लब्धं वै साधनं नवम् ।
धत्पत्त्यै बुद्धिभेदस्य देशभक्तेषु भारते ॥ २८ ॥

कर्झनो यः पुरस्कर्ता चासीत् साम्राज्यवादिनाम् ।
इंग्लंडेऽपि प्रेषितोऽत्र व्हाइस्रायपदस्थितः ॥ २९ ॥

अनन्तरं भारतेऽस्मिन् कर्झनोऽपि प्रचारकः ।
तद्भक्तत्वे मुख्यसूत्रमाङ्ग्लसाम्राज्यगौरवम् ॥ ३० ॥

हिन्दुमुस्लिमभेदोऽपि तेन प्रोत्साहितस्तदा ।
दत्तं मुस्लिमसंघस्य स्थापनार्थं प्रचोदनम् ॥ ३१ ॥

सर्वोपायैः शासनेन मुसलमानाः पृथक् कृताः ।
महासभासदस्येभ्यो राष्ट्रोदयविरोधिना ॥ ३२ ॥

बङ्गभङ्गो योऽनुषङ्गात् कर्झनेनैव निर्मितः ।
समुद्भूतस्तस्य देशे लोकक्षोभो भयंकरः ॥ ३३ ॥

प्राप्त्यर्थं वै स्वराज्यस्य बाललालादिनेतृभिः ।
कार्यक्रमः प्रचाराय योजितो भारतेऽखिले ॥ ३४ ॥

चतुःसूत्रीति नाम्ना यः स्वराज्यस्येति संज्ञितः ।
स एव संमतो भूतः कलकत्ताधिवेशने ॥ ३५ ॥

महासभायां सुरते प्रचण्डः कलहोऽभवत् ।
जहालपक्षो नेमस्तै राष्ट्रकार्याद् बहिष्कृतः ॥ ३६ ॥

पूर्वराष्ट्रसभा ध्वस्ता कन्व्हेंशनमपावृतम् ।
साम्राज्यवादिनः सर्वे नेमस्तैश्च सुसंगताः ॥ ३७ ॥

प्रशासनस्य साह्येन चिरोलेन समीक्षणम् ।
कृतं च लिखिता लेखाष्टाइम्से लंडनस्थिते ॥ ३८ ॥

मुद्रिता ग्रन्थरूपेण चिरोलेनैव ते पुनः ।
पपाठ तिलकस्तं च कारावासविमोचनात् ॥ ३९ ॥

शीघ्रमेव यशोहानिनिराकरणनिश्चयम् ।
चकार चाह्वयत् तत्र चिरोलं प्रतिवादिनम् ॥ ४० ॥

विरुद्धे निर्णये जाते तिलकेन निवेदिता ।
पत्रे वस्तुस्थितिः सर्वा योजना च मनोगता ॥ ४१ ॥

लिखिते भागिनेयाय धुण्डिराजाय धीमते ।
आशीशयात् पालिताय गृहसंरक्षकाय च ॥ ४२ ॥

अलिखद् धुण्डिराजं स चिरोलस्य जयोऽभवत् ।
न प्रमाणमभूत् तत्र तत्पक्षस्य समर्थकम् ॥ ४३ ॥

राजनीत्या सदोषत्वं शीलं चारित्र्यदर्शकम् ।
प्रतिष्ठितं मनुष्यस्य वर्तेते च पृथक् पृथक् ॥ ४४ ॥

न्यायाधीशः स्वीचकार कार्सनस्य स सूचनाम् ।
तयोर्भेदविलोपश्च कार्यः पंचजनैरिति ॥ ४५ ॥

न्यायालये स्थिताः पंचा आदेशं प्रत्यपालयन् ।
पक्षदोषाणां पृथक् नैव कृतं पंचैः परीक्षणम् ॥ ४६ ॥

न्यायाधीशसमारोपोऽनुरागोद्दीपकर्कशः ।
एकपक्षग्रहग्रस्तानां कृता चालेन योजना ॥ ४७ ॥

न स्थाने तत्र शास्त्रस्य तर्कशुद्धमतेरपि।
साक्षिकार्यस्य तत्त्वानामवश्यं न्यायनिर्णये ॥ ४८ ॥

वालेन पङ्क्तियुग्मेन सर्वमेतत् प्रदर्शितम्।
पत्रे स्वे घुण्डिराजाय प्रेषिते तद्दिने गृहम् ॥ ४९ ॥

प्रतिवादिव्ययस्यापि देयत्वं न्यायनिर्णयात्।
अभूदपरिहार्यं तत् पराभूतस्य वादिनः ॥ ५० ॥

डार्लिंगनिर्णयस्यास्य न निराकरणं भवेत्।
उच्चन्यायालयेनापि मतं विधिविदामिदम् ॥ ५१ ॥

प्रचण्डदेयतास्माकं संभूता न्यायनिर्णयात्।
युद्धिप्रचोदितः सोऽपि यत्नो द्यूतमिवाभवत् ॥ ५२ ॥

स्वप्रस्थानात् पूर्वमेव लोकमान्येन भारते।
ऋणेनैवार्जितं द्रव्यं व्ययायावश्यकाय ह।
न्यासीकृत्य निवासादिस्थावरं जंगमं तथा ॥ ५३ ॥

कठिनायामवस्थायां लिखितं धैर्यमेरुणा।
न भेतव्यं यथापूर्वमुपायांश्चिन्तयाम्यहम् ॥ ५४ ॥

पठनात् तस्य पत्रस्य वृत्रवाक्यं स्मृतं मया।
पत्रे दृष्टं मया वाक्यं तिलकत्वनिदर्शकम् ॥ ५५ ॥

वादद्यूते प्रविष्टोऽहं न प्राप्तं तु यशो मया।
क्रीडानियमतस्तत्र जितस्यास्तीव देयता ॥ ५६ ॥

सदृशो व्यसने प्राप्ते वृत्रेन्द्रसमरे पुरा।
वज्रं हस्ताच्च्युतं पश्यन्निन्द्र उद्विग्नतां गतः ॥ ५७ ॥

स्वहस्ते धारणे तस्य लज्जितो न मनो दधे।
तदा वृत्रो महेन्द्राय युद्धे प्रोत्साहनाय च ॥ ५८ ॥

अवदद् यद् बोधवाक्यं तस्योद्धारं करोम्यहम् ।
प्राणग्लहोऽयं समरं द्र्यक्षो वाहनासनः ।
अत्र न ज्ञायतेऽमुष्य जयोऽमुष्य पराजयः ॥ ५९ ॥

समरे वादयुद्धे वा वृत्तवाक्यस्य युक्तता ।
तदान्तरप्रविष्टानां वर्ततेऽबाधिता चिरम् ॥ ६० ॥

वाक्यमेतद् व्यापकार्थं वीरवृत्तेर्निदर्शकम् ।
तथैव योगिनो वृत्तेः स्थितप्रज्ञमहात्मनः ॥ ६१ ॥

समापन्नास्वापदासु मनोधैर्यं तरी भवेत् ।
कर्तुमारोहणं तासां गन्तुमिष्टं स्थलं प्रति ॥ ६२ ॥

पराभवश्चात्मनो वै जयश्च प्रतिपक्षिणः ।
एकेन कारणेनैव लंदनं न्यायमन्दिरे ॥ ६३ ॥

प्रशासनं भारतस्य प्रतिवादि कृतं मया ।
चिरोलोऽयं नाममात्रं प्रार्थिपत्रे निदर्शितः ॥ ६४ ॥

तस्य प्रतिनिधित्वेन मोंटगाग्नी समागतः ।
साहाय्याय चिरोलस्य लंदनन्यायमन्दिरे ॥ ६५ ॥

न्यायाधीशः कार्सनश्च भृशमुच्चैरयोचताम् ।
अयस्य वादिनो वादे परिणामो भयंकरः ।
भवेदेवाङ्ग्लराज्यस्य भूगोलेऽस्मिन्प्रसंशयम् ॥ ६६ ॥

अतो वादिचरित्रस्य ज्ञानेच्छिन्ना निरर्थका ।
वादस्य निर्णयेऽस्माभिः साम्राज्यस्य हितैषिभिः ॥ ६७ ॥

तिलकस्य विधानानि तान्युपेक्ष्यैव निर्णयः ।
चिरोलो विजयी जातो घोषितं न्यायमन्दिरे ॥ ६८ ॥

इंग्लंदेऽपि मया दृष्टं जातं न्यायविडम्बनम् ।
ज्यूरीणां बुद्धिभेदेन पश्चान्ते तिलकोऽग्रवीत् ॥ ६९ ॥

होमरूलस्य चिन्ता च यत्रान्ते तेन दर्शिता ।
आसीदिंग्लंडयात्राया उद्दिष्टं यद् द्वितीयकम् ॥ ७० ॥

संभवोऽस्ति व्यत्ययस्य प्रतिकूलविनिर्णयात् ।
तथापि यदवश्यं तद् वयं कर्तुं समुत्सुकाः ॥ ७१ ॥

डार्लिंगनिर्णये हेतुः साम्राज्यस्य हितप्रदा ।
इंग्लंडे भारते चैव वायुमण्डलनिर्मितिः ॥ ७२ ॥

स्वराज्यस्थापनेच्छायाः प्रतिकूलां मनःस्थितिम् ।
भारतीयेषु निर्मातुं तन्नेतॄणां च दण्डनम् ॥ ७३ ॥

येन केनापि मार्गेणावश्यं तच् शासनस्य वै ।
दण्डस्यैव भयात् तेषां दौर्बल्यमनुयायिषु ॥ ७४ ॥

ध्येयनिष्ठो देशभक्तः पिशुनः स्वार्थलंपटः ।
प्रथमो निर्भयो नित्यमन्यस्तु भयकातरः ॥ ७५ ॥

प्रतिक्रिया भारते या डार्लिंगकृतनिर्णयात् ।
जाताऽसीत् सा शासनस्य प्रजायाः प्रखरोत्तरम् ॥ ७६ ॥

तिलकस्य च साह्यार्थं जनैः संकलितो निधिः ।
द्रव्यस्य हि स्वयंस्फूर्त्या सार्धलक्षद्वयाधिकः ॥ ७७ ॥

न द्रव्यवृद्धिः कर्तव्या तिलकोऽसौ समादिशत् ।
पर्याप्तमर्जितं द्रव्यं संकटस्य निवारणे ॥ ७८ ॥

विनाशिता तस्य चिन्ता लोकौदार्येण भारते ।
विना याच्ञां कृतां तेन कालेऽल्पे विस्मयावहे ॥ ७९ ॥

सागरे वै जलोत्थानं भवेच् चन्द्रोदये यथा ।
भक्त्युत्थानं निर्णयेन संजातं जनसागरे ॥ ८० ॥

सहस्ररत्नामृतं प्राप्तं पुरा सागरमन्थने ।
अनुदानामृतं प्राप्तं कृते लोकाब्धिमन्थने ॥ ८१ ॥

योऽसेन कृता निन्दा वालस्यास्यैव कारणात् ।
लिखितं तेन पत्रे तच् चरित्रेऽस्ति प्रकाशितम् ॥ ८२ ॥

कालकूटमिवोग्रं तज् जनताशंकरोऽपिबत् ।
पत्ररूपेण नीलत्वं निजकण्ठे प्रदर्शयन् ॥ ८३ ॥

योऽसस्याधमत्वं तद् नृसिंहेन विदारितम् ।
लेखनीनखरैरुग्रैर्लिखिते तिलकायने ॥ ८४ ॥

वालनिन्दा चिरोलेन कृता व्यक्तिगता न सा ।
हर्तुं नेतृपदं तस्य तत्कार्यं च विनिन्दितुम् ॥ ८५ ॥

असंतोषो भारतीय इति नाम्नैव दर्शितम् ।
उद्दिष्टं हिन्दराष्ट्रस्य स्वातन्त्र्यस्याभिलाषिणः ॥ ८६ ॥

कर्तुं निन्दाप्रचारं च तिलकस्य विशेषतः ।
कृतो ग्रन्थश्चिरोलेन भारतद्वेषिणा महान् ॥ ८७ ॥

इंग्लंडामेरिकास्था ये नैक आगत्य भारतम् ।
वर्णनेषु प्रवासस्य भारतं गर्हयन्ति ते ॥ ८८ ॥

तत्प्रचारप्रतीकारः दुःसाध्यो न्यायवर्त्मना ।
निजग्रन्थे चिरोलेन व्यक्तिचारित्र्यनाशने ॥ ८९ ॥

कृतो यत्न इति प्रेक्ष्य प्रतीकारस्य निश्चयः ।
तस्य वै न्यायमार्गेण तिलकेनेति मन्यते ॥ ९० ॥

आङ्ग्लदेशो न्यायवृत्तिप्रधान इति तन्मतम् ।
कथितं पूर्वमेवास्ति गान्धीमतसमन्वितम् ॥ ९१ ॥

जनताद्रव्यसाहास्य विचारो न प्रशंसितः ।
स्वग्रन्थानात् पूर्वमेव योजना तेन निश्चिता ॥ ९२ ॥

अन्याय्यनिर्णयेनैवं संकटं यत् समुद्भवेत् ।
रचनार्जितं द्रव्यं ग्रन्थानां करोम्यहम् ॥ ९३ ॥

पकवर्षावधौ कार्याद् मुक्तः सन् वृत्तपत्रयोः ।
न प्रशस्तं जनद्रव्यं मम संकटवारणे ॥ ९४ ॥

पत्रे निजविचाराणां कृतं दिग्दर्शनं पुनः ।
मित्राय साग्रहं तेन पुनरुक्तं मनोगतम् ॥ ९५ ॥

डार्लिंगनिर्णयेनात्र साम्राज्यस्य विरोधिनी ।
वृद्धिं गता लोकबुद्धिरिति लोकैः प्रदर्शितम् ॥ ९६ ॥

विरोधबुद्धेर्दार्ढ्येन यादिमो लोकमान्यता ।
असामान्या तथाजेय्या साभवद् भारतेऽखिले ॥ ९७ ॥

दृष्टे तस्यागते याते मातृभूमिं जनैः कृते ।
तथामृतसरस्येव हिन्दराष्ट्रसभास्थले ॥ ९८ ॥

पुष्टी राष्ट्रीयकार्यस्य तदुत्थानस्य निर्णयात् ।
या जाता सा भारतस्य भाविभाग्यनिदर्शिनी ॥ ९९ ॥

राष्ट्रोदयद्रुमस्योप्तं बीजं यत् तिलकेन वै ।
पराभवेऽपि वृद्धं तत् कर्मासामान्यमद्भुतम् ॥ १०० ॥

तिलकचरितमेतद् बद्धराष्ट्रस्य मुक्त्यै
प्रबलविमलमार्गं दर्शयत्येव नित्यम् ।
दलितपतितदीनान् स्वाभिमानेन शीघ्रं
नयति भरतपुत्रान् विश्वबन्धुत्वधाम ॥ १०१ ॥

इति माधवविरचिते श्रीतिलकयशोऽर्णवे चिरोलशब्दोत्तरभारतप्रतिक्रियानामा
त्रिसप्ततितमस्तरङ्गः ।

# चतुःसप्ततितमस्तरङ्गः

कान्हेराख्यः सुहृत् कश्चिदुवाच तिलकं प्रति ।
निराशोत्पादको जातः खलु वादस्य निर्णयः ॥ १ ॥

चिरोलस्य जयं साक्षाद् मन्ये न्यायविडम्बनम् ।
धीरगम्भीरया वाचा तद् मित्रं तिलकोऽब्रवीत् ॥ २ ॥

मम कोशे न नैराश्यशब्दः कुत्रापि वर्तते ।
संकुलं संकटैरायुर्व्यतीतं प्रायशो मम ॥ ३ ॥

धैर्येणैव समुत्तीर्णः संकटाब्धिमहं पुरा ।
मुख्याधारो धैर्यमेव संकटव्यग्रचेतसाम् ॥ ४ ॥

उद्योगेनाधिकापत्तेः परिहारो भविष्यति ।
न कर्तव्या तत्र चिन्ता बुद्धिमद्भिः सशापितकैः ॥ ५ ॥

न्यायालयीनकार्येषु व्यतीतः समयो महान् ।
कर्तव्यं स्वयशःप्राप्त्या एकाग्रमनसा कृतम् ॥ ६ ॥

संप्रापणादाङ्ग्लभूमिं तिलकेनेति वर्णितम् ।
पूर्वग्रन्थे तदन्ते च द्विविधोद्देशसिद्धये ॥ ७ ॥

भारतोन्नतियत्नस्य तत्कृतस्य विवेचनम् ।
आङ्ग्लीयजनसाहाय्यै तरङ्गे वर्णयाम्यहम् ॥ ८ ॥

विदिता एव सर्वेषां व्यत्ययाः शासनस्य ये ।
प्रस्थानकाले वालस्य कृता भारतभृत्यकैः ॥ ९ ॥

कथयेऽहं चैकमेव तिलकद्वेषदर्शकम् ।
अमर्यादं च ग्राम्यं च शिष्टाचारपराङ्मुखम् ॥ १० ॥

स्वीकृतिः प्रतिषेधस्य समादिष्टाधिकारिभिः ।
राजकीयप्रचारस्य वालाद् विकृतबुद्धिभिः ॥ ११ ॥

निराकर्तुं तदादेशं प्रार्थितं चाङ्ग्लशासनम् ।
न्यायकार्यस्यावसाने तिलकेनातिसत्वरम् ।
निराकृतः स आदेशस्तत्क्षणं शासनाज्ञया ॥ १२ ॥

लंदने समितिश्चैका पुरा हिन्दहितैषिभिः ।
संस्थापिता ह्यमवेडर्बर्नेनौरोजिसज्जनैः ॥ १३ ॥

पार्लमेंटसदस्येषु केचित् तस्याः सभासदः ।
विदिता भारते नाम्ना कमिटी पार्लमेंटरी ॥ १४ ॥

आसीत् कार्यालयं तत्र समितेः कार्यसाधकम् ।
संचालितं वृत्तपत्रं इंडियासंज्ञकं तथा ॥ १५ ॥

द्रव्यं परिसहस्रं वै हिन्दराष्ट्रसभा ददौ ।
प्रतिवर्षं च रूप्याणां व्ययार्थं समितिं प्रति ॥ १६ ॥

ह्यूमाद्यो लंदनस्था अभवन् मार्गदर्शकाः ।
तदा राष्ट्रसभाकार्यं प्रेरितं भारतेऽपि तैः ॥ १७ ॥

सुरेन्द्रमेथामालव्या माननीयाः सभासदः ।
महासभाचालकाश्च सर्वभारतपूजिताः ॥ १८ ॥

सम्मते भारतीयानां तेषां मार्गनिदर्शनम् ।
अत्यवश्यं च कार्यार्थं हिन्दराष्ट्रस्य संसदः ॥ १९ ॥

वङ्गभङ्गान्दोलनेन जातं स्थित्यन्तरं महत् ।
स्वावलम्बनमेवाभूद् भारतोद्धारसाधनम् ॥ २० ॥

महासभासंमताभूत् कलकत्ताधिवेशने ।
स्वदेश्यादिचतुःसूत्री राजकारणधोरणे ॥ २१ ॥

समुत्पन्नः पक्षभेदो भारते राजनैतिकः ।
मन्दा गतिः प्रशस्तासीद् नेमस्तानां निरन्तरम् ॥ २२ ॥

'जहाल' इति संज्ञासीच् शीघ्रमार्गानुयायिनाम् ।
एवं द्विधा विभक्ताभूद् राष्ट्रोद्धारचमूस्तदा ॥ २३ ॥

बालो लालस्तथा पालो नेतारः स्वावलम्बिनाम् ।
मेथादयो वयोवृद्धा जातास्तत्प्रतिपक्षिणः ॥ २४ ॥

सुरतोपप्लवे ध्वस्ता हिन्दराष्ट्रसभा यदा ।
बहिष्कृताः सभाकार्याद् नवपक्षानुयायिनः ॥ २५ ॥

कर्न्हैदानं स्थापयित्वा घटनाया विनिर्मितिः ।
नूतना या कृता वृद्धैराग्रहात् सौम्यवर्त्मिभिः ॥ २६ ॥

दण्डनीत्या शासनेन नवपक्षविनाशनम् ।
आरब्धं तस्य मुख्यस्य षड्वत्सरनिरोधनात् ॥ २७ ॥

कारागृहे ब्रह्मदेशे राजद्रोहीति निर्णयात् ।
निर्वासितस्तथैवान्ये दण्डिता गणनातिगाः ॥ २८ ॥

इंग्लंडयासिमित्राणामभवत् सौहृदं दृढम् ।
उद्दण्डे शासने जाते नेमस्तैः सह भारते ॥ २९ ॥

षड्वत्सरमितः कालो वनवास इवाभवत् ।
दण्डितानां शासनेन नवपक्षानुयायिनाम् ॥ ३० ॥

कारावासाद् मोचितस्य षड्वर्षान्ते निवर्तनम् ।
मातृभूमिं स्वागतार्हं तिलकस्य महात्मनः ॥ ३१ ॥

संधिं कृत्वा निर्मितव्यमैक्यं राष्ट्रहितावहम् ।
सहकार्याय कर्तव्यं स्नेहभावस्य वर्धनम् ॥ ३२ ॥

विस्मर्तव्यं तस्य सिद्ध्यै पूर्वविग्रहकारणम् ।
अविलम्बेन साध्यं तदैक्यस्य प्रतिपत्तये ॥ ३३ ॥

हसनिमामस्य नेतृत्वे मुम्बापुर्यां यथाविधि ।
संपादिते विशेषे तत्सभाया अधिवेशने ॥ ३४ ॥

मतं व्यक्तं समासद्भिर्मांटेग्प्रोक्तयोजना ।
अपूर्णत्वाद् भारताय नैव संतोषदायिनी ॥ ३५ ॥

सभास्थाने न नेमस्तः कोऽप्यासीच् शास्त्रिणं विना ।
शास्त्री दृष्टश्चाल्पकालं सभायां प्रथमेऽहनि ॥ ३६ ॥

दत्तमाश्वासनं मुख्यैर्मांटेगाय स्वसंमतेः ।
घोषितायै योजनायै पूर्वं तद्दलनेतृभिः ॥ ३७ ॥

तेषां मतमभूद् भिन्नं जहालानां विनिर्णयात् ।
सभाधिवेशने तत्र दर्शिताद् देशसेवकैः ॥ ३८ ॥

सभाध्यक्षो मालवीयो गमिष्यल् लंदनं प्रति ।
सभामतप्रचारार्थं युक्तवाञ् शिष्टमण्डलम् ॥ ३९ ॥

तन्नेतृत्वे स्थापितस्तैर्लोकमान्यः सुधीस्तदा ।
कार्यवाहपदे तस्य पटेलो विठ्ठलाभिधः ॥ ४० ॥

शिष्टानां नामनिर्देशो योग्य एव भवेदिह ।
प्रथमो माधवो व्ही. पी. द्वितीयो विठ्ठलाभिधः ॥ ४१ ॥

नरसिंहस्तृतीयोऽभूच् शीघ्रं ते प्रस्थितास्त्रयः ।
तस्मिंश्चतुर्थस्तिलको मेहता पञ्चमोऽभवत् ॥ ४२ ॥

षष्ठो हसन् इमामोऽभूद्रायंगारश्च सप्तमः ।
शार्मिमनोऽष्टमो जातः पालश्च नवमोऽभवत् ॥ ४३ ॥

दशमो डाक्टरः साठे चैकादशपदे गतः ।
ध्रंवरयानामकः शिष्टो जाता यस्यान्तिमा स्थितिः ॥ ४४ ॥

एते शिष्टा यथाकालं प्रस्थिता लंदनं प्रति ।
रौद्रं दर्शयितुं रूपं सर्वे ते रुद्रसंख्यया ॥ ४५ ॥

गोलाफादिश्चिरोधेन हिन्दराष्ट्रसभां प्रति ।
संचालने मण्डलस्य मार्गे च व्यत्ययो महान् ॥ ४६ ॥

दृष्ट्वा चिमांटया नीतं शिष्टनामैकमण्डलम् ।
दिष्टे राष्ट्रसभायास्तत् सहकार्यपराङ्मुखम् ॥ ४७ ॥

प्रदानं सहकार्यस्य शिष्टानां मण्डलाय च ।
विझांटमण्डलेनासीत् संमतं व्यवहारतः ॥ ४८ ॥

पोलाक्प्रभृतिमित्राणां प्रवृत्तिस्तद्विरोधिनी ।
तेषां हस्ते चालकत्वं शिष्टकार्यविघातकम् ॥ ४९ ॥

आश्वासनं मण्डलाय सदस्यैः कार्यकारिभिः ।
दीयतामविलम्बेन प्रस्तावे दर्शितं यथा ॥ ५० ॥

हिन्दभूमेरागता ये विझांटादिसभासदः ।
वस्वादयो नूतनास्ते नेमस्ता मन्दगामिनः ॥ ५१ ॥

विरोधं दर्शयामासुर्गोलयत्नस्य तत्क्षणम् ।
आर्पयत् त्यागपत्रं तु निरुपायेण पोलकः ॥ ५२ ॥

एवं दूरीकृतो मार्गात् प्रचण्डः प्रस्तरो ननु ।
पन्था निष्कण्टकप्रायः शिष्टमण्डलकर्मणः ॥ ५३ ॥

लोकोत्तरौ बुद्धिमन्तौ पटेलतिलकावुभौ ।
ऊचतुर्लैंदनस्येयं समितिस्तु सभाङ्किता ॥ ५४ ॥

शिष्टमण्डलमायातं मालवीयनियोजितम् ।
प्रस्तावस्यानुरोधेन देहल्यां संमतस्य च ॥ ५५ ॥

तद्वर्षे मासि मेनाम्नि लंदनं जलवर्त्मना ।
पूर्वं नियोजितोऽध्यक्षो यातो यातो महामनाः ॥ ५६ ॥

सौकर्याय च कार्यस्य प्रचारस्याङ्ग्लभूमिषु ।
मण्डलस्यैकमत्येन ह्यन्योऽध्यक्षो नियोजितः ॥ ५७ ॥

हिन्दस्वराज्यसंघस्य प्रातिनिध्येन योजना ।
कृतासीत् साक्षिकार्याय तिलकस्य महात्मनः ॥ ५८ ॥

मांटेगुना योजना या स्वदेशपूत्यां पुरस्कृता ।
पार्लमेंटस्य संमत्यै स्थापिता सा यथाविधि ॥ ५९ ॥

ज्ञातुं लोकमतं सर्वं भारतीयं तथाङ्ग्लिकम् ।
नियुक्ता शासनेनैका समितिः पार्लमेंटरी ॥ ६० ॥

सदस्येभ्यो मण्डलस्य संप्राप्तस्य च लंदनम् ।
कृतं निवेदनं सर्वं तिलकेन परिस्थितेः ॥ ६१ ॥

आङ्ग्लशाखा निर्मिता या सभायाश्चालकैः पुरा ।
विख्याता भारते साऽऽसीद् ब्रिटिशकमिटिसंज्ञया ॥ ६२ ॥

तच्चालकः पोलकोऽभूद् राष्ट्रसंसद्विरोधकः ।
ययातोऽसौ सालिसिटरो नेमस्तानां दृढः सुहृत् ॥ ६३ ॥

इंडियानामकं पत्रं कमिट्या चालितं तथा ।
तस्य राष्ट्रसभाकार्ये सर्वथा प्रतिकूलता ॥ ६४ ॥

नेमस्ता भारते जाता उदारमतवादिनः ।
सुप्रसिद्धं तेन नाम्ना तेषां वार्षिकमेलनम् ॥ ६५ ॥

उदाराणां भारतस्य संबन्धो न हि विद्यते ।
बान्धवैराङ्ग्लदेशस्थैस्तत्पक्षस्यानुयायिभिः ॥ ६६ ॥

हिन्दराष्ट्रसभाध्येयं तेषां नैव तु संमतम् ।
भारतप्रश्नविषये तत्पक्षस्यैव निर्णयात् ॥ ६७ ॥

पक्षकार्यक्रमे तेषां स्थानं किंचिद् न विद्यते ।
अस्मिन् द्वीपे निराधारा भारतोद्धारवादिनः ॥ ६८ ॥

तस्मादेवं पोलकादिजनानां च नियन्त्रणात् ।
मण्डलेन स्वाधिकारात् कर्तव्यं वै विमोचनम् ॥ ६९ ॥

प्रथमं चैव तत्कार्ये समुद्योगस्तु मन्मते ।
श्रुत्वा तिलकवाक्यानि पटेलस्य प्रचोदनात् ।
शिष्टानां वै सभामध्ये प्रस्तावः सर्वसंमतः ॥ ७० ॥

देवभाषामयं कृत्वा कथयामि यथामति ।
पाठकानां सुबोधाय सुज्ञानाय परिस्थितेः ॥ ७१ ॥

महासभावृत्तपत्रं लंदने 'इंडिया'भिधम् ।
प्रवर्तितुं सभाकार्यं व्यक्तीकर्तुं च तन्मतम् ॥ ७२ ॥

काले काले संप्रदत्तं द्रव्यसाह्यं सभानिधेः ।
संचालनाय पत्रस्य सभोद्देशस्य पूर्तये ॥ ७३ ॥

चालकानां चित्तबोधं कर्तुमेव विशेषतः ।
इंडियावृत्तपत्रस्य सभाशिष्टा इहागताः ॥ ७४ ॥

कालात् कतिपयाद् दृष्टं वृत्तपत्रस्य लेखने ।
प्रस्तावानां प्रचारो न पुरस्कारोऽथवाभवत् ॥ ७५ ॥

उत संदृश्यते तेषां पत्रलेखो भवेद् यदा ।
केवलं तद्विरोधाय जहालैरिव शत्रुभिः ॥ ७६ ॥

ध्येयस्याधारभूतानां तत्त्वानां लङ्घनं तथा ।
सादरं सूच्यतेऽस्माभिः पत्रचालकलेखकैः ॥ ७७ ॥

आश्वासनं प्रदातव्यं निःसंदिग्धं च निश्चितम् ।
अनुल्लङ्घ्य सभादेशानागतानागतांस्तथा ॥ ७८ ॥

तत्पुरस्कृततत्त्वानि ह्यनुल्लङ्घ्य निरन्तरम् ।
इंडियावृत्तपत्रस्य चालनं लेखनं तथा ॥ ७९ ॥

अतःपरं भवेदेव प्रस्तावः सर्वसंमतः ।
कमिटेः स सदस्येभ्यः सर्वेभ्यः प्रेषितस्तदा ।
पटेलेनातिदक्षेण कार्यवाहेण सत्वरम् ॥ ८० ॥

लोकोत्तरौ बुद्धिमन्तौ पुरुषौ कृतनिश्चयौ ।
पटेलतिलकावास्तां राष्ट्रसंमानविग्रहौ ॥ ८१ ॥

कृत्वा पूर्वविचारं तौ कमिटीं तां पपृच्छतुः ।
आश्वासनं मण्डलाय समितेः कार्यकारिभिः ॥ ८२ ॥

दीयतामविलम्बेन प्रस्तावे दर्शितं यथा ।
मण्डलस्य च प्रस्तावो दत्तस्तेषां करे तदा ॥ ८३ ॥

युद्धाह्वानस्य संदेशोऽन्तिमस्तेषां बभूव सः ।
विझांटप्रमुखाः केचिद् हिन्दराष्ट्रात् समागताः ॥ ८४ ॥

सभासदो नूतनाश्च नेमस्ताः प्रतिगामिनः ।
विरोधं दर्शयामासुस्तयोर्यत्नाय तत्क्षणम् ॥ ८५ ॥

तिलकेन प्रेरितो यः शिष्टमण्डलनिर्णयः ।
पुरस्कृतो विठ्ठलेन स्वीकृतश्च डिरेक्टरैः ॥ ८६ ॥

रुदर्फर्डपरेखौ च क्लार्कश्चेति त्रयोऽभवन् ।
संपादकः पोलकश्च डायरेक्टरपदस्थिताः ॥ ८७ ॥

चतुर्णां मण्डलेनैव दत्ता तत्र स्वसंमतिः ।
अदादात्मत्यागपत्रं निरुपायाच्च पोलकः ॥ ८८ ॥

कमिट्या तु विचारार्थं प्रस्तावस्य सभा कृता ।
विझांटादयमुख्यानां विरोधात् स्थगिताभवत् ॥ ८९ ॥

डिरेक्टरैरनुमता प्रस्तावगतसूचना ।
आदिष्टं तैर्वृत्तपत्रे कर्तव्यं ■ समर्थनम् ।
महासभानिर्णयस्य देहल्यामधिवेशने ॥ ९० ॥

संपादकीयकार्यस्य त्यागपत्रं समर्पितम् ।
पोलकेन परेखादिमित्राणामाग्रहात् तदा ॥ ९१ ॥

संपादिका नारमिद्ना वृत्तपत्रस्य चालने ।
साहाय्यको नृसिंहश्च सहसंपादकोऽभवत् ॥ ९२ ॥

डिरेक्टरैः समादिष्टं भारतागतमण्डलम् ।
घटनाया विनिर्मित्यै सत्वरं च प्रयत्यताम् ॥ ९३ ॥

गणेशविठ्ठलौ तेन तस्मिन् कर्मणि योजितौ ।
बुद्धिमन्तौ वयोवृद्धौ प्रतिवादिभयंकरौ ॥ ९४ ॥

निर्मिता घटना ताभ्यां मण्डलेन पुरस्कृता ।
कुर्वे दिग्दर्शनं तस्याः कमिटीकार्यसिद्धये ॥ ९५ ॥

हिन्दराष्ट्रसभायाश्च शाखैकेह विनिर्मिता ।
सभाप्रवर्तितादेशाद् ब्रिटिश्कमिटिसंज्ञका ॥ ९६ ॥

हिन्दराष्ट्रसभायाः सा ह्यभवत् कार्यकारिणी ।
भारतक्षेमरक्षार्थे स्थापिता लंदनेऽधुना ॥ ९७ ॥

संख्या तस्याः सदस्यानां निर्मर्यादैव वर्तते ।
नूतनान् सदस्यान् स्वीकर्तुमधिकारोऽस्ति सर्वथा ॥ ९८ ॥

अध्यक्षश्च गताध्यक्षाः त्रयश्च सहकारिणः ।
अनङ्किताः शासनस्य सेवायां चान्यकर्मसु ॥ ९९ ॥

प्रेषिताः प्रातिनिध्येन सर्वे कांग्रेससंस्थया ।
अधिकारपदात् तेषां प्राप्तं तद् दुर्लभं पदम् ॥ १०० ॥

द्रव्यस्योत्तरदायित्वं कार्यसंचालनाय च ।
हिन्दराष्ट्रसभाकोषादनुदानेन मुख्यतः ॥ १०१ ॥

संपादितं सर्वमेतद् तदा साङ्गं यथाविधि ।
लोकमान्येनाल्पकाले डार्लिंगन्यायनिर्णयात् ॥ १०२ ॥

इत्थं दूरीकृतो मार्गात् प्रचण्डः प्रस्तरः स्थितः ।
हिन्दराष्ट्रसभाशिष्टधुरीणानां महोद्यमैः ॥ १०३ ॥

अन्ते गतं युरोपीयसूत्रधारस्य नाटकम् ।
समारब्धं लंदने यद् दीर्घं राष्ट्रसभाश्रयात् ॥ १०४ ॥

दीर्घकालं स्थितं यच्च हिन्दोन्नतिपराङ्मुखम् ।
नेमस्तानां प्रतिष्ठाया विनाशायाश्च सर्वशः ॥ १०५ ॥

संत्रस्तानां विरोधेन भारते स्वावलम्बिनाम् ।
विश्रम्भस्य स्थानमेकं सार्वभौमस्य चाङ्गने ॥ १०६ ॥

कायाकल्पः कृतो येन कमिटेर्लंदनस्य च ।
प्रस्तावस्य कृतं पूर्वं मया संक्षिप्तवर्णनम् ॥ १०७ ॥

कायाकल्पप्रयोगाद् ननु नवयुवतीं यः कमीटिं चकार
ह्याङ्ग्लानां राजधान्यां परमकृशतमां वृद्धतायाः प्रभावात् ।
तस्यां प्रक्षीणशक्त्यां सुरुचिरमहसस्तेजसो भ्राजथोश्च
वन्दे धन्वन्तरिं तं सुविदिततिलकं येन स्रोतः प्रदत्तम् ॥ १०८ ॥

इति माधवविरचिते श्रीतिलकयशोऽर्णवे कमिटिकायाकल्पनाम
चतुःसप्ततितमस्तरङ्गः ।

# पञ्चसप्ततितमस्तरङ्गः

जातमाङ्ग्लजनेभ्यो वै संपर्कात् तिलकस्य ह ।
श्रवणात् तद्विचाराणां तत्प्रभावस्य दर्शनम् ॥ १ ॥

तद् मनोहरमाख्यानं सुरसं स्फूर्तिदायकम् ।
वर्णयेऽहं तरङ्गेऽस्मिन् राष्ट्रविघ्नविनाशकम् ॥ २ ॥

वङ्गभङ्गात् पूर्वकाले शिष्टेभ्यो लंदनं प्रति ।
महासभाप्रेषितेभ्यो युक्तं मन्येऽभिवादनम् ॥ ३ ॥

वङ्गवक्ता सुप्रसिद्धो बानर्जीवंशसंभवः ।
सुरेन्द्रनाथो नाम्ना यो विख्यातो भारतेऽखिले ॥ ४ ॥

मोरोपंतो रंगनाथो विदर्भस्य विभूषणे ।
जोशीमुधोळ्करोपाढौ विख्यातौ विधिपण्डितौ ॥ ५ ॥

गोखले रानडेशिष्यो वाग्मी गोपालनामकः ।
आचार्यः सन् राजनीतिप्रवीण इति पूजितः ॥ ६ ॥

सूरीन् पूर्वान् नमस्कृत्य मङ्गलार्थं कथामिमाम् ।
नवमङ्गलकार्यस्य निवेदयितुमारभे ॥ ७ ॥

ब्रिटिश्संस्थामण्डलेन कृता राष्ट्रसभाङ्किता ।
शिष्टस्वाधीनमेवासीद् इंडियापत्रचालनम् ॥ ८ ॥

मॉर्निंग्पोस्टादिपत्रेषु सँढस्टोंचेजितेषु च ।
साम्राज्यवादिपक्षस्य टाइम्साद्येषु लेखने ॥ ९ ॥

निन्दा राष्ट्रसभायाश्च तिलकस्य च गर्हणा ।
निरङ्कुशा दुःसहेति वालेसैडगरोऽलिखत् ॥ १० ॥

वापटिस्टैः कृतं कार्यं कृत्वा स्नेहं विचारिभिः ।
सुज्ञैः श्रमिकपक्षस्य नेतृभिर्हिंदमनादिभिः ॥ ११ ॥

पूर्वेनेमस्तनेताख्चालका राष्ट्रसंसदः ।
नैव ते कृतसंबन्धाः श्रमिपक्षस्य नायकैः ॥ १२ ॥

मोर्लेंग्लॅडस्टनादीनां पक्षः प्रागतिकः स्मृतः ।
अन्यः पक्षः सुजातानां भूम्युद्योगवतां तथा ॥ १३ ॥

जगद्युद्धोत्तरे काले श्रमिसंघटनाबलम् ।
संघर्धत क्रमेणैवेग्लंदद्वीपेऽपि निश्चितम् ॥ १४ ॥

चकार तिलको यत्नं प्राप्तुं तत्सहकारिताम् ।
यथा साहसिका यष्टिं समारोढुमधित्यकाम् ॥ १५ ॥

तथैव मान्यपक्षस्यैवाधारो राजकारणे ।
आवश्यकः सिद्धिमाप्तुं निजसंकल्पकर्मणः ॥ १६ ॥

राष्ट्रे स्यात् पक्षबाहुल्यं प्रथमं तत्र निश्चयः ।
सहकार्याय पक्षस्य कार्यसिद्धिचिकीर्षुणा ॥ १७ ॥

सूक्ष्मदृष्ट्या कृतं पूर्वं तिलकेन निरीक्षणम् ।
आङ्ग्लदेशे प्रस्तुते या काले निकटवर्तिनि ॥ १८ ॥

अधिकारी शासनस्य त्रिषु पक्षेषु को भवेत् ।
प्रश्नस्यास्योत्तरं दत्तं लोकमान्यैः समर्पकम् ॥ १९ ॥

अब्रवीत् तिलको लोकान् मुस्वय्यां स्वागतोत्तरे ।
मया संपादिता मैत्री नवकालोदितैर्जनैः ।
श्रमिपक्षो भासते मां राज्ञो ज्येष्ठात्मजोपमः ॥ २० ॥

विश्लेषणं कृतं तेन त्रिपक्षाणां विशेषतः ।
मननीयं भवेदद्य राजनीतिचिकित्सकैः ॥ २१ ॥

राजमान्याः सुखासीनाः समृद्धाः प्रतिगामिनः ।
अभिप्रेताः प्रगत्यै च दीनोद्धारानुकूलताम् ॥ २२ ॥

संपन्नानां प्रवेशस्य हस्ते राष्ट्रीयसंपदाम् ।
प्रतिषेधं विना मार्गः कोऽपि नान्योऽत्र वर्तते ॥ २३ ॥

चक्षुरुन्मीलितं राष्ट्रे युद्धापत्तिविलोकनात् ।
भवत्याधुनिके युद्धे संहारः सर्वतोमुखः ॥ २४ ॥

न भेदो विद्यते कोऽपि स्वस्थसैनिकयोः खलु ।
नश्वरं जीवितं सर्वं प्रतिभाति प्रतिक्षणम् ॥ २५ ॥

महत्त्वाकांक्षिलोकानामुपद्रवापोऽस्ति कारणम् ।
राष्ट्राणां बलिनां मध्ये युद्धकुण्डाग्निमन्थनम् ।
एतज्जागरणं जातं सर्वेषु श्रमजीविषु ॥ २६ ॥

प्रतिगामिजनानां ते वर्चस्वव्यवसायिनाम् ।
प्रायस्तेषां स्थापयितुं विमुखाः शासनं पुनः ॥ २७ ॥

बुद्धिमन्तः प्रागतिका विद्याभ्यासाभिलाषिणः ।
मूलतो निर्धनाः सर्वे सुखार्थं द्रव्यलिप्सवः ॥ २८ ॥

यावद् द्रव्यविहीनास्ते शासनेनापि सत्कृताः ।
तावत्सत्कार्यमग्नाश्च लोकेषु ध्येयवादिनः ॥ २९ ॥

जनविश्वासपात्रं त आरोहन्ति शनैः शनैः ।
उच्चश्रेणिं समाजे च विषयेभ्यः प्रलोभिताः ॥ ३० ॥

तेषां स्यात् पतनारम्भः किंचित्कालेन दुर्गुणैः ।
आचाराणां संमतानामतिक्रामो भवेत् ततः ॥ ३१ ॥

समाजहितनाम्ना ते दुर्जनानां समर्थनम् ।
कुर्युस्त्वन्यांश्चापराधाञ् जनतापायकारकान् ॥ ३२ ॥

आङ्ग्ले प्रागतिकानां तु स्थानं नैवास्ति निश्चलम् ।
श्रमोपजीविवर्गाणां नेतृत्वं च नवोदितम् ॥ ३३ ॥

ओजस्तेजोश्राजथूनां हृदयंगममेलनम् ।
आश्वासनं तत्साह्यस्य हिन्दभाग्योदये हितम् ॥ ३४ ॥

न हि मोघा भवेद् याच्ञा कृता तेभ्यो मते मम ।
अन्यपक्षद्वये सा तु दुर्लक्ष्या मन्यते मया ॥ ३५ ॥

"याच्ञा मोघा वरमधिगुणे नाधमे लब्धकामा"
तत्त्वं श्रेष्ठं कविकुलगुरुः शिक्षयामास लोकान्।
आपत्काले नयविनयविच्छीलयुक्तः शरण्यो
द्रष्टव्यो भो पतितमनुजो नैव लोभाद् भयाद् वा ॥ ३६ ॥

याच्ञाशब्दो न योग्योऽस्ति संबन्धस्यावयोः किल।
तेषामर्थे वयं सर्वे ह्यस्मदर्थे तथैव ते ॥ ३७ ॥

संकटे साह्यदानाय दत्तवाचो वयं च ते।
परस्पराश्वासनेन बभूवुर्यद्रसौहृदः ॥ ३८ ॥

नेमस्तैर्नैव संबन्धः कृतः पक्षेण केनचित्।
साहाय्यका बभूवुर्ये तत्कृतिर्व्यक्तिमूलका ॥ ३९ ॥

भारतोद्धारकार्यस्य समुल्लेखोऽपि नाभवत्।
कार्यक्रमस्य पत्रे वै ह्युदारमतवादिनाम् ॥ ४० ॥

सुहृद्भिर्निर्मितः संघः पार्लमेंटेऽपि कैश्चन।
हिन्दलोकहितप्रश्नविचारार्थं विशेषतः ॥ ४१ ॥

तदाभूद् इंडियापत्रे संघकार्यस्य वर्णनम्।
अस्मिन् देशे वाचकेभ्य उपलब्धं सविस्तरम् ॥ ४२ ॥

पार्लमेंट्री कमीटीति संज्ञिता सा तदाभवत्।
इंडियावृत्तपत्रेण संस्थाकार्यनिवेदने ॥ ४३ ॥

विद्यमानासु संसत्सु नियमाधिकृतासु च।
समितिर्या ह्युपर्युक्ता न सा केनापि गण्यते ॥ ४४ ॥

नैव कस्यापि पक्षस्य पार्लमेंटे स्थितस्य च।
यतः सदस्याः संघस्य भिन्नपक्षानुयायिनः ॥ ४५ ॥

संघकार्यक्रमे निष्ठा तेषां विश्वप्रघोषिता।
पूर्वनिष्ठाऽविरोधेन संघकार्यं नियम्यते ॥ ४६ ॥

एतादृशस्य संघस्य व्यष्टिदृष्ट्योपयुक्तता ।
बृहत्समष्टिप्रश्नानां संघः संचालनेऽक्षमः ॥ ४७ ॥

पूगीफलानां पक्वानां छेदिनी हस्तकर्तनी ।
प्रचण्डतरुखण्डानामक्षमैव विदारणे ॥ ४८ ॥

होमरूलान्दोलनेऽपि सर्वे संघसभासदः ।
नेमस्तानुनयाज्ञातास्तदुद्योगविरोधिनः ॥ ४९ ॥

तिलकागमनात् पूर्वं नैवासीदाङ्ग्लभूमिषु ।
कापि व्यवस्थितस्तथा संस्था तत्कार्यस्यानुमोदिनी ॥ ५० ॥

कर्तुं जागरणं द्वीपे तदा तस्मिन् निवासिषु ।
तिलकस्य प्रयत्नस्य कल्पना सर्वगामिनः ॥ ५१ ॥

जायेत वै पाठकानां दृष्ट्वा तत्पत्रसंग्रहम् ।
प्रकाशितं तच्चरिते नृसिंहेनाधिकारिणा ॥ ५२ ॥

तस्य मूलमाङ्ग्लरूपं जातं सुलभदर्शनम् ।
समाधयजयन्तेन पत्रग्रन्थप्रकाशनात् ॥ ५३ ॥

बाप्टिस्टेन कृतो यत्नः संपर्कस्थापनाय च ।
सह श्रमिकपक्षेण तिलकस्यानुमोदनात् ॥ ५४ ॥

समारंभे तदाधारात् स्वकार्ये तिलकस्तदा ।
द्विसहस्रं पौंडदानं तिलकेन समर्पितम् ॥ ५५ ॥

तत्पक्षस्य यशःप्राप्त्यै निर्वाचनमहोद्यमे ।
भारतीयसदिच्छायाः कर्तुमेव प्रदर्शनम् ॥ ५६ ॥

स्वराज्यप्राप्तियत्ने च मुख्यैः पक्षस्य नेतृभिः ।
आश्वासनं वै साहाय्य वेबहेंडर्सनादिभिः ।
उद्घोषितं प्रदत्तं च पक्षपत्रे महाशयैः ॥ ५७ ॥

नार्टिंग्यामे विशालायां जातायां पक्षसंसदि ।
भारतोद्धारमुद्दिश्य प्रस्तावः सर्वसंमतः ॥ ५८ ॥

तदाशयं प्रवक्ष्येऽहं देववाण्यां यथामति।
शृण्वन्तु सावधानं तमखिला देशसेवकाः ॥ ५९ ॥

भारतीयप्रयत्नस्य स्वराज्यार्थं कृतस्य वैः।
साहाय्यार्थं यत्नोद्युक्ताः श्रमिपक्षानुयायिनः ॥ ६० ॥

श्रमिकाणां समारोहे नार्दिंघ्यामे च वार्षिके।
साधनैरखिलैरेव न्यायमार्गैर्जनोचितैः ॥ ६१ ॥

अधिकारो जनस्यैव राज्यरूपस्य निर्णयः।
वाञ्छितस्य स्वराज्यस्य प्रस्तावेन निदर्शितम्।
स्वयंनिर्णयतत्त्वस्य स्वीकृतिस्तत्र सूचिता ॥ ६२ ॥

आङ्ग्लदेशो भारतस्य स्वयंनिर्णयपात्रता।
संमतैकस्य पक्षस्य श्रमिकस्येति निश्चितम् ॥ ६३ ॥

एका हर्लायेटिनाम्नी प्रतोदः श्रमकारिणाम्।
पक्षस्य दर्शयामास भिन्नत्वं कार्यपद्धतेः।
शिष्टानां लंदनस्थानां नेमस्तोत्कटपक्षयोः ॥ ६४ ॥

शिष्टा नेमस्तपक्षाणामाङ्ग्लदेशाधिकारिणः।
कार्यालयं भारतस्य चर्चायै दर्शनाय वा ॥ ६५ ॥

स्वदेशेनैव गच्छन्ति यातायातपरायणाः।
नेतुरुत्कटपक्षस्य तत्कार्यं तु सुदुष्करम् ॥ ६६ ॥

कष्टसाध्यं तदुद्दिष्टं युक्तिशक्तिप्रचोदितैः।
यत्नैरेव विलम्बेन कार्यं सिद्धिदशामियात् ॥ ६७ ॥

तिलकेमाधिकः काल आङ्ग्ललोकसमागमे।
नीतो दातुं भारतस्य स्थितेर्ज्ञानं सयुक्तिकम् ॥ ६८ ॥

श्रमजीविसमारोहे परिषत्सु सभासु च।
यद्व्याख्यद् बालो मण्डलं व्यवसायिनाम् ॥ ६९ ॥

प्राचीनत्वात् प्रस्तुतेऽस्मिन् जातं स्थित्यन्तरं च यत् ।
समीचीनं न तज्ज्ञानं प्राप्तं प्रागतिकैः किल ॥ ७० ॥

साम्योदयविचारेण लोके जागरणं कृतम् ।
तदुत्पन्नसमस्याभिः पूर्वं सर्वं विसंगतम् ॥ ७१ ॥

मॅक्डोनल्डो वेजवूड आर्यहॅंडर्सनस्तथा ।
जॉर्जलान्सबरिः साधुर्हिन्दमनोऽपि प्रशंसिताः ॥ ७२ ॥

तिलकेन स्वयं मुक्तकण्ठं च निजलेखने ।
नेतारस्ते ध्येयनिष्ठास्त्यागिनस्तत्त्वपालने ॥ ७३ ॥

लोकमान्ये च तेऽपश्यन्नसामान्यगुणांस्ततः ।
अधिष्ठानं विचाराणां ध्येयस्यैचापि तत्त्वतः ॥ ७४ ॥

ग्लासगोमेलने यातो मॅक्डोनल्डेन पूजितः ।
सभाध्यक्षेण लोकेभ्यो भाषणे परिचायके ॥ ७५ ॥

अस्मद्दैवाल्लोकमान्य आगतो भारतादिह ।
तिलको मूर्तिरेवास्ति भारतस्यापदां स्वयम् ॥ ७६ ॥

देशस्वातन्त्र्यलाभाय भारतीयसमुद्यमः ।
साहाय्यमाङ्ग्लवश्यूनां तदर्थं तेन याचितम् ॥ ७७ ॥

युष्माकं प्रातिनिध्येन स्थितोऽहं पक्षसंसदि ।
ददामि वचनं तस्मै गभीरं च महत्तमम् ॥ ७८ ॥

जनतायाः प्रयत्नानां भारतस्याशुसिद्धये ।
त्वत्साहाय्यं भाविकाले सर्वभावेन तत्परः ॥ ७९ ॥

पुरुषः पक्षरूपोऽसौ हिन्देभ्यो वचनं ददौ ।
प्रार्थितो लोकमान्येन द्वीपे निवसता तदा ॥ ८० ॥

तेन संपादिता मैत्री भारतक्षेमकारणे ।
उपयुक्ताभवत् पश्चाद् हिन्दस्वातन्त्र्यसिद्धये ॥ ८१ ॥

उपक्रममिमं चक्रे तिलको लंदने तदा।
कर्तुं साम्राज्यपाशेभ्यो भारतस्य विमोचनम् ॥ ८२ ॥

तिलकेन कृतं कार्यं पटेलेनैव वर्णितम्।
स्वरूपं च महत्त्वं च लंदने तस्य विस्तृतम् ॥ ८३ ॥

श्रमिपक्षेण या दत्ता पुष्टिः कार्याय लंदने।
भारताभ्युदयार्थं वै तत् सर्वं तिलकश्रमात् ॥ ८४ ॥

मांटेग्युचिलसंवन्धिचर्चायां मण्डलेन वै।
तत्त्वानां शोधनस्यापि पार्लमेंटाधिवेशने ॥ ८५ ॥

जातो वादविवादश्च साहाय्यात् श्रमिपक्षिणाम्।
पक्षसंघटना जाता भारतस्योपकारिणी ॥ ८६ ॥

तत्पक्षस्य बलं सर्वं संचारेऽप्युपकारकम्।
आङ्ग्लदेशे मण्डलस्य सदस्यानां विशेषतः ॥ ८७ ॥

प्रभाविन्याङ्ग्लदेशेऽभूद् युतिर्वालपटेलयोः।
महासभाविचाराणां प्रचाराय जनेष्वपि ॥ ८८ ॥

पटेलो योजितः शिष्टैरिंग्लंदे प्रमुखस्तदा।
तेनैव सकलायाप्तिरभवत् शिष्टकर्मणः।
प्रशस्तिस्तत्कौशलस्य वेजवुडादिभिः कृता ॥ ८९ ॥

मुख्यभारतशिष्टानां करिष्यामीह वर्णनम्।
अल्पं परिचयं दातुं वाचकेभ्यो यथामति ॥ ९० ॥

तत्प्रशोऽभूद् विपिनचन्द्रः पालवंशसमुद्भवः।
वङ्गभङ्गस्य काले यो नेतृत्रय्यां सुपूजितः ॥ ९१ ॥

ख्यातवक्ता ग्रन्थकर्ता बहिष्कारप्रचारकः।
स्टेडस्य कथनात् तेन लिखितो लेख उत्तमः ॥ ९२ ॥

वांचोत्पत्तिचिकित्सेति विख्याते तस्य मासिके।
तन्मासिकप्रचारश्च भारते प्रतिषेधितः ॥ ९३ ॥

प्रशासनेन तत्काले समस्या जटिलाभवत् ।
अल्पकालेन तत्पश्चात् स निषेधो निराकृतः ॥ ९४ ॥

सूक्ष्मदर्शी क्रियावादी पटेलो राजकारणे ।
दास्यविध्वंसिनी यस्य बुद्धिः स्वातन्त्र्यवादिनी ॥ ९५ ॥

खापर्डे इति नाम्नैव भारते सर्वतोमुखी ।
प्रशंसाधिगता येन गणेशं तं नमाम्यहम् ॥ ९६ ॥

विनोदप्रचुरा वाणी सदा रसिकरञ्जनी ।
संस्कृताङ्ग्ला महाराष्ट्री हिंदी चोर्दू च गुर्जरी ॥ ९७ ॥

भाषास्वेतासु नैपुण्यं व्याख्यानस्य सुविश्रुतम् ।
भाषणामृतपानेन तृप्ताः श्रोतृजनाः सदा ॥ ९८ ॥

लोकमान्यः सुहृच्छ्रेष्ठस्तस्य विश्वासभाजनम् ।
'लोकोत्तरो लोकमान्यः' पदाभ्यां तेन संस्तुतः ॥ ९९ ॥

दृष्टो मया भारतेस्मिन् नान्यस्तेन समो जनः ।
जपनीयो देशभक्तैरयमष्टाक्षरः स्तवः ॥ १०० ॥

तिलकन्यायकार्येषु दक्षः सदुपदेशकः ।
साताराख्यो महाराष्ट्रे दादासाहेबसंज्ञितः ॥ १०१ ॥

शिरोमणिर्विधिज्ञानां करंदीकरवंशजः ।
टेम्सतीरे कृतं येन संख्यायन्त्रममादिकम् ॥ १०२ ॥

वैविध्याद् विपुलत्वाच्च लालित्याल्लेखनस्य च ।
'साहित्यस्य' महाराष्ट्रे 'सम्राट्'पदविभूषितः ॥ १०६ ॥

स्वयंप्रज्ञोऽप्येकनिष्ठः केसरीपत्रचालकः ।
लोकमान्यप्रभावल्यां रत्नं तेजोमयं किल ॥ १०७ ॥

अधीती घटनाशास्त्रे प्रवीणो राजकारणे ।
द्रिवाण इति विख्यातः प्रायो दक्षिणभारते ।
संस्थानिकसमस्यासु निपुणो माधवाभिधः ॥ १०८ ॥

हिन्दुपत्रस्य मुख्योऽभूद् रंगास्वामी विशेषतः ।
उद्यमे वृत्तपत्राणां परमोच्चपदं गतः ॥ १०९ ॥

विद्वान् विनयसंपन्नो घटनाशास्त्रलेखकः ।
मोतीलालादिनेतॄणां कुशलः कार्यवाहकः ॥ ११० ॥

मूर्ध्नि स्थितो विधिज्ञानां ह्स्तिनामः सभापतिः ।
विशेषायाः परिषदो मुम्बापुर्यां स्मितानन: ॥ १११ ॥

विषयज्ञानवैशद्यात् कौशल्याद् वादपद्धतेः ।
वज्रप्रायप्रहारेण प्रतिवादिभयंकरः ॥ ११२ ॥

शीघ्रत्वात् प्रतिप्रश्नेषु सप्तिमूर्तीति संज्ञितः ।
सत्यमूर्तिः सभामध्ये युद्धेऽर्जुन इवापरः ॥ ११३ ॥

चमन्लालो गौरवर्णः प्रकृत्या सुखलालसः ।
श्रमिकाणामग्रनेता देवासेवारतोऽभवत् ॥ ११४ ॥

गिरां धारा मुखात् तस्य निःसृता सुमनोहरा ।
वक्षसः प्रतिपक्षस्य भेदनेऽतिपटीयसी ॥ ११५ ॥

एतेषामितरेषां च दिग्गजानां घनगर्जनैः ।
भारतोद्धारकार्यार्थमाहल्लाकाशं निनादितम् ॥ ११६ ॥

अल्पकालाद् निनादस्य श्रुतो भूम्यां प्रतिध्वनिः ।
तिलकस्य प्रयत्नेन दशदिक्पूर्णमण्डले ॥ ११७ ॥

स्वातन्त्र्यस्य समुद्यमे भरतभूसाहां वयं कुर्महे
दत्तं यद् वचनं स्वपक्षसमितौ नार्टिघ्यमे नेतृभिः ।
गम्भीरं तिलकाय पक्षपरिपत्सिंहासने सुस्थितात्
कार्योध्यक्षमुखात् तदेव सुफलं प्राप्तं शुभं यात्रिभिः ॥ ११८ ॥

इति माधवविरचिते श्रीतिलकयशोऽर्णवे आङ्ग्लभूयात्राकार्यवर्णनं नाम पञ्चसप्ततितमस्तरङ्गः ।

## षट्सप्ततितमस्तरङ्गः

मांटेग्युना भारतस्य घटनासीद् विनिर्मिता ।
संप्रविष्टा पार्लमेंटे संमत्यै सा समासदाम् ॥ १ ॥

नियुक्ता पार्लमेंटेन समितिः स्वसभासदाम् ।
सेल्बोर्नोऽभूत् तदध्यक्षः श्रोतुं साक्षिनिवेदनम् ॥ २ ॥

प्रजामतं परिज्ञातुं समितिः पार्लमेंटरी ।
वयोवृद्धः सदस्योऽभूदसौ लार्डसभास्थितः ॥ ३ ॥

सौकर्याय प्रेषितैका साक्षिभ्यः प्रश्नपत्रिका ।
विज्ञापना कृता तेषां दातुं लिखितमुत्तरम् ॥ ४ ॥

प्रश्नानां पत्रिकास्थानां प्रेषितुं समितिं प्रति ।
आहूतश्चेत् तथागन्तुं कर्तुं मुखनिवेदनम् ॥ ५ ॥

तिलकेन प्रेषितैव स्वयमुत्तरपत्रिका ।
तस्मै निवेदितं चापि प्रत्यक्षोपस्थितेर्दिनम् ॥ ६ ॥

कर्तुं निवेदनं तेषां पुरोऽध्यक्षेण सूचितः ।
तिलकः संमुखस्तिष्ठन् वाचा गम्भीरयावदत् ॥ ७ ॥

संघस्य संमतं तत्त्वं घोषणोद्घोषितं महत् ।
ऊनविंशशते येशोः शके सप्तदशोत्तरे ॥ ८ ॥

अन्तिमे घोषणाभागे यदुक्तं तद् न संमतम् ।
मतं तद्विषये वक्तुं संघस्याद्य समारभे ॥ ९ ॥

घोषणागततत्त्वानां करोमीह निवेदनम् ।
बोधकं पाठकानां च मतभेदनिदर्शकम् ॥ १० ॥

सार्वभौमस्याधिकारः कालावधिविनिश्चये ।
प्रगतेरुक्ततत्त्वस्य संप्राप्तेश्च यथाक्रमम् ॥ ११ ॥

पूर्वं ज्ञात्वा मतं हिन्दुशासनप्रमुखस्य च ।
नावश्यकं च तत् सर्वं मते संघसभासदाम् ॥ १२ ॥

कांग्रेसलीगसंयुक्तयोजनायां च संमतिः ।
क्रममार्गस्य तत्त्वस्य स्वराज्यस्थापनोद्यमे ॥ १३ ॥

शिखरारोहणं कर्तुमवश्या गणना पदाम् ।
निश्चेतव्यः प्रवासस्यावधिः संपूर्ण एव च ॥ १४ ॥

स पञ्चदशवर्षाणामस्माभिः सूचितोऽवधिः ।
कांग्रेसलीगसंयुक्तयोजनायां च संमतः ॥ १५ ॥

सर्वप्रान्तप्रदेशेषु प्रारम्भादेव शासकैः ।
प्रान्तीयकार्यसिद्ध्यर्थं देया स्वायत्तता खलु ॥ १६ ॥

शासने मन्त्रिणो भूयुः सर्वे उत्तरदायिनः ।
प्रान्तीयेभ्यः सदस्येभ्योऽवश्या विधा यथोचिता ॥ १७ ॥

शासनान्तररूपस्य दृश्यं येन प्रवर्तते ।
तस्योत्तमस्य तत्त्वस्य जाता स्वीकृतिरंशतः ॥ १८ ॥

शासने प्रान्तिके ग्राह्यो घोषणायां प्रदर्शितम् ।
केन्द्रीयेऽपि तथा तत्त्वमनुल्लेखेन विद्यते ॥ १९ ॥

मान्यं पूर्णं यदि प्रान्ते त्याज्यं केन्द्रे कथं भवेत् ।
घोषितायां योजनायां महत्येव विसंगतिः ॥ २० ॥

मन्त्र्यङ्किता ये विषया दर्शिताः प्रान्तशासने ।
तेषां व्यवस्था कर्तव्या तादृशी केन्द्रशासने ॥ २१ ॥

समस्येयं विचारार्थं भवतां वै सभासदाम् ।
सूचना मत्कृताः काश्चित् सन्त्येवोत्तरपत्रके ॥ २२ ॥

महासभासूचनासु समापत्तिनिवारणे ।
उचिता उपयोगाय युक्तयः संप्रदर्शिताः ॥ २३ ॥

निर्मित्यै मतदातृणां वैपुल्यं विद्यतेऽधुना ।
भारते साधनानां च शासनेन यदीप्सितम् ॥ २४ ॥

राजकीयव्यवस्थायाः सूत्रं लोककरस्थितम् ।
कर्तव्यं रक्षितव्यं नो स्वाधीनमधिकारिणाम् ॥ २५ ॥

विराजतां शाश्वतीयमधिकारिपरंपरा ।
यथैंग्लंडे निर्मितव्या भारतेऽपि तथैव [illegible] ॥ २६ ॥

शासनस्याधिकारस्य भवेत् स्थित्यन्तरं यदा ।
स्वरूपं धोरणस्यापि भिन्नं भवति नित्यशः ॥ २७ ॥

अभिप्रायस्यानुरूपमधिकारस्यमन्त्रिणाम् ।
पालनं शासकाज्ञायाः कर्तव्यमधिकारिणा ॥ २८ ॥

अपहारोऽधिकारस्य स्वयमाज्ञाप्रवर्तनम् ।
प्रमुखं लोकतन्त्रस्य लक्षणं मन्यते हि तत् ।
स्वीकर्तव्यं योजनायां नूतनायां च भारते ॥ २९ ॥

कर्तव्यादौ स्पष्टशब्दैस्तत्त्वानां मूलगामिनाम् ।
मानव्याधारभूतानां मान्यताया हि घोषणा ॥ ३० ॥

न वै पृष्टाः प्रतिप्रश्नाः सदस्यैः समितिस्थितैः ।
प्रतिप्रश्नं विना तस्य स्वीकृतं च निवेदनम् ॥ ३१ ॥

प्रतिप्रश्नं विना भीतमन्तं तस्य निवेदनम् ।
तेन जातं सदस्यानां क्षुद्रबुद्धेः प्रदर्शनम् ॥ ३२ ॥

शिरोमणिः सिडेन्हामो लोकमान्यस्य शत्रुषु ।
साम्राज्यमदमत्तेषु मुम्बय्यां शासनाधिपः ॥ ३३ ॥

अग्रेसरोऽभवद् नित्यं पीडायां तिलकस्य सः ।
दीर्घद्वेषी क्षुद्रदृष्टिः प्रतिगामिपुरःसरः ॥ ३४ ॥

सत्कारो लोकमान्यस्य तस्याभूद् दुःसहः सदा ।
इंग्लंडे येन केनापि कृत एव तदादरात् ॥ ३५ ॥

नाभवत् संमतं तस्य साक्षिरूपेण दर्शनम् ।
परीक्षणं तत्सदस्यैस्तिलकस्य च सर्वथा ॥ ३६ ॥

मॉंटेगस्यासंमतं तद् दीर्घद्वेषसमुत्थितम् ।
मतं तु तत्त्वशून्यत्वादयोग्यं चाहितप्रदम् ॥ ३७ ॥

दम्पती सिडनहामाख्यौ तिलकद्वेषिणावुभौ ।
स्वपत्यर्धाङ्गभूतापि द्विगुणद्वेषकारिणी ॥ ३८ ॥

लंदने तिलकः कांचित् समाहूतो गतः सभाम् ।
अन्तःस्थिता नातिदूरं द्वारस्था साभिमानिनी ॥ ३९ ॥

लेडी सिडनहामाख्या विलोक्य तिलकं तदा ।
समायातं सभास्थानं सक्रोधं प्राह बालकम् ॥ ४० ॥

तिलकं वै समाहूय सभामद्य त्वया कृतः ।
सेवकनामाङ्ग्लभूमेरपमानोऽतिदुःसहः ॥ ४१ ॥

कारागारनिबद्धोऽयं न्यायाधीशेन भारते ।
राजद्रोहापराधीति कृत्तिकायत्तसपयधौ ॥ ४२ ॥

मत्पतिः शासनेशोऽभूत् तन्न्यायस्य विनिर्णये ।
तेनैव प्रेरणा दत्ता योग्यन्यायाधिकारिणे ॥ ४३ ॥

निमन्त्र्यायां तेन सार्धमपमानस्त्वया कृतः ।
संतप्तोवाच नारी सा चण्डीवारक्तलोचना ॥ ४४ ॥

तत्रैव प्रावदत् स्थाने विख्यातः डॉमहोदयः ।
न्यायाधीशपदं येन भूषितं प्रीविकौन्सिले ॥ ४५ ॥

लोकमान्याय यो न्यायं दत्तवान् प्रीविकौन्सिले ।
अपीले तत्कृते ताईदत्तपुत्रस्य निर्णये ॥ ४६ ॥

दृष्ट्वा तं च समायातं वापटिस्टः पुरःसरः ।
स्नेहेन तत्स्वागतार्थं दृढं धृत्वात्मनः करे ॥ ४७ ॥

दोलयामास तद्हस्तं सानन्दं स मुहुर्मुहुः ।
परिचेतुं तमानीय तिलकं प्रति सोऽब्रवीत् ॥ ४८ ॥

तिलकोऽयं भारतस्य विख्यातो नरपुंगवः ।
श्रुत्वा वाक्यं न्यायमूर्तिः सहसा स्वकरेण सः ॥ ४९ ॥

पाणिं बालस्य संधार्य दृढमान्दोलनाय च ।
सावेशं चालयित्वा तं जगादोच्चैः प्रहर्षितः ॥ ५० ॥

अयमेवास्ति किं स्यातः 'टायलकः' पुरुषोत्तमः ।
अहो भाग्यं सुदैवेन जातं तस्यात्र दर्शनम् ॥ ५१ ॥

तदाभवत् तदुद्गार इत्याशयनिदर्शकः ।
संभाष्याल्पं गताः सर्वे स्वे स्वे स्थाने च संस्थिताः ॥ ५२ ॥

एतद् चण्डी विस्मयेन दृष्ट्वा तूष्णीं बभूव सा ।
न्यायाधीशकृतोपेक्षा संमानेनापराधिनः ॥ ५३ ॥

अहो कष्टं विलुप्तोऽभूद् मार्गः शिष्टसुसंमतः ।
न सुचिह्नं निश्चितं तत् कालस्यागामिनो भवेत् ॥ ५४ ॥

अन्योद्योगः समारंभस्तिलकेन ततः परम् ।
स्वयंनिर्णयतत्त्वस्याधिकारप्राप्तिपात्रता ॥ ५५ ॥

अद्यैव भारतस्यास्ति कथं तद्विश्वसंमतम् ।
भवेदिति विचारेणात्मनो मार्गो विनिश्चितः ॥ ५६ ॥

लिखितादौ प्रचारार्थं तिलकेनैकयोजना ।
ईंग्लंडे च युरोपे च कानडामेरिकास्वपि ॥ ५७ ॥

आदौ स्वयंनिर्णयस्य घोषणा तेन सूचिता ।
कर्तव्या शान्तताभक्तैः पारीसे मिलितैश्च तैः ॥ ५८ ॥

विश्वशान्तिसमारोहे प्रचाराय विशेषतः ।
सुरपत्रं लिखितं चैकं सविस्तरनिवेदनम् ॥ ५९ ॥

पारीसं निश्चितं पूर्वं शान्ततापरिषत्स्थलम् ।
हेमेंसोऽभूत् तदध्यक्षो यत्नशीलो विवेकवान् ॥ ६० ॥

तस्य हस्ते प्रदानाय विस्तृतं तद् निवेदनम् ।
तिलकेन स्वयत्नस्य पराकाष्ठा कथं कृता ।
पत्रे तेन प्रेषिते तद् वर्णितं च सविस्तरम् ॥ ६१ ॥

महासभाधिकारिभ्यस्तिलकेनैव सूचितम् ।
कार्यालयेन कर्तव्या सत्वरं नामघोषणा ॥ ६२ ॥

पालगान्धीशासनेभ्यः शान्ततासंसदं प्रति ।
दत्तं प्रतिनिधिस्थानं सभाया अधिकारिभिः ॥ ६३ ॥

पारीसस्य प्रयासार्थमिंग्लंडस्याधिकारिणे ।
निश्रायै तिलकेनासीदनुज्ञापत्रमर्थितम् ।
प्रार्थना संमता नाभूत् शासनस्य तदा खलु ॥ ६४ ॥

गाङ्गाधरिप्रयातो न शान्ततापरिषत्स्थले ।
प्रशासनस्य मान्योऽभूद् येन केनापि हेतुना ॥ ६५ ॥

परिपेतुं परं धीरो भारतीयस्य वाञ्छितम् ।
यत्नशीलोऽहमित्याह विश्वशान्तिसभासदः ॥ ६६ ॥

तदानीं भारतप्रश्नश्चर्चायां परिषत्स्थले ।
नानामार्गैः संप्रविष्टो विज्ञातं भारतेप्सितम् ॥ ७० ॥

सदस्यैः संसदं प्राप्तैर्भारतस्य हितैषिभिः ।
स्वयंनिर्णयतत्त्वस्य कर्तव्यमवलम्बनम् ॥ ७१ ॥

स्वयंनिर्णयपत्रस्य लालालजपतं प्रति ।
अमेरिकां प्रेषिताश्च लिपयो वै सहस्रशः ॥ ७२ ॥

लालाजिना तदाधारात् संक्षेपेण निवेदनम् ।
लिखितं प्रेषितं तच्च परराष्ट्रियमण्डले ॥ ७३ ॥

अस्मिन् कार्ये मलोनेन दत्तं साहाय्यमुत्तमम् ।
समावेशात् पत्रकस्य लेखेष्वधिकृतेषु च ॥ ७४ ॥

स्वयंनिर्णयतत्त्वस्य स्वीकृतिर्भाग्यनिर्णये ।
भूयाद् वै भारतस्यापि विचारो यः पुरस्कृतः ॥ ७५ ॥

अन्ताराष्ट्रीयप्रश्नेषु तेन प्राप्तं महत् पदम् ।
तिलकस्य प्रयत्नेन तथा तत्सहकारिणाम् ॥ ७६ ॥

तदङ्गस्योपसंहारात् पूर्वमेकं निवेदनम् ।
मतव्यपितव्यत्ययस्य भारतस्य करोम्यहम् ॥ ७७ ॥

शान्ततासंसदं गन्तुं सार्वभौमाधिकारिभिः ।
नियोजितं स्वयं पूर्वं हिन्दप्रतिनिधिद्वयम् ॥ ७८ ॥

लार्डसिंहो भारतस्य कार्यवाहस्य साहाकः ।
विकानेरस्य राजा च भारते सर्वविश्रुतः ॥ ७९ ॥

लोकानां तौ भारतस्य प्रातिनिध्याय सर्वथा ।
ज्ञात्यापि नोचितावेव नियुक्तिश्च तयोः कृता ॥ ८० ॥

शोषकौ प्रातिनिध्येन शोषितानामुपस्थितौ ।
पारीसपरिषत्स्थाने तदेतत् क्षोभकारकम् ।
जातं सामान्यलोकानां दीर्घं संपूर्णभारते ॥ ८१ ॥

यभूवाविष्कृतिस्तस्य संसत्स्थानेऽपि पारिसे ।
कथमं तस्य संक्षिप्तमस्मिन् ग्रन्थे करोम्यहम् ॥ ८२ ॥

घोषयेद् वै स्वनैरुच्चैः पातकं हतलोहितम् ।
पातालेऽपि स्थितं गुप्तं लोकोचितः सर्वविश्रुता ॥ ८३ ॥

यदातिष्ठद् बिकानेरमहाराजः प्रभाषितुम् ।
निवासिनां भारतस्य ध्येयमेव सभास्थले ॥ ८४ ॥

प्रेक्षकेभ्यो युवा कश्चिद् चकार मतदर्शनम् ।
जनानां भारतीयानां स्वरेणोच्चैः सभास्थले ॥ ८५ ॥

कृत्यातिविकटं हास्यं गर्हणाद्योतकध्वनिम् ।
निजस्थानं परित्यज्य निन्दन् प्रतिनिधिद्वयम् ॥ ८६ ॥

तिरस्कृतिं दर्शयंश्च सभास्थानाद् बहिर्गतः ।
लोहियाख्यो ज्वलद्भक्तो रामपूर्वमनोहरः ॥ ८७ ॥

तस्य हास्येन रोषेण स्थानाद् निर्गमनेन च ।
अभिप्रायो भारतस्य ज्ञातस्तत्रस्थसज्जनैः ॥ ८८ ॥

वञ्चिताः परिपत्स्थान आङ्ग्लिकैः स्वार्थसाधुभिः ।
जिज्ञासवः सदस्या य आसन् ये भारतस्थितेः ॥ ८९ ॥

उपक्रमो भारतस्य सेवायास्तत्क्षणे कृतः ।
लोहियेनार्थगर्भेण मन्ये हास्येन तत्स्थले ॥ ९० ॥

विश्वप्रमुखराष्ट्रेषु भारतस्य परिस्थितेः ।
तिलकस्य मतेऽपदयः प्रचार उचितो भवेत् ॥ ९१ ॥

परराष्ट्रप्रचारस्य महत्त्वं प्रयत्नैरपि ।
राष्ट्रैर्विज्ञायते नित्यं स्वकीयेष्वपमेषु ह ॥ ९२ ॥

खण्डप्रायामेरिकायां कार्यं लालाजिना कृतम् ।
दातुं तत्रत्यलोकेभ्यो ज्ञानं हिन्दपरिस्थितेः ।
बालस्तस्मै डालराणां ददौ पञ्चसहस्रकम् ॥ ९३ ॥

पटेलेन यदा पृष्टो बालो दानप्रयोजनम् ।
परराष्ट्रप्रचारस्य देशस्वातन्त्र्यकर्मणि ॥ ९४ ॥

तिलकेनोत्तरे प्रोक्तं यत् तत् तत्त्वं निवेदितम् ।
सभामध्ये पटेलेन लोकमान्ये दिवं गते ॥ ९५ ॥

परराष्ट्रप्रचारेण केवलेन न संभवः ।
संप्राप्तेर्यै स्वराज्यस्य परदास्यविमोचनात् ॥ ९६ ॥

देहत्यागाद् विना स्वर्गो यथा जीवस्य दुर्लभः ।
राष्ट्रमोक्षोऽप्यैहिकानां विना त्यागात् सुदुर्लभः ॥ ९७ ॥

एवंभूतेऽपि विश्वस्य सज्जनस्यानुकूलता ।
भवेद् या प्रेरणाशक्तिर्वाञ्छनीया हि सा सदा ॥ ९८ ॥

समर्थानां स्वतन्त्राणां परराष्ट्रानुकूलताम् ।
संप्राप्तुं तु भवत्येव द्रव्यस्य सुमहान् व्ययः ॥ ९९ ॥

किं वक्तव्यं दुर्बलानां स्योद्धारस्य समुद्यमे ।
तत्सदिच्छासमाधाप्यै भवेद् द्रव्योपयोगिता ॥ १०० ॥

परराष्ट्रप्रचारस्य राजनैतिकहेतुना ।
केवलं न कृतस्तेन पुरस्कारस्तदा स्वयम् ॥ १०१ ॥

प्रेषिते तेन पत्रे च टागोराय विवेचितम् ।
उद्देशस्य विशालत्वं प्रचाराख्यस्य कर्मणः ॥ १०२ ॥

ज्ञातं मया मुखाद् यच्च कवीन्द्रस्य स्वयं तदा ।
न्यूदेहल्यां ब्रवीम्यद्य निम्नभागे यथास्मृति ॥ १०३ ॥

विश्वख्यातं भारतस्य कवीन्द्रं वाग्मिनां वरम् ।
रवीन्द्रनाथं टागोरं पत्रे च तिलकोऽलिखत् ॥ १०४ ॥

स्वीकर्तव्यं द्रव्यमल्पं मया हेतुपुरःसरम् ।
लक्षार्धमूल्यकं चेकं प्रेषितं भवतः प्रति ॥ १०५ ॥

संचारपूता कर्तव्या भूगोलार्धस्थिता मही ।
अतिपूर्वा च पूर्वा च दक्षिणामेरिकाभिधा ॥ १०६ ॥

प्रोक्तानि यानि ध्येयानि जम्बुद्वीपनिवासिभिः ।
अध्यात्मज्ञानिभिः पूर्वमृषिभिर्मन्त्रकृद्वरैः ॥ १०७ ॥

जगत्कुटुम्बनिर्माणे सुयोग्यान्येव सर्वथा ।
सरहस्यं विवर्ण्यन्तां तज्ज्ञस्याय जनाय वै ॥ १०८ ॥

दिव्योदात्तस्वरूपस्य वेदधर्मस्य विश्वतः ।
प्रसारेण भवत्येष पूर्वभारतदर्शनम् ॥ १०९ ॥

निर्मितव्यो नूतनोऽयं सुहृद्भावो महीतले ।
कलहस्य विनाशाय चाभ्युत्यस्योदयाय च ॥ ११० ॥

अन्ते निवेदितं तेन द्रव्यं तत् तिलकं प्रति ।
सखेदं प्रेषितं दृष्ट्वाऽक्षमतामात्मनस्तदा ॥ १११ ॥

यद्यप्यात्मबलं समस्तमनुजोन्नत्यै बृहत्साधन-
मिष्टं नीतिविदां तथापि समये ह्यन्यस्य साह्यं तथा ।
वैद्यो रोगनिवारणाय निपुणो दिव्यौषधैः सेवने
व्याधिग्रस्तसुखार्थमेव यतते दानेऽनुपानस्य च ॥ ११२ ॥

इति माधवविरचिते श्रीतिलकयशोऽर्णवे परदेशराजकारणप्रशस्तिनामा
षट्सप्ततितमस्तरङ्गः ।

पटेलेन यदा पृष्टो बालो दानप्रयोजनम् ।
परराष्ट्रप्रचारस्य देशस्वातन्त्र्यकर्मणि ॥ ९४ ॥

तिलकेनोत्तरे प्रोक्तं यत् तत् तत्त्वं निवेदितम् ।
सभामध्ये पटेलेन लोकमान्ये दिवं गते ॥ ९५ ॥

परराष्ट्रप्रचारेण केवलेन न संभवः ।
संप्राप्तेर्वै स्वराज्यस्य परदास्यविमोचनात् ॥ ९६ ॥

देहत्यागाद् विना स्वर्गो यथा जीवस्य दुर्लभः ।
राष्ट्रमोक्षोऽप्यैहिकानां विना त्यागात् सुदुर्लभः ॥ ९७ ॥

एवंभूतेऽपि विश्वस्य सज्जनस्यानुकूलता ।
भवेद् या प्रेरणाशक्तिर्वाञ्छनीया हि सा सदा ॥ ९८ ॥

*समर्थानां स्वतन्त्राणां परराष्ट्रानुकूलताम् ।*
संप्राप्तुं तु भवत्येव द्रव्यस्य सुमहान् व्ययः ॥ ९९ ॥

किं वक्तव्यं दुर्बलानां स्वोद्धारस्य समुद्यमे ।
तत्सदिच्छासमावाप्त्यै भवेद् द्रव्योपयोगिता ॥ १०० ॥

परराष्ट्रप्रचारस्य राजनैतिकहेतुना ।
केवलं न कृतस्तेन पुरस्कारस्तदा स्वयम् ॥ १०१ ॥

प्रेषिते तेन पत्रे च टागोराय विशेषितम् ।
उद्देशस्य विशालत्वं प्रचाराख्यस्य कर्मणः ॥ १०२ ॥

ज्ञातं मया मुखाद् यच्च कवीन्द्रस्य स्वयं तदा ।
न्यूदेहल्यां ब्रवीम्यद्य निम्नभागे यथास्मृति ॥ १०३ ॥

विश्वख्यातं भारतस्य कवीन्द्रं वाग्मिनां वरम् ।
रवीन्द्रनाथं टागोरं पत्रे च तिलकोऽलिखत् ॥ १०४ ॥

स्वीकर्तव्यं द्रव्यमल्पं मया हेतुपुरःसरम् ।
लक्षार्धमूल्यकं चेकं प्रेषितं भवतः प्रति ॥ १०५ ॥

संचारपूता कर्तव्या भूगोलार्धस्थिता मही ।
अतिपूर्वा च पूर्वा च दक्षिणामेरिकाभिधा ॥ १०६ ॥

प्रोक्तानि यानि ध्येयानि जम्बुद्वीपनिवासिभिः ।
अध्यात्मज्ञानिभिः पूर्वमृषिभिर्मन्त्रदृद्वरैः ॥ १०७ ॥

जगत्कुटुम्बनिर्माणे सुयोग्यान्येव सर्वथा ।
सरहस्यं विवर्ण्यन्तां तत्रस्थाय जनाय वै ॥ १०८ ॥

दिव्योदात्तस्वरूपस्य वेदधर्मस्य विश्वतः ।
प्रसारेण भवत्येव पूर्णभारतदर्शनम् ॥ १०९ ॥

निर्मितव्यो नूतनोऽयं सुहृद्भावो महीतले ।
कलहस्य विनाशाय बन्धुत्वस्योदयाय च ॥ ११० ॥

अन्ते निवेदितं तेन द्रव्यं तत् तिलकं प्रति ।
सखेदं प्रेषितं दृष्ट्वाऽक्षमतामात्मनस्तदा ॥ १११ ॥

यद्यप्यात्मबले समस्तमनुजोऽस्मै बृहत्साधन-
मिष्टं मीतिविदां तथापि समये ह्यन्यस्य साह्यं तथा ।
वैद्यो रोगनिवारणाय निपुणो दिव्यौषधैः सेवने
व्याधिग्रस्तसुखार्थमेव यतते दानेऽनुपानस्य च ॥ ११२ ॥

इति माधवविरचिते श्रीतिलकयशोऽर्णवे परदेशराजकारणप्रशस्तिनाम्ना
षट्सप्ततितमस्तरङ्गः ।

## सप्तसप्ततितमस्तरङ्गः

आजुहाव स मांटेगो द्विवारं तिलकं तदा।
संभाषणेन ज्ञातुं वै भारतीयमनःस्थितिम् ॥ १ ॥

किमर्थमादरस्तेन दर्शितस्तिलकं प्रति।
द्विर्निमन्त्र्य विशेषस्तु मांटेगोनेति केचन ॥ २ ॥

प्रश्नः कृतस्तदा क्षुब्धैः क्षुद्रैस्तिलकशत्रुभिः।
साम्राज्यवादिभिर्नित्यं मदिरोन्मत्तवृत्तिभिः ॥ ३ ॥

हिन्दस्य कार्यवाहस्य महत्स्थाने प्रतिष्ठितः।
मांटेगो दर्शयामास संमानं तिलकं प्रति ॥ ४ ॥

नृपाङ्गणगतस्यासीदुन्मत्तेव मनःस्थितिः।
स्वभावतः खलस्यैति ह्यापः सन्त्येव निम्नगाः ॥ ५ ॥

मांटेगस्य सुविज्ञाता तिलकाभ्यासशीलता।
समन्वये च प्रावीण्यं ध्येयप्रस्तुतसाध्ययोः ॥ ६ ॥

दीर्घावलोकनाद् यद् वै मांटेगेनात्मनो मतम्।
बालस्य विषये व्यक्तं वच्मि तद् श्लोकयोरधः ॥ ७ ॥

पुरुषो दुर्लभोऽस्माकं प्रभावे वा प्रलोभनम्।
उपेक्ष्य राजते धाम्नायमेकस्तिलकाभिधः ॥ ८ ॥

भारते सन्ति विद्वांसः शीलकर्तृत्वसंयुताः।
मन्ये तानप्युपायेन वशीकर्तुं वयं क्षमाः ॥ ९ ॥

बालं प्रति महान्यायः समित्या विहितः पुरा।
अपृष्ट्वा वै प्रतिप्रश्नमात्मौदासीन्यदर्शनात् ॥ १० ॥

तच्छल्येन विषण्णः सन् यत्नशीलोऽभवद् ननु।
निमन्त्रणं पुनर्दत्त्वा बालाय परिमार्जने ॥ ११ ॥

निमन्त्रणं तत् स्वीकृत्य साभारं तिलको गतः।
यथाकाले यथास्थानं संद्रष्टुं तं निमन्त्रकम्॥ १२॥

प्रादर्शयत् स्वसौहार्दं मांटेगस्तिलकं प्रति।
स्वस्तिक्षेमादिप्रश्नानामादौ विनिमयोऽभवत्॥ १३॥

कृत्वा चर्चां समस्यानां पप्रच्छ तिलकं प्रति।
प्रश्नं व्यक्तिगतं तत्र सहसैवानपेक्षितम्॥ १४॥

पदस्थेन मया किंचिदस्ति चेद् भवतां मते।
कृत्यं योग्यं भारतीयजनानां च हितप्रदम्॥ १५॥

वाञ्छितं च भवद्भिर्यत् सूचना तस्य दीयताम्।
मह्यं सद्योऽथवा पश्चाद् विचारान्ते विशेषतः॥ १६॥

विचार्य तस्य प्रश्नस्य ददौ तिलक उत्तरम्।
कापि व्यक्तिगता चिन्ता न मे मनसि वर्तते॥ १७॥

तथाप्युपकृतं मन्ये प्रश्नेन भवतामहम्।
देशविघ्ननिवृत्त्यर्थं शासनस्य तु याचनाम्।
करोम्यहं तथैवैकां सूचनामधिकारिणे॥ १८॥

संमतायाः पार्लमेंटे सभासद्भिः सुमानितैः।
भूयाद् यै भारते तस्या घटनाया यथाविधि।
स्वीकृत्यै घोषणा चैका सम्राडाज्ञास्वरूपिणी॥ १९॥

भवते सूचनामन्यां तत्संबन्धे करोम्यहम्।
कारागृहे निपन्नानां बन्दिनामस्तु मोचनम्।
पंजाबे संपीडितानामादेशादधिकारिणः॥ २०॥

भूपानन्दसमारोहे भूयाद् बन्दिविमोचनम्।
सनातनी भारतेऽस्मिन् भवत्येव प्रथा शुभा॥ २१॥

मन्वादिभिर्धर्मशास्त्रकर्तृभिः सास्ति संमता।
दुःखान्तजो महानन्दः प्रविन्देत् तेन वर्त्मना॥ २२॥

गृहेषु सर्वलोकानां सम्राजो महिमा तथा ।
घटनायाः स्वागताय भूमिः संवादिनी भवेत् ॥ २३ ॥

तिलको हृद्गतं तस्मै कथयामास साग्रहम् ।
दत्तमाश्वासनं तेन तत्प्रत्युक्तशुभोदयः ॥ २४ ॥

तूर्णं प्रतस्थे सुप्रीतो गन्तुमावासमात्मनः ।
अकरोद् भारतं गन्तुं मुहूर्तस्यापि चिन्तनम् ॥ २५ ॥

यूरोपामेरिकादीनां प्रवासस्यापि योजना ।
संकल्पिता लोकमान्यैराङ्ग्लग्रासादनन्तरम् ॥ २६ ॥

दर्शिता कार्यधारेण स्वलेखे नामजोशिना ।
अशक्येति मता तेन भारतस्थितिदर्शनात् ॥ २७ ॥

परित्यक्ता योजना सा सहसा भारतं प्रति ।
गमनार्थं च चिक्षाय वृत्तान्तं भारतागतम् ॥ २८ ॥

संनद्धस्त्वभवद् बालो ज्ञात्वा भव्यं विनिर्णयम् ।
पंजावस्यामृतसरे सभाया अधिवेशनम् ॥ २९ ॥

धुरीणैर्निश्चितं सर्वैर्हिन्दराष्ट्रसभास्थितैः ।
निर्बन्धेन च बन्धूनां तत्रस्थानां विशेषतः ॥ ३० ॥

तथा महारम्भमारब्धमान्दोलममलौकिकम् ।
रौलेटाक्टविरोधाय दिव्यं च क्रान्तिकारकम् ॥ ३१ ॥

उपस्थितिरवश्या मे पंजावस्थाधिवेशने ।
कर्तुं साह्यं च बन्धूनां कार्यक्रमविनिर्णये ॥ ३२ ॥

क्रियमाणस्य कार्यस्य हिन्दजागरणाय ह ।
चिन्तनीयोऽस्ति सन्मार्गः सर्वेषां हिन्दवासिनाम् ॥ ३३ ॥

विचार्यैवं कृतो मन्ये तिलकेन स्वनिश्चयः ।
प्रस्थातुमविलम्बेन मातृभूदर्शनाय वै ॥ ३४ ॥

खापर्डे च पटेलश्च तिलकस्येच्छया स्थितौ ।
घटनायाः पार्लमेंटे चर्चाकालावधावुभौ ॥ ३५ ॥

नित्यं समीक्षितुं चर्चो घटनाविषयां च तौ ।
प्रत्यहं पार्लमेंटस्य प्रेक्षकासनसंस्थितौ ॥ ३६ ॥

श्रोतुं चर्चां सभासद्भिः कृतां नित्यं सभागृहे ।
साह्यं दातुं च मित्राणां पार्लमेंटसभासदाम् ॥ ३७ ॥

त्रयोदश स मासान् वै तिलको लंदनेऽवसत् ।
नैकं चापि स्थलं तत्र प्रेक्षणीयं ददर्श सः ॥ ३८ ॥

गतो ग्रन्थान्वेषणार्थं इंडियापुस्तकालयम् ।
संरक्षितः शासनेन संग्रहस्तत्र दुर्लभः ॥ ३९ ॥

पुस्तकानां च पत्राणां लेखानां च विशेषतः ।
हिन्द्वाङ्ग्लशासकोशेष्वयुक्तानां विदुषां मते ॥ ४० ॥

वालेसस्तिलकस्यासीत् लेखनस्य प्रशंसकः ।
दृढोऽभवत् स्नेहभावो दर्शनाच्च मिथो मुहुः ॥ ४१ ॥

तिलकस्य महत् स्थानं विद्याभ्यासतपस्विषु ।
परिचेतुं कृतस्तेन वालेसेन परिश्रमः ।
दुराग्रहिभ्यः शिष्टेभ्य आङ्ग्लदेशनिवासिषु ॥ ४२ ॥

वेवचर्नार्डशादीनां लोकमान्योऽगमत् गृहम् ।
विख्यातानां लेखकानां संमानार्थं च मुख्यतः ॥ ४३ ॥

स्काटलंदेऽगमद् बालः परेखादिसमन्वितः ।
ग्लासगोनगरे जातं भव्यं तत्स्वागतं तदा ॥ ४४ ॥

अन्येष्वपि प्रधानेषु स्थानेषु स निमन्त्रितः ।
व्याख्यानार्थं गतस्तत्र स्कॉचबन्धुभिरादृतः ॥ ४५ ॥

श्रुत्वा तस्य वचो लोका अभवन् विस्मयान्विताः ।
तर्कशुद्धविचाराणां संप्रसारं करोति यः ॥ ४६ ॥

तस्य पीडा भारतीयशासनेन कथं कृता ।
वाक्स्वातन्त्र्याधिकारः किं विलुप्तो भारतेऽभवत् ॥ ४७ ॥

तिलकोऽकथयत् तेभ्योऽत्यन्तासंदिग्धया गिरा ।
नाहं शत्रुश्चाङ्ग्लभूमेः किंवा तत्र निवासिनाम् ॥ ४८ ॥

उत मित्रमहं तेषां दोषाणां दर्शकं खलु ।
हिन्दुदेशे पदस्थानां तत्त्वभ्रष्टाधिकारिणाम् ॥ ४९ ॥

पृथिव्यां मे समा बुद्धिः सप्तद्वीपनिवासिषु ।
दृष्टिश्च बन्धुभावस्य निर्मितेष्वीश्वरेण वै ॥ ५० ॥

प्रख्याप्यैवं सुहृद्भावं तिलको लंदनं प्रति ।
आगतो मित्रसंयुक्तो गृहप्रस्थानवाञ्छया ॥ ५१ ॥

वेल्सप्रदेशयात्रार्थं मण्डलस्यगता जनाः ।
कृतमेवादरातिथ्यं तेषां वेल्सीयबन्धुभिः ॥ ५२ ॥

ऋग्वेदस्वाध्यायवेदविषये लिखितं च यत् ।
ए. एच्. सैसेन विदुषा कृतं तस्य समीक्षणम् ॥ ५३ ॥

विषयस्य विशेषज्ञः प्रसिद्धः सर्वभूतले ।
विद्याभ्यासङ्गिनां वर्गे यूरोपामेरिकास्वपि ॥ ५४ ॥

असीरियाज्ञानपूर्त्यै भूते तस्य विशेषतः ।
अयद्यं किल तत्रत्येष्टिकालेखनवाचनम् ॥ ५५ ॥

टामसाख्यं सुविख्यातं पण्डितं लंदनस्थितम् ।
ददर्श तिलकः प्रेम्णा गत्वा तस्य गृहं प्रति ॥ ५६ ॥

विद्याविनयसंपन्नविदुषो गेहिनी च या ।
दैन्यस्थितिर्मूर्तिमती न्यवसत् तद्गृहे सुखम् ॥ ५७ ॥

जाताबुभौ निमग्नौ तौ भाषणे शास्त्रकोविदौ ।
तत्पानार्थं चहापेयं गृहीत्वोपस्थिता तदा ॥ ५८ ॥

त्रेहिनी संनिधाने चहापात्रकरा स्थिता ।
ापणान्ते च तत् पेयं संप्रदातुं यथाविधि ॥ ५९ ॥

ातं तया शीघ्रमेव चिरकालो गतः खलु ।
तयोर्भाषणमर्यादां कोऽनुज्ञातुं क्षमो भवेत् ॥ ६० ॥

विचार्यैवं चहापात्रं निहितं पुस्तकोपरि ।
तयोर्विवक्त्रोर्मध्ये द्रष्टव्यमिति हेतुना ॥ ६१ ॥

विद्वत्संवादमोदस्तु ब्रह्मानन्दसहोदरः ।
इति साहित्यशास्त्रज्ञैः स्वशास्त्रेषु निवेदितम् ॥ ६२ ॥

ब्रह्मानन्दनिमग्नानां लुप्तप्रायात्मभावना ।
समुत्पत्तिरसंभाव्या तदा तस्याः कलेवरे ॥ ६३ ॥

तुकारामो भक्तवर्योऽभङ्गगीते सुधोपमे ।
उवाच तद् मया प्रोक्तमिह संस्कृतभाषया ॥ ६४ ॥

अन्नपानादिभोगानां निरिच्छत्वं गते नरि ।
उदयः स्याद्मन्तरायैर्वादस्यान्ते क्रमेण वा ॥ ६५ ॥

चित्तैकाग्र्येण विन्दुस्यं चरूपलं तन्मनो भवेत् ।
तत्क्षणं सहसायाति जडदेहपुनःस्मृतिः ॥ ६६ ॥

लुप्तमेव तदैकाग्र्यं चहापात्रस्य दर्शनात् ।
पीत्वा यालः स्वादु पेयं प्रयाणासमयावत ॥ ६७ ॥

समव्यसनशीलाय तिलकाख्यमताय च ।
एतातिथ्यगृहिण्यै च धन्यवादान् विनीर्य ह ॥ ६८ ॥

प्रेम्णा हस्तौ दोलयित्वा दम्पत्योस्तिलकोऽवदत् ।
भवान् मुनिश्लाघ्यमस्यः पत्नी साध्वी पतिव्रता ॥ ६९ ॥

उभौ सहर्षं चक्रतुस्तिलकाय नमस्कृतिम् ।
निर्यातस्तद्गृहाद् यालः कृत्वा तदभिवादनम् ॥ ७० ॥

तिलकः स्वगृहं यात्वा घटितं दासगृहे ।
कथयामास मित्रेभ्यो जिज्ञासुभ्यस्तदात्मनः ॥ ७१ ॥

यस्य स्वातिथ्यशीलत्वात् सहयोगाच्च सर्वदा ।
बालेन नानुभूतं वै काठिन्यं परिपालने ।
आङ्ग्लाचारविभिन्नाया भारताचारपद्धतेः ॥ ७२ ॥

स्नानपानादिनिद्रान्तव्यापारे भारतीयता ।
रक्षिता येन सौख्याय तिलकस्य प्रयत्नतः ॥ ७३ ॥

तस्मै श्रीदीपचन्द्राय लोकमान्येन दर्शिता ।
कृतज्ञतात्मनो भूत्यै करयोर्मेलनेन ह ॥ ७४ ॥

गृहसौख्यमिह प्राप्तं मया स्वसखिभिस्तथा ।
निवासेऽस्मिन् लंदनस्थे भवतः स्वास्थ्यकारके ॥ ७५ ॥

शाश्वतक्षेमसंप्राप्त्यै श्रीकृष्णं प्रार्थयामहे ।
भवतः सकुटुम्बस्य तत्पादप्रणता वयम् ॥ ७६ ॥

पूजितस्तिलकस्तेन सकुटुम्बेन चादरात् ।
सश्रीफलमहायकामर्पयित्वा सुमस्रजम् ॥ ७७ ॥

थिआसफीधर्ममार्गस्याध्यक्षेति सुविश्रुता ।
पृथिव्याः सर्वखण्डेषु विख्याता विश्ववन्दिता ॥ ७८ ॥

हिन्दुधर्मस्य तत्त्वानां पुरस्कर्त्रीति भारते ।
पूजिता सा विशेषेण हिन्दुभिर्धर्मवृत्तिभिः ॥ ७९ ॥

मातेति वन्दिता भक्तैर्नित्यं तदनुयायिभिः ।
समाकृष्टा नरश्रेष्ठा विद्वांसो धनिकास्तथा ॥ ८० ॥

ब्रह्मविद्याप्रसारार्थं स्थापिते योगिमण्डले ।
भिन्नधर्माभ्यासवर्गे चालितेऽड्यारसंस्थिते ॥ ८१ ॥

सभोद्देशः पत्रकेऽपि यस्तुतस्तु समर्थनम् ।
मांटेगघटनायाः सा सभा कर्तुं नियोजिता ॥ ९३ ॥

संमत्यर्थं सभाया यः प्रस्तावो वै पुरस्कृतः ।
प्रारूपे वै स्पष्टमेतत् तस्य व्यक्तं हि सर्वशः ॥ ९४ ॥

अध्यक्षोऽभूत् लान्सबरी ददौ तिलक उत्तरम् ।
उपस्थितिः सभास्थाने न भवेदुचिता मम ।
तिलकं तु समायातुं विशांटा प्रार्थयत् पुनः ॥ ९५ ॥

मुख्योद्देशो विशांटायाः समाविषयकोऽभवत् ।
लोकमान्यस्य संमानः पूर्वं तद्गमनात् ततः ॥ ९६ ॥

यदि नोल्लिखितः स्यात् स पत्रके च प्रकाशिते ।
तथापि तादृशो हेतुस्तस्या इत्यनुमीयते ॥ ९७ ॥

संप्राप्ते तिलके स्थानं ददुरुत्थापनं जनाः ।
जुघुषुर्जयहिन्देति प्रदाय सुमनस्स्रजम् ॥ ९८ ॥

स्वयंनिर्णयतत्त्वं स्यादवश्यं भारतस्य वै ।
स्वीकृतिः साग्रहं तस्य तिलकेन पुरस्कृता ॥ ९९ ॥

मांटेगयोजना वन्ध्या त्याज्या चैवेति घोषितम् ।
हार्निमनूसत्वमूर्तिश्चाभावेशात् स्वस्वभाषणे ॥ १०० ॥

बालस्यागमनात् तत्र संतोषः समजायत ।
दर्शनात् तस्य सर्वेषां व्याख्यानश्रवणात् तथा ॥ १०१ ॥

दत्तं बालेन व्याख्यानं सभाध्यक्षेण संस्तुतम् ।
स्वयंनिर्णयमाहात्म्यं देव्या च प्रतिपादितम् ॥ १०२ ॥

संपादितो मित्रभावस्तिलकेनाङ्ग्लसज्जनैः ।
त्रयोदशानां मासानां निवासे लंदने निजे ॥ १०३ ॥

क्लार्कगेहे भोजनस्य समारब्धस्य वर्णनम् ।
दैनंदिन्यां गणेशस्य स्वल्पमेवापि रोचकम् ॥ १०४ ॥

गणेशो नरसिंहश्च पटेलतिलकावुभौ ।
दिवाणमाधवो मेथा सायं ते प्रस्थितास्तदा ॥ १०५ ॥

नलिकालोहमार्गेण हामस्टेडस्थलं प्रति ।
पद्भ्यामगच्छंस्तस्मात् ते क्लार्कस्य सदनं सुखम् ॥ १०६ ॥

संवृत्तं भोजनं तत्र शाकयुक्तं निरामिषम् ।
संतुष्टा अभवन् सर्वे तृप्ता आकण्ठसेवनात् ॥ १०७ ॥

तस्मै ददुर्धन्यवादानातिथ्योपकृता जनाः ।
जग्मुर्गृहं प्रशंसन्तो यजमानस्य सद्गुणान् ॥ १०८ ॥

नोव्हेंबरे दिनः षष्ठः प्रयाणाय सुनिश्चितः ।
इजिप्ताख्याभ्मसां नौका यात्राया वाहनं किल ॥ १०९ ॥

मांटेगयोजनायास्तु चर्चाया विधिमण्डले ।
समीक्षणाय साहाय्य सदस्यानां मथा किल ।
निवासो लंदनेऽवश्यः श्रीगणेशपटेलयोः ॥ ११० ॥

प्रस्थातुं भारतं शीघ्रमासन्नन्ये समुत्सुकाः ।
मन्यमाना जन्मभूमिं स्वर्गादपि गरीयसीम् ॥ १११ ॥

राष्ट्रकार्ये रतस्यापि हृदये तिलकस्य वै ।
विषयश्चिन्तनस्याभूत् केसरीपत्रमुद्रणम् ॥ ११२ ॥

मुद्राक्षराणां नूतनानां निर्माणं केसरीकृते ।
यालेन चर्चितं तेन तज्ज्ञैराङ्ग्लैश्च लंदने ॥ ११३ ॥

तदा ददृशतुर्यालं भटदेशमुखाभिधौ ।
हिन्दुस्थानसेवायाः परीक्षाभ्यासकारिणौ ।
तस्मै च तौ प्रश्नमेकं विनीतौ समपृच्छताम् ॥ ११४ ॥

इंग्लंदेऽध्येतृयुवकैः किं कर्तव्यं विशेषतः ।
वर्तते तीव्रजिज्ञासा भवता मतमुच्यताम् ॥ ११५ ॥

न राजकारणं कर्तुं प्रत्येकस्यास्ति पात्रता ।
भवद्भिः क्रियतां द्रव्यकालसामर्थ्यसद्व्ययः ॥ ११६ ॥

तेन संप्राप्तविद्याया अनुरूपं सुसंगतम् ।
व्यवसायं कर्तुमुच्चैः भवेद् योग्यं भवादृशाम् ॥ ११७ ॥

स्वराज्यं वै भारतस्य नातिदूरं मते मम ।
ज्ञानानुभूती युष्माकं देशेऽभ्युदये सदा किल ॥ ११८ ॥

राजकीयान्दोलकानां ज्ञानस्य हि भवादृशाम् ।
प्राप्त्यै तीव्रा भवेदिच्छा तत्पूर्त्यै तत्परा मतिः ॥ ११९ ॥

रक्षितव्या यथाकालं सदा तत्साह्यकारिणी ।
उपदेशोऽस्त्ययं यूनां सर्वेषां मे भवादृशाम् ॥ १२० ॥

उपदेशः सिद्धपाणेर्भविष्यत्स्य सूचना ।
संजाता हिन्ददेशस्य चाशियाफ्रिकयोरपि ॥ १२१ ॥

ख्यातम्पदस्य शुभमान्सेमंङ्गलस्य तदुचितना ।
तत्पादो व्यापका दृष्टिः पावना दूरदर्शिनी ॥ १२२ ॥

भास्टोबरद्वितीयार्धे ब्रिटिशेपार्लमभागृहे ।
संसदे विश्वपरिषद्युत्साहसमन्विता ॥ १२३ ॥

संमेलिता तदध्यक्षः क्रिफर्डो नाम पावनः ।
दीनानाथविचारैर्यं कविरिव पुरातनः ॥ १२४ ॥

सभाकृत्प्रचारेण संजाता देवतापुरी ।
लोकाः सत्यप्रिया जाता लंदनं नन्दनं दिवः ॥ १२७ ॥

यत्र स्वार्थो विलुप्तोऽभूच्च शाश्वतं क्षेमदर्शनम् ।
वैषम्यं लुप्तमेवासीदुदिते प्रेमभास्करे ॥ १२८ ॥

रामराज्यं संप्रवृत्तं साधुसंमेलनात् तदा ।
आत्मौपम्यप्रत्ययोऽभूल्ल् लंदने सर्वतोदिशम् ॥ १२९ ॥

लाइड्जॉर्जं संनिमन्त्र्य साम्राज्यस्य प्रचारकम् ।
तद्गाम्भीर्यं गतं चास्तं जातं तन्नाटकोपमम् ॥ १३० ॥

साम्राज्योन्मादमत्तानां स्थानं तत्र विसंगतम् ।
साम्यस्य हेतुना प्रौढैः संचालितसभास्थिति ॥ १३१ ॥

अहिंस्रमृगयूथानां मध्ये केचन हिंस्रकाः ।
आयाताः श्वापदा एकस्तेषु जान्सननामकः ॥ १३२ ॥

अभूद् व्याख्यानविषयो बन्धुत्वस्य विशेषतः ।
श्वेताश्वेतशरीराणां संबन्धस्य निदर्शनम् ॥ १३३ ॥

संबन्धे प्रोक्तवांस्तेषां स्पष्टैः शब्दैः स जान्सनः ।
सम्यक् सनातनी दृष्टा क्षुद्रनीचत्वभावना ॥ १३४ ॥

यत्नेनैव परीहार्या विज्ञायैवेति संमतिः ।
देयेति साग्रहं तेन प्रार्थिताश्च सभासदः ॥ १३५ ॥

खण्डितं तन्मतं तत्र विपिनेन स्वभाषणे ।
तद्वक्तृत्वप्रभावेण लोकाः सर्वे समागताः ॥ १३६ ॥

सुप्रसन्नाश्च मुग्धास्तैस्तालिकावाद्नैर्मुहुः ।
स्वसंमतिर्भाषणस्य तत्त्वस्यापि प्रदर्शिता ॥ १३७ ॥

भाषणान्ते समायाता हस्तान्दोलनयाञ्छया ।
बहवः सज्जनास्तत्र तथैव च कुलस्त्रियः ॥ १३८ ॥

एकेनैवं भाषणेन विज्ञाताभूत् समासदाम् ।
राष्ट्रसंसद्मण्डलस्य विद्याविनयपात्रता ॥ १३९ ॥

पुरुषे शीलसंपन्ने बालस्य परमादरः ।
धर्मपक्षविभिन्नत्वाद् नाक्षेपस्तस्य मानसे ॥ १४० ॥

संमान्योचितसंमानो भवत्यतिथिपूजनम् ।
प्रतिबध्नाति हि श्रेयः पूज्यपूजाव्यतिक्रमः ॥ १४१ ॥

उक्तेः कविगुरोरस्याः कृतं च परिपालनम् ।
निवासे वा प्रवासे वा श्रद्धया तिलकेन वै ॥ १४२ ॥

तदातिथ्यचिकीर्षाया वर्णयेऽहं कथां शुभाम् ।
स्वल्पां रहस्ययुक्तां च तिलके लंदने सति ॥ १४३ ॥

मेदिनाङ्के पञ्चविंशे नृसिंहश्चागमिष्यति ।
शिष्टैः सार्कं मण्डलस्य प्रेषितस्य सभाजनैः ॥ १४४ ॥

तिलकेन ज्ञातमेव श्रीनिवासः प्रवासिषु ।
नाविन्दत् स्वनिवासाय स्थानं कस्मिन्नपि स्थले ॥ १४५ ॥

योजनायास्तु पूर्वस्या अभावाच्च शास्त्रिणो भवेत् ।
व्यग्रता मानसी गुर्व्यवतीर्णस्निरथाद् बहिः ॥ १४६ ॥

प्राङ्गणे स्थानकस्यैव तदर्थे तेन निश्चितम् ।
नरसिंहाय संदेशप्रेषणं चैव तत्क्षणम् ॥ १४७ ॥

आनीतव्यः श्रीनिवासो मम स्थाने त्वया सह ।
कर्तव्या विनतिस्तस्य मदर्थं स्थानके खलु ॥ १४८ ॥

संदेशः स्थानके दत्तस्तस्मै वै नामजोशिना ।
लंदने यः सुविख्यातस्तिलकन्यवितरक्षकः ॥ १४९ ॥

प्रदत्तं श्रीनिवासेन ज्ञातं नैव यदुत्तरम् ।
निवासं न समायातस्तिलकस्येति गम्यते ॥ १५० ॥

तदा नोव्हेंबरे मासे षष्ठेऽहनि विनिश्चिते ।
गृहात् प्रतस्थे तिलको लिव्हर्पुल्स्थानकं प्रति ॥ १५१ ॥

टिल्बरीनामकं सिन्धुतीरस्थं स्थानकं किल ।
नौकाधिरोहणं मुख्यं तत्रैवासीत् प्रवासिनाम् ॥ १५२ ॥

दैनंदिन्यां गणेशेन लिखितं स्वल्पवर्णनम् ।
लिव्हर्पुल्स्थानके तस्य स्वागतस्य मनोरमम् ॥ १५३ ॥

वासुदेवो नामजोशी वेल्करो डॉक्टरः सखा ।
वैळ्करो नरसिंहाख्यः केसरीपत्रलेखकः ॥ १५४ ॥

चत्वारोऽमी प्रस्थिता वै बालस्य सहचारिणः ।
मातृभूमिं गन्तुकामा नौकयेजिप्तसंज्ञया ॥ १५५ ॥

स्थानकप्राङ्गणे दीर्घे संमुखेऽग्निरथस्य च ।
आगताः सकला हिन्दवान्धवा लंदनस्थिताः ॥ १५६ ॥

संद्रष्टुं च नमस्कर्तुं पूजितुं च सुमैस्तथा ।
लोकमान्यं हिन्दभालतिलकं ह्यतिशोभनम् ॥ १५७ ॥

'जयोऽस्तु ते' घोषणाभिस्तदाकाशं निनादितम् ।
रक्तवर्णशिरस्त्राणभूषितस्य सुदर्शनात् ॥ १५८ ॥

संप्रहृष्टैर्जनैः सर्वैस्तालिकावादनैरपि ।
गर्जनोत्थो द्विगुणितो निनादः श्रुतिमोहकः ॥ १५९ ॥

फलपुष्पस्वादुखाद्यपेयादीनां समर्पणम् ।
कृतं तस्मा आङ्ग्लहिन्दकुलस्त्रीभिर्महादरात् ॥ १६० ॥

बालाय वन्दनं कर्तुं स्पर्धा स्त्रीणां तथा नृणाम् ।
जाता ननु स्थानकस्य प्राङ्गणे मोददायिनी ॥ १६१ ॥

विझार्डश्च पटेलश्च पलार्कोऽन्ये सुहृदस्तथा ।
लोकमान्यप्रणामार्थं संप्राप्ताः स्थानकं तदा ॥ १६२ ॥

नानासुवेषभूषाभिर्भूषितैर्हिन्दवासिभिः ।
शोभा कृता स्थानकस्य नयनानन्ददायिनी ॥ १६३ ॥

अग्नियानप्रयाणार्थं तदा जातो गुरुध्वनिः ।
तिलको वन्दनं चक्रे लंदनाय कृताञ्जलिः ॥ १६४ ॥

आगम्यतां दर्शनाय भवद्भिः पुनरेव च ।
उक्त्वा पुनः सप्रणामं गताः सर्वे जना गृहम् ॥ १६५ ॥

भ्रमति परममुच्चैरन्तरिक्षे खगो यो
विहरति ससुखं सः प्राप्तकार्येऽतिमग्नः ।
कतिपयसमयेनावासवृक्षस्थनीडं
त्वरितगमनबुद्धिः स्थानमुच्चं जहाति ॥ १६६ ॥

इति माधवविरचिते श्रीतिलकयशोऽर्णवे स्वयंनिर्णयप्रचारनामा
सप्तसप्ततितमस्तरङ्गः ।

# अष्टसप्ततितमस्तरङ्गः

इच्छति स्वगृहं नेतुं सुदूरं पुरुषो गतः।
मानावस्तूनि रम्याणि स्वदेशेऽसुलभानि च ॥ १ ॥

क्रीडनान्यक्षिहारीणि बालकार्थे विशेषतः।
कुटुम्बस्योपयोगार्थं विविधैर्हेतुभिस्तथा ॥ २ ॥

कुटुम्बं लोकमान्यस्य जम्बुद्वीपं पुरातनम्।
हिन्दुस्थानमिति ख्यातं भूगोले सकलेऽधुना ॥ ३ ॥

सर्वे निवासिनस्तत्र तस्यासन् ये कुटुम्बिनः।
शिशवः स्वल्पकाले ये लोकसेवायते स्थिताः ॥ ४ ॥

देशोद्धारोपयोगार्थमिंग्लंदे तेन यत् कृतम्।
सर्वं तद्देशबन्धूनां हितमोदसुखाय च ॥ ५ ॥

आनीतं यत् कौतुकेन तस्य स्वल्पनिदर्शनम्।
भवेत् समुचितं मन्ये लोकाचारानुसारतः ॥ ६ ॥

भवेत् प्रबलजिज्ञासा शिशूनां च कुटुम्बिनाम्।
द्रष्टुं वस्तूनि नूतनानि श्रीमतां वस्तुसंचयात् ॥ ७ ॥

स्वर्यनिर्णयपुष्ट्यर्थं लिखितं पत्रकं खलु।
पारीससंसदध्यक्षं क्लेमेंसं विश्वविश्रुतम् ॥ ८ ॥

इंग्लंदे पक्षकार्यस्य कृते तेन विलोकनम्।
भारतस्योपयोगार्थं संधिश्च श्रमिपक्षिभिः ॥ ९ ॥

तेषामाश्वासनं मुख्यं पारतन्त्र्यविमुक्तये।
यत्नशीलो भवेद् नित्यं नः पक्षो भारतस्य च ॥ १० ॥

अधिकारे समारूढे श्रमिपक्षेऽधिशासने।
स्वातन्त्र्यस्य स्थापनाय कुर्म एव महोद्यमम् ॥ ११ ॥

डाक्टरो वेल्करोऽवोचल् लंदने तिलकं तदा ।
दृष्ट्वा वै दृढसंबन्धं स्थापितं श्रमिपक्षिभिः ॥ १२ ॥

भारते न स्थापितोऽस्ति संबन्धः श्रमिपक्षिभिः ।
तत्र कार्यक्रमेऽस्माकं तन्महत्त्वं न विद्यते ॥ १३ ॥

तिलकेन स्वस्पष्टशब्दैर्मीमांसा स्वोत्तरे कृता ।
यूरोपस्थान्दोलनस्य तत्त्वानां श्रमिपक्षिणाम् ॥ १४ ॥

वर्गद्वेषोऽथवा वर्गकलहो मे न रोचते ।
भारते श्रमिपक्षस्य योजनायां विशेषतः ॥ १५ ॥

घटना श्रमिपक्षस्य विचारेण परिस्थितेः ।
कर्तव्या प्रथमं तस्य नेतृभी राष्ट्रचिन्तकैः ॥ १६ ॥

धनिकश्रमिसंबन्धोऽवश्यः सौहार्दचोदितः ।
अन्यथा तत्प्रयोगस्य प्रगतिः कुण्ठिता भवेत् ॥ १७ ॥

सन्ति बालदशायां च भारते यान्त्रिकोद्यमाः ।
स्पर्धायां सर्वराष्ट्राणां बाधकः कलहस्तयोः ॥ १८ ॥

कार्ये राष्ट्रसमायाश्च विचारः श्रमिणां भवेत् ।
योग्योऽस्तावितियहं मन्ये राष्ट्रदृष्ट्या विशेषतः ॥ १९ ॥

सहानुभूतिरौदार्यं बन्धुभावस्य वर्धनम् ।
नीचोच्चभावनाभावः श्लाघ्यः श्रेयस्करस्तयोः ॥ २० ॥

निर्माणे श्रमिपक्षस्य दृष्टिस्तद्धितकारिणी ।
स्वराष्ट्रस्योपयुक्ता च मानवध्येयदर्शिनी ॥ २१ ॥

तिलकस्याङ्ग्लग्रामोऽभूत् सभाव्याख्यानसंकुलः ।
चर्चाव्याप्तोऽभ्यागतानां पूर्णः प्रश्नोत्तरैस्तथा ॥ २२ ॥

तिलकः प्रलयग्रस्तोऽभ्यागतप्रश्नधारिभिः ।
योगी यथा [illegible] ॥ २३ ॥

पक्षदानवधानेन पदभ्रंशात् पपात सः ।
संपीडितस्तस्य गुल्फो न क्षमो गमने ततः ॥ २४ ॥

प्रश्नानामुत्तरं दातुमेकोपायस्य सूचना ।
कृता तेनाङ्ग्लमित्रेभ्यस्तद्विचाराय मुख्यतः ॥ २५ ॥

लिखाम्यहं भाषणं स्वं पठनार्थं सभास्थले ।
वाचितव्यं सुहृद्भिस्तत् श्रोतॄणां तोषणाय च ॥ २६ ॥

निराशा तु श्रोतृवर्गे संभवेदनुपस्थितेः ।
निराशापरिहारायानीयतासौ सभास्थलम् ॥ २७ ॥

स्थित्वा निजासने बालो व्याख्यानानि ददौ ततः ।
समुत्पन्नोऽतिसंतोषः श्रोतॄणां बालदर्शनात् ॥ २८ ॥

स्वपत्रे तिलको धुण्डि कथयामास निग्रही ।
व्याधिना पीडितः पादो न मे वायुश्चिशयत्वयः ॥ २९ ॥

पाठकानां रञ्जनाय बोधाय च प्रचीम्यहम् ।
कार्यस्य लोकमान्यस्य प्रशस्ति सज्जनैः कृताम् ॥ ३० ॥

आङ्ग्लैः कैश्चित् तथा हिन्दबन्धुभिर्लंदनस्थितैः ।
सुविख्यातैर्हिन्ददेशे देशभक्तिपरायणैः ॥ ३१ ॥

निहालसिंगसंज्ञस्य प्रशस्तिर्दीयते मया ।
इंग्लंदे मान्यतां प्राप्तो वार्ताहरजनेषु यः ॥ ३२ ॥

दशमासेष्वविश्रान्तं निवासेऽतिपरिश्रमः ।
बालेन कृत इंग्लंदे स्वदेशहितबुद्धिना ॥ ३३ ॥

आख्यातुं न मतं भिन्नं शक्नोत्येकोऽपि सज्जनः ।
विरोधकानां पक्षेऽपि विषयेऽस्मिन् समीक्षकः ॥ ३४ ॥

बालप्रयत्नसातत्यं धैर्यं स्थिरमतिस्तथा ।
संकटेषु गुणा एते परमादरकारकाः ॥ ३५ ॥

कोकिला वर्णयामास काव्यचूतशिरःस्थिता ।
हृदयस्पर्शिभिः शब्दैर्विश्वख्याता सरोजिनी ॥ ३६ ॥

दृष्टमेकाकिनं मार्गे तिलकं पादचारिणम् ।
तिरस्कृतं शासनेन जराग्रस्तमुपेक्षितम् ॥ ३७ ॥

धार्ताहरैर्लेखकैश्च निन्दितं गौरवर्णिभिः ।
सेवानिवृत्तभृत्यैश्च हिन्दभूमेरिहागतैः ॥ ३८ ॥

पूजितं हृदये नित्यं भारते कोटिकोटिभिः ।
जनैरुद्धारकं देवं स्वर्गाद् भूमिमुपागतम् ॥ ३९ ॥

दूता अल्पप्रदेशानां नृपाला ब्रिटनाङ्किताः ।
अनामिकास्तथान्येऽपि लंदने सत्कृता भृशम् ॥ ४० ॥

समारम्भैर्भोजनैश्च श्रेष्ठा अतिथिसत्तमाः ।
मिष्टान्नैमोदकैर्मद्यैस्तर्पिता लंदने सदा ॥ ४१ ॥

भ्रमन्ति राजमार्गेषु सुस्थिता भव्यवाहने ।
वेगेन महता नित्यं दर्शयन्तः स्वगौरवम् ॥ ४२ ॥

आङ्ग्लो देशाभिमानी सन् मेने तमपराधिनम् ।
तिलकं भारतश्रेष्ठं हिन्दस्वातन्त्र्यकाङ्क्षिणम् ॥ ४३ ॥

निहितं पातके तस्मिन् बीजं स्वायत्ततातरोः ।
आङ्ग्लानां दास्यपाशेभ्यो हिन्दभूमोचनस्य च ॥ ४४ ॥

गीतान्ते कोकिलायाश्च वन्देऽहं मातरं स्वनः ।
अनदद् हृदयाकाशे लंदनस्येति शुश्रुम ॥ ४५ ॥

वेजवुडः फर्नलोपाधिर्दर्शयामास भावनाम् ।
संपदयंस्तिलकं श्रेष्ठं हिन्दप्रथमदर्शने ॥ ४६ ॥

पूर्वं परिचयो जातस्तिलकेन यदा मम ।
प्राप्ता मे नूतना दृष्टिः संद्रष्टुं भारतं ततः ॥ ४७ ॥

सत्यमूर्तिर्देशभक्तस्तीव्रो दक्षिणभारते ।
निर्भयोऽभ्यासशीलश्च वाक्पटुर्लेखकोत्तमः ॥ ६० ॥

इंग्लंदे तेन दत्तानि भाषणानि सभासु च ।
हिन्दस्थित्याकाङ्क्षयोर्वै ज्ञानं दातुं जनाय ह ॥ ६१ ॥

उपस्थितस्तदा तस्मिन्विजिप्तजलवाहने ।
एकदा तिलकं प्राह सत्यमूर्तिः कृताञ्जलिः ॥ ६२ ॥

भवतो भाषणं श्रोतुमिच्छन्ति सहयात्रिणः ।
विषयः स्याद् ध्रुवस्थानदर्शनं वेदवाङ्मये ॥ ६३ ॥

सानन्दं तिलकस्तस्मै ददौ संमतिमात्मनः ।
नौकामध्येऽभवत् तस्य व्याख्यानं श्रवणप्रियम् ॥ ६४ ॥

याताः श्रोतुं समस्तास्तद्विजिप्तस्थप्रवासिनः ।
प्राचार्यस्तेषु मेकेंझिर्विल्सनविद्यालयाधिपः ॥ ६५ ॥

उवाचासौ सत्यमूर्तिं सर्वे प्रमुदिता वयम् ।
विस्मितास्तिलकस्याद्य व्यासङ्गमवलोक्य च ॥ ६६ ॥

तिलकस्याद्भुता बुद्धिः शक्तिराश्चर्यकारिणी ।
स्मृतेश्च तेन वाक्यानि चोद्धृतानि ॥ लीलया ॥ ६७ ॥

विना साह्यं टिप्पणीनां ग्रन्थानां च सभास्थले ।
तस्य बुद्धेः कार्यकेन्द्रं संजातं राजकारणम् ॥ ६८ ॥

सत्यमूर्तिस्तत्प्रवासे पप्रच्छ तिलकं किल ।
अन्येद्युः संशयग्रस्तो नौकायां सहयात्रिणम् ॥ ६९ ॥

आङ्ग्लदेशं वयं सर्वे जलयानेन सागरम् ।
संतीर्य च गताश्चकुर्वासं संवत्सरावधिम् ॥ ७० ॥

उल्लङ्घितैव मर्यादा शास्त्रस्येति मतिर्मम ।
प्रायश्चित्तं विनास्माकं पाङ्क्तता संभवेत् कथम् ॥ ७१ ॥

प्रतिपन्ने संकटेऽस्मिन् किं कर्तव्यं प्रवासिभिः ।
उपदेशोऽत्रभवतः प्रमाणं मन्यते मया ॥ ७२ ॥

गमने देशकार्यार्थे प्रायश्चित्तस्य संभवः ।
नास्त्येव तत्त्वतः कश्चित् प्रायश्चित्तविदां मते ॥ ७३ ॥

प्रायश्चित्तं न कार्यस्य राष्ट्रहेतोः कृतस्य ह ।
स्वार्थहेतोः कृतं कार्यं प्रायश्चित्ताय कल्पते ॥ ७४ ॥

श्रुत्वोत्तरं समाधानं दर्शितं सत्यमूर्तिना ।
मयाप्तं जन्मसाफल्यं नित्यं तिलकदर्शनात् ॥ ७५ ॥

अहो एषो यालो मुकुटमणिरेवाक्षिसुखदः
शिरस्थो हिन्दस्याप्रतिहतगतिर्यस्य सुमतिः ।
मतेर्यस्याभूद् वै जटिलपदवेदस्य सुगम-
स्तथार्थो गीताया जनकरगतस्यामलकवत् ॥ ७६ ॥

इति माधवविरचिते श्रीतिलकयशोऽर्णवे समागमकृतलोकमान्यप्रशस्तिनामा
अष्टसप्ततितमस्तरङ्गः ।

## एकोनाशीतितमस्तरङ्गः

नौकेजिप्ताभिधा सप्तविंशे नोव्हेंबरे दिने ।
सुप्रभाते संप्रविष्टा मोहमय्यम्बुधौ स्थिता ॥ १ ॥

अपराह्णे नायकस्तां नौकागारं निनाय च ।
स्थिरीकर्तुं तदा तत्र मज्जयामास लाङ्गलम् ॥ २ ॥

लोकमान्यस्वागतार्थं प्राप्तानां हिन्दवासिनाम् ।
भारतद्वारमारभ्य समूहः प्रसृतोऽभवत् ॥ ३ ॥

पार्श्वयोरुभयोस्तस्य प्रचण्डो लोकसागरः ।
बालस्त्रीपुरुषैर्व्याप्ता मुम्बानगरभूमिका ॥ ४ ॥

क्रीडास्थाने न चोद्याने रिक्ता गव्यूतिसंमिता ।
निमग्ने मुम्बईद्वीपं सकलं लोकसागरे ॥ ५ ॥

नयनाभ्यामद्भुतोऽभूत् संगमोऽब्धिद्वयस्य च ।
वारिधिर्नीलवर्णश्च चित्रवर्णो जनाम्बुधिः ॥ ६ ॥

सप्तवर्णकराणां च छत्रमर्ककरैर्धृतम् ।
रमणीयो लोभनीयः संजातो वर्णसंकरः ॥ ७ ॥

तिलकोऽतिप्रयासेन नौकाया वाहनं प्रति ।
नीतः स्थितं महाद्वारसंमुखं सेवकैस्तदा ॥ ८ ॥

अज्ञातपार्श्वमार्गेण प्रौढं तद्वाहनं ततः ।
सुप्रसिद्धं तन्निवासं सरदारगृहस्थितम् ॥ ९ ॥

तिलकोऽपि जनैर्दृष्टः संतिष्ठन् लोकसंमुखः ।
स्वकक्षाया बहिःस्थाने प्रह्वासात्ययेऽकैवत् ॥ १० ॥

स्वीकृत्य वन्दनं तेषां निवासं प्राविशत् पुनः ।
आशिषस्तिलको दत्त्वा वेत्रासनमुपाविशत् ॥ ११ ॥

महाद्वारे स्वागतस्य दुःशक्यत्वाद् विनिश्चितम् ।
शांतारामनिवासस्य संमुखं विस्तृताङ्गनम् ॥ १२ ॥

यथासंख्यप्रेक्षकाणां समावेशो भवेत् सुखम् ।
सायं संमिलिता तत्र मुम्बापुर्या विराट् सभा ॥ १३ ॥

बापटिस्टस्तदध्यक्षो मानपत्रस्य वाचनम् ।
तिलकस्यागतं कर्तुं कृतं गङ्गाधरेण च ॥ १४ ॥

दावरे वर्तमानेन संघेनापि समर्पितम् ।
तथात्मनो मानपत्रमागतातिथये तदा ॥ १५ ॥

एकस्मिन् भाषणे तत्र ददौ तिलक उत्तरम् ।
प्रथमं दर्शयामास लोकमान्यः कृतज्ञताम् ॥ १६ ॥

हिन्दबन्धुषु सर्वेषु येऽभवन् सहचारिणः ।
आङ्ग्लदेशस्थकार्यार्थं भारतोन्नतिहेतुना ॥ १७ ॥

अलौकिकप्रयत्नार्थमध्यक्षस्य विशेषतः ।
संबन्धस्य स्थापनार्थं श्रमिपक्षस्य नेतृभिः ॥ १८ ॥

योजना सा यद्यपूर्णा मांटेगेन पुरस्कृता ।
आश्वासिता वयं सर्वे श्रमिपक्षधुरंधरैः ॥ १९ ॥

भारतध्येयपूर्त्यर्थं भविता योजनान्तरम् ।
उचितेऽवसरे प्राप्ते पार्लमेंटसभागृहे ॥ २० ॥

प्रवर्तन्तां न्यूनपूर्त्यै न त्यक्त्वा यत् करागतम् ।
मार्गः साधुर्मन्मतेऽयं भारतस्य हितप्रदः ॥ २१ ॥

ऐतिहासिकसिद्धान्तः संतोषो हरति श्रियम् ।
न केवलं स्वार्थनिष्ठः समष्टेरपि चेष्टदः ॥ २२ ॥

असंतोषो जगत्यस्मिन् प्रेरकोऽस्ति सदा खलु ।
विश्वख्यातप्रयत्नानां विदितं च विदां वरैः ॥ २३ ॥

सत्याग्रहो विरोधाय गान्धिनासौ प्रवर्तितः ।
तत्त्वशून्यविधेयस्य न्यायमार्गाभिमर्दिनः ॥ २४ ॥

स्वातन्त्र्योत्फुल्लभावस्य भारतस्य यथोचितः ।
आविष्कारोऽभवत् तस्मिन् परं खेदो महान् मम ॥ २५ ॥

कर्तुं तस्य सहायत्वं नेहायातुमशक्नवम् ।
प्रदातुं भाग्यचक्रायानुरूपां च नवां गतिम् ॥ २६ ॥

कृत्वा चोपक्रमं लेखं लिखितुं कालमन्दिरे ।
शासकस्यालोकनाय भित्तौ सत्यैकदर्शिना ॥ २७ ॥

सत्याग्रहप्रभावस्य दत्तं तेन निदर्शनम् ।
बुद्धिप्रचोदनं कर्तुं शासनस्य विलक्षणम् ॥ २८ ॥

ज्ञानमार्गेण गन्तव्यं विहायोद्दण्डयोजनाम् ।
कर्तव्यं साममार्गस्याविलम्बेनावलम्बनम् ॥ २९ ॥

तिलकस्य स्वागताय योजितो भोजनोत्सवः ।
स्वादुमिष्टान्नभूयिष्ठो भव्यो भारतरीतितः ॥ ३० ॥

ऊनत्रिंशे दिनाङ्के च परळे श्रमजीविभिः ।
समर्पितं मानपत्रमध्यक्षो मावजी तदा ॥ ३१ ॥

प्राह स्वे भाषणे वाल इंग्लंदश्रमजीविनाम् ।
पक्षस्य घटनादार्ढ्यात् संजातैव समुन्नतिः ॥ ३२ ॥

यन्त्रोद्योगाभिवृद्ध्यर्थं संबन्धः स्वामिसेविनोः ।
भारतीयविचारेण युक्तो मैत्रीसमन्वितः ॥ ३३ ॥

पाश्चात्येभ्यश्च संग्राह्यं रहस्यं यन्त्रतन्त्रयोः ।
स्वसमाजोन्नतिर्नित्यं देशाभ्युदयवर्त्मना ॥ ३४ ॥

अध्यक्षेणोचितैः शब्दैः कृतं तिलकगौरवम् ।
अन्तं गतो समारम्भो धन्यवादान् प्रदाय च ॥ ३५ ॥

सभास्थितप्रेक्षकाणां तदा लक्षार्धसंमिता ।
संख्यास्तीति बुधोवैकः कार्यवाहः स्वभाषणे ॥ ३६ ॥

पैसाफंडः स्वयंसेवामण्डलं चैव चक्रतुः ।
पृथक् पृथक् सभां कृत्वा तिलकस्वागतं तदा ॥ ३७ ॥

गोरक्षणसभा ख्याता ब्राह्मणानां सभा तथा ।
चक्रतुः स्वागतं तस्य गोब्राह्मणहितैषिणः ॥ ३८ ॥

सरदारगृहस्य ख्यातस्य स्वामिना योजितं तदा ।
सत्कर्तुं तिलकं बन्धं समित्राप्तेष्टभोजनम् ॥ ३९ ॥

चतुर्दिनं तदा जातः सत्कारस्तिलकस्य ह ।
दर्शितो पूज्यताभावोऽपूर्वो नगरवासिभिः ॥ ४० ॥

दिसेंबरे गतः पुण्यपुरीमस्थिरस्थितः ।
प्रातः समित्रबन्धुः स तिलकः प्रथमेऽहनि ॥ ४१ ॥

शृङ्गारितं स्थानकं तत्स्वागताय विशेषतः ।
दर्शनाकाङ्क्षिणो लोका असंख्येयाः समाययुः ॥ ४२ ॥

जयघोषं कर्तुकामा उत्सुकाः प्राङ्गणे स्थिताः ।
अयोध्यायाः प्रजा रामं वनवासाद् निवर्तिनम् ।
द्रष्टुं गता यथा पूर्वं सीतालक्ष्मणयोर्युतम् ॥ ४३ ॥

तथैवोत्कण्ठिताः सर्वेऽभवन् पुण्यपुरीजनाः ।
द्रष्टुं हृदयसम्राजं कर्तुं चैवाभिवादनम् ॥ ४४ ॥

आरूढं तिलकं दृष्ट्वा विद्युच्छकटप्रचालितम् ।
प्रदास्तवाहनं तत्र जुघुषुर्हर्षनिर्भराः ॥ ४५ ॥

वन्देऽहं मातरं गीतमुच्चैर्गगनभेदिभिः ।
गर्जनाभिस्तदा पेतुर्नभसः पुष्पवृष्टयः ॥ ४६ ॥

स्थानकात् सदनपर्यन्तं प्रत्येकं चत्वरस्थले ।
तोरणं तत्स्वागताय रम्भास्तम्भशिरःस्थितम् ॥ ४७ ॥

नानावर्णप्रसूनैश्च हरिद्रारक्तपल्लवैः ।
अलङ्कृतं तोरणं तज् जातमानन्दवर्धनम् ॥ ४८ ॥

चतुर्होरामितः कालो व्यतीतः स्वगृहं प्रति ।
यातुं वै स्थानकादन्ते तिलकः सर्वसज्जनान् ।
नमस्कृत्य प्राह तांश्च कृतज्ञो भवतामहम् ॥ ४९ ॥

अहं श्रान्तः प्रयासेन यूयमध्वपरिश्रमैः ।
भो गच्छत महाभागा विश्रमार्थं स्वकं गृहम् ॥ ५० ॥

उक्त्वैवं तिलको यातः श्रुत्वा केसरिनादवत् ।
निनादं जयघोषाणां गम्भीरं रोमहर्षणम् ॥ ५१ ॥

आद्यं दिनं द्वादशस्य मासस्यैव सुनिश्चितम् ।
पूर्वं पुणेपालिकया मानपत्रार्पणाय ह ॥ ५२ ॥

पौराणां मानपत्रस्य दिनं पूर्वं नियोजितम् ।
द्वितीयं तत् परित्यज्य नियुक्तं सप्तमं दिनम् ॥ ५३ ॥

परिश्रमात् प्रवासस्य समुत्पन्ना च विक्रिया ।
यया तिलककण्ठस्य नष्टं भाषणसौलभम् ॥ ५४ ॥

रेमार्केटे सभा सायं कृता तदधिकारिभिः ।
तथाभवत् समावेशो लोकानामतिदुष्करः ॥ ५५ ॥

पालिका नगरस्था सा वालकेळकरौ प्रति ।
दद्यादेकं मानपत्रं सत्कारायोभयोरपि ॥ ५६ ॥

लोकैर्नियुक्तौ तिलको नृसिंहश्च सभासदौ ।
तस्मात् ताभ्यां मानपत्रदानं समुचितं मतम् ॥ ५७ ॥

आपटेवंशसंभूतोऽध्यक्षोऽसौ लक्ष्मणाभिधः ।
जनार्दनस्यात्मजोऽभूत् सभापालिकयोरपि ॥ ५८ ॥

पालिकाया मानपत्रेऽध्यक्षेण पठिते तदा ।
उभाभ्यां च कृतं तत्र मानपत्रसमर्पणम् ॥ ५९ ॥

प्रदत्तमुत्तरं पश्चादेकैकेन यथाक्रमम् ।
समारम्भस्य वैशिष्ट्यं नवो जात उपक्रमः ।
समारम्भेण चानेन पालिकाक्षुण्णवर्त्मनि ॥ ६० ॥

मेनिरे मानपत्रस्य न पात्रं कोऽपि सज्जनः ।
विनाधिकारिणं पुण्यपालिकायाः समासदः ॥ ६१ ॥

तत्संमानपदप्राप्तौ तिलकः प्रथमोऽभवत् ।
अग्रेसरत्वं तस्यैव स्थापनेऽपि प्रतिकृतेः ॥ ६२ ॥

पालिकायाः समादेशाद् ब्रांझपाषाणयोः कृता ।
प्राथम्येन स्थापितासीत् तन्मूर्तिः स्फूर्तिदा सदा ॥ ६३ ॥

पालिकाया मानपत्रे कृतं तिलकवर्णनम् ।
तत्कार्यस्य स्वरूपं च सारांशेन निदर्शितम् ॥ ६४ ॥

संपादितो मित्रभावः श्रमिपक्षसमासदाम् ।
प्रशंसितं च कर्तृत्वं दूरदर्शित्वमेव च ॥ ६५ ॥

स्वयंनिर्णयतत्त्वस्य पुरस्काराय संमतिः ।
भारतीयसमस्याया यथान्यायं प्रपूर्तये ॥ ६६ ॥

विद्वत्त्वं ग्रन्थकर्तृत्वं त्रिखण्डीमान्यतां गतम् ।
समुल्लिख्य प्रार्थितं तद्दीर्घायुश्च निरामयम् ॥ ६७ ॥

अनन्तरं वर्णयेऽहं पुणेनागरिकैः कृतम् ।
लोकमान्यस्य संमानं दिसेंब्रे सप्तमे दिने ॥ ६८ ॥

तिलकागमनादूर्ध्वं पुणेनगरवासिभिः ।
सत्कारयोजनार्थं वै नियुक्ता समितिस्तदा ॥ ६९ ॥

समित्या च दिनस्थाने सत्कारार्थं विनिश्चिते ।
निमन्त्रणं वितीर्णं च सर्वेषु पुरवासिषु ॥ ७० ॥

जेधेराजगृहे जातं विचाराणां च मन्थनम् ।
निर्णयस्तस्य वै स्पष्टस्तिलकध्येयदर्शकः ॥ ७१ ॥

मानपत्रमिदं सर्वैर्दीयते पुरवासिभिः ।
समुल्लेखोऽयमाक्षिप्तस्तत्र संमिलितैर्जनैः ॥ ७२ ॥

मानपत्रं शंसकानां केवलं तिलकस्य ह ।
इति चेद् शोधनं मान्यं न विरोधप्रयोजनम् ।
नो चेद् वयं दर्शयामो विरोधं च तदर्पणे ॥ ७३ ॥

पालिकाकृतसत्कारे मानपत्रं समर्पितम् ।
सर्वनागरिकोल्लेखः कृतस्तथापि दृश्यते ।
समुदायो विशालोऽभूद् रिक्तं स्थानं विरोधिनाम् ॥ ७४ ॥

आपटेयकिलोऽध्यक्षस्तत्सभाया उपक्रमे ।
भाषणं कृतवानस्यं तथा संदेशवाचनम् ॥ ७५ ॥

भोपट्करो लक्ष्मणोऽसौ मानपत्रं पपाठ च ।
वक्तारोऽन्ये भाषणे स्वे चक्रुस्तिलकवर्णनम् ॥ ७६ ॥

ततोऽध्यक्षोऽब्रवीदुच्चैः सभास्थाने भवेद् यदि ।
जनः कोऽपि विरोधेच्छुः कर्तव्यं तेन भाषणम् ॥ ७७ ॥

श्रुत्वोद्घोषं पुरो यातो बालको ब्राह्मणेतरः ।
उवाच हि वयं कर्तुं सहभोजनमुत्सुकाः ॥ ७८ ॥

तिलकश्चेत् समायाति संमतिर्मेऽर्पणाय ह ।
मानपत्रस्य तस्मै स्यादित्युक्त्वा विरराम सः ॥ ७९ ॥

नान्यः कोऽपि च तत्पश्चाद् विरोधार्थमुपस्थितः ।
इति दृष्ट्वा मानपत्रं सभाध्यक्षो न्यवेदयत् ॥ ८० ॥

एको विरोधीत्युद्घोष्य संमत्यर्थं सभां प्रति ।
करण्डके स्थापयित्वार्पितवांस्तिलकाय सः ॥ ८१ ॥

दृष्ट्वा तद् मङ्गलं दृश्यं तालिकावादनैर्जनाः ।
संतोषं दर्शयामासुः सभायां हर्षनिर्भराः ॥ ८२ ॥

उत्तरे तिलकः प्राह धीरगम्भीरया गिरा ।
विरोधिनां भाषणानां प्रतीक्षा तु मया कृता ॥ ८३ ॥

नास्वादो वा न वा तृप्तिर्भोजने लवणं विना ।
विरोधेन विना तद्वत् समारोहोऽपि नीरसः ॥ ८४ ॥

सभामध्ये बालकस्य विरोधार्थं नियोजनम् ।
बालिशं सर्वमेतद् वै सखेदं कथयाम्यहम् ॥ ८५ ॥

परांजपे कृताक्षेपाः श्रुता एव समास्थितैः ।
प्रकाशिते च मत्पत्रे तथान्यत्र तदुत्तरम् ॥ ८६ ॥

उक्त्वा व्यक्तिगतं चैतत् प्रकृतं कथयाम्यहम् ।
यदाङ्ग्लैर्दीयतेऽस्मभ्यमस्माभिर्गृह्यतां च तत् ॥ ८७ ॥

अधर्यं ध्येयसिद्ध्यर्थमैक्यमेव च भारते ।
पूर्तये तत्पूतताया यतितव्यमहर्निशम् ॥ ८८ ॥

स्वहस्ते केवलं भाग्यमस्माकं वर्तते खलु ।
संगच्छध्वं संवदध्वमित्यन्ते बाल उक्तवान् ॥ ८९ ॥

मद्रासस्थैर्देशभक्तैस्तिलकः प्रार्थितस्ततः ।
कर्तव्योऽनुग्रहोऽस्मासु मद्रासागमनेन [illegible] ॥ ९० ॥

तामिलान्ध्रादयो युष्मद्दर्शनश्रवणोत्सुकाः ।
उत्तरापथयात्रायाः पूर्वमागमनं हितम् ॥ ९१ ॥

निमन्त्रणं च स्वीकृत्य मद्रासं तिलकोऽगमत् ।
नेतारः सर्वपक्षाणां श्रमिपक्षस्य चालकाः ।
लोकमान्यस्य सत्कृत्यै चक्रुर्हारसमर्पणम् ॥ ९२ ॥

समारोहेण वै बालो नीतस्तैः कामतगृहम् ।
सायं विराट् सभा भूता हिन्दुसंपादकोऽभवत् ॥ ९३ ॥

तदध्यक्षः सुप्रसिद्धः कस्तुरीरङ्गसंज्ञकः ।
बालेन समशीलो यश्चादृतः सर्वपक्षिभिः ॥ ९४ ॥

तत्रत्यानेकसंस्थाभिर्मानपत्रसमर्पणम्।
एकस्यामेव शालाय सभायां वै कृतं तदा ॥ ९५॥

तत्रत्यमानपत्रेषु त्वेकस्मेथ समुद्धृतम्।
ब्राह्मणेतरपक्षस्य चरिते तिलकस्य वै ॥ ९६॥

मातृभूमेर्दास्यपाशाद् मोचनाय कृतश्रमाः।
देशभक्ता भारतेऽस्मिन् जातास्तेषां त्वमग्रणीः।
मतमेतद् दर्शितं च मानपत्रप्रदायिभिः ॥ ९७॥

आङ्ग्लभूम्यां प्रयत्नेषु नेतॄणां श्रमिपक्षिणाम्।
संपादितस्य स्नेहस्य तद्वत्ताभ्यासनस्य च।
विशेषेण महत्त्वात् तैरुल्लेखः सादरं कृतः ॥ ९८॥

जातिमत्सरदोषस्य पक्षान्तर्विग्रहस्य च।
आवश्यको निरासः स्याद् राष्ट्रोद्धारस्य सिद्धये ॥ ९९॥

ऐक्यबुद्धिं विना न स्यात् स्वातन्त्र्याप्तिः कदाचन।
तस्मात् सर्वप्रयत्नेन भूयादैक्यविनिर्मितिः ॥ १००॥

स्वोत्तरे तिलकः प्राह घोषयाम्यं भवेदिदम्।
प्राप्तस्य चोपयोगः स्यादप्राप्तार्थं समुद्यमः ॥ १०१॥

पुष्पताम्बूलदानेन संघे तिलक आदृतः।
त्रिसहस्रं रूप्यकाणां दक्षिणा च समर्पिता।
स्वराज्यसंघकार्यार्थं धणिग्भिः पुरवासिभिः ॥ १०२॥

समारोहेण भव्येन तिलकः स्थानकं प्रति।
नीतो नागरिकैः सर्वैर्वाद्यगीतसमन्वितम्।
हिन्दुभिर्यवनैः ख्रिस्तैर्विप्रैश्च ब्राह्मणेतरैः ॥ १०३॥

मद्रासजनसत्कारो दर्शयामास भारते।
तीव्रैषणां स्वराज्यस्य संजातां जनमानसे ॥ १०४॥

प्रस्थितेऽग्निरथे लोका ऊचुश्च तिलकं प्रति।
आगन्तव्यं पुनर्दातुं दर्शनं पावनं स्वकम् ॥ १०५॥

मग्नां दास्यमहार्णवे स्वजननीमुद्धर्तुकामः स्वयं
चक्रे यः शतकार्धवर्षसमयं शाङ्ग्लासुरेणाहवम् ।
इंग्लंडे न्यवसच्च शिष्टसहितो मित्रत्वसंपादनं
नेतॄणां श्रमपक्षिणामतिदृढं कृत्वा स्वदेशं प्रति ॥ १०६ ॥

प्राप्तस्ते पुरुषोत्तमं सविनयं दृष्ट्वा सहर्षं जना-
श्चक्रुः स्वागतमादरेण महिता आसिन्धुशैलात्मजाः ।
शत्रूणां च गृहे यशः समुचितं संमान्य प्रोक्तं नयं
धीरं येन जयस्य तं विजयिनं पाल्तं नुमः केदारम् ॥ १०७ ॥

इति माधवविरचिते श्रीमिश्रकवलोदर्के भारतजनस्वातन्त्र्यमहाकाव्ये एकोनाशीतितमस्तरङ्गः ।

# अशीतितमस्तरङ्गः

व्यक्तं मतं भारतीयैः कैश्चिदन्यैश्च सज्जनैः ।
आङ्ग्लदेशे राष्ट्रसंसच्छिष्टानां मण्डलस्य वै ॥ १ ॥

विषये प्रेषितं तस्मिन् विह्वांटाया निवेदनम् ।
हिन्दराष्ट्रसभायाश्च सर्वेहिन्दसभासदः ॥ २ ॥

श्रीगणेशपटेलाभ्यां विपर्यासः कृतोऽभवत् ।
तथा कृतप्रचारस्य ब्रिटिशानां सभासु वै ॥ ३ ॥

गणेशविठ्ठलाचार्यौ तिलकस्य सहायकौ ।
तदुत्तरं प्रेषितं तु तिलकेन समर्पकम् ॥ ४ ॥

श्रमिपक्षसदस्यानां संजातः संभ्रमो महान् ।
किं कर्तव्यं विरोधेऽस्मिन् विह्वांटामाल्कयोः किल ॥ ५ ॥

प्रबलेच्छा विह्वांटायाः पुष्टिः स्वस्या मतस्य तैः ।
पार्लमेंटे विवादे वै कर्तव्या श्रमिपक्षिभिः ॥ ६ ॥

हिन्दराष्ट्रसभाशिष्टा भारतादागताः खलु ।
ऐच्छन् मतस्य कर्तव्यं निजस्यैवानुमोदनम् ॥ ७ ॥

आगामिन्यां तु चर्चायां श्रमिपक्षसभासदाम् ।
कर्तुं संतोषमुभयोरशक्यं सर्वथा भवेत् ॥ ८ ॥

निमन्त्रिता विचारार्थं शिष्टा ये भारतागताः ।
महासभामण्डलस्य तिलकश्चापि तैः सह ॥ ९ ॥

विह्वांटायाश्च यत् स्थानं वालो वर्णितवांस्तदा ।
स्वस्थापितस्य संघस्य प्रातिनिध्यं करोति सा ।
सभायाः कोऽपि संबन्धो न तस्या विद्यते किल ॥ १० ॥

पुरस्कृतानां सभया सूचनानां विरोधिनी ।
बद्धा सा वचनेनैव मांटेगस्य समर्थने ॥ ११ ॥

न संमतं वचस्तस्याः पटेलादिविरोधकम् ।
सभासदो मण्डलस्य सर्वे तस्या विरोधिनः ॥ १२ ॥

हिन्दोद्धारप्रचारस्य सभाकार्ये निमन्त्रणम् ।
दत्तवान् बालपक्षाय स्वयमध्यक्षलान्स्वरी ॥ १३ ॥

कृत्वा निरीक्षणं सूक्ष्मं बालोऽचिन्तयदापदम् ।
सभायां गमनात् स्वस्य मार्गे वै समुपस्थिताम् ॥ १४ ॥

दाक्षिण्येन तु बालस्य जातं स्थित्यन्तरं खलु ।
संकटस्याभवद् नाशः शेषं सर्वं व्यवस्थितम् ॥ १५ ॥

मांटेगस्य प्रयत्नस्तु भावनाद्वैधकारकः ।
महासमाधुरीणानां बिझांटायास्तथा मिथः ॥ १६ ॥

बिझांटागमने बालः स्वागताय स्वयं गतः ।
लंडनस्थानकं ह्यार्द्री तन्निवासमनन्तरम् ॥ १७ ॥

तिलकेन प्रार्थिता सा मतभेदास्तु भारते ।
ये के चापि भवेयुस्ते विस्मर्तव्या हि सर्वथा ॥ १८ ॥

इहागतैः सर्वशिष्टैर्हिन्दराष्ट्रसभामतम् ।
अङ्गीकृत्यैव कार्याणां कर्तव्याखिलयोजना ।
देव्या श्रुता प्रार्थना सा प्रातिकूल्यं न दर्शितम् ॥ १९ ॥

प्रायस्तया स्वल्पकालं वृत्तिस्तत्सदृशी तदा ।
दर्शिता किन्तु तत्कार्यमासीद् बालविरोधकम् ॥ २० ॥

अतियोग्यं नाम दत्तं यद् गणेशेन तां प्रति ।
पूतनेति कृतं तस्य तिलकेन समर्थनम् ॥ २१ ॥

हेतुरेकः पूतनायाः कृष्णस्य हननं किल ।
यद्यप्यासीत् प्रीतियुक्ता वृत्तिस्तस्याश्च बाह्यतः ।
बिझांटायास्तथोद्देशो मांटेगस्य समर्थनम् ॥ २२ ॥

मांटेगेनाश्वासितं यत् पूर्णं नैव तु तत् खलु ।
एतद् विज्ञाय कर्तव्यो हर्षाविष्कृतिसंयमः ।
अत्ययद्यं भारतीयैः सर्वैरपि विवेकिभिः ॥ २३ ॥

निर्णयोऽखिलराष्ट्रस्य हिन्दराष्ट्रसभाकृतः ।
सर्वैः कार्यः शिरोधार्यस्तत्पूर्त्यै च समुद्यमः ॥ २४ ॥

विज्ञांटा योगिनी नेत्री भारतेऽखिलभूतले ।
स्थिता श्रेष्ठपदे देवी भारतस्य हिताय सा ।
राष्ट्रीयेषु च तत्स्थाने नेमस्तेषु कदापि न ॥ २५ ॥

अतो विरोधं विस्मृत्य तथा वै पूर्वमप्रियम् ।
राष्ट्रीयैः सहकार्याय मिलितव्यमथाधुना ॥ २६ ॥

स्वकार्याभिमुखी जाताधुना राष्ट्रसभा किल ।
देव्या समुचितं तस्याः कर्तव्यं मार्गदर्शनम् ॥ २७ ॥

सहकार्यं च वाञ्छामि नोपेक्षां न तिरस्कृतिम् ।
इति वै लोकमान्येन मतं तत्र प्रदर्शितम् ॥ २८ ॥

यद्यशक्यमिदं तस्या भिन्नो मार्गस्तदावयोः ।
संयोगो वा वियोगो वा दैवेनोपात्त एव च ॥ २९ ॥

यथा काष्ठं च काष्ठं च समेयातां महोदधौ ।
समेत्य च व्यपेयातां तद्वद् भूतसमागमः ॥ ३० ॥

सुखदुःखे समे कृत्वा विज्ञायैवं सुबुद्धिना ।
संयोगे च वियोगे च गन्तव्यं निजवर्त्मना ॥ ३१ ॥

अन्यथान्यप्रियो वादस्तिलकेन कृतस्तदा ।
प्राचार्यरघुनाथेन सह नेमस्तपक्षिणा ॥ ३२ ॥

तन्निमित्तेन वालेन रघुणा निन्दिनेन वै ।
राष्ट्रविद्रोहिणी वृत्तिर्नेमस्तानां प्रदर्शिता ॥ ३३ ॥

लोकमान्येषु जीवत्सु परांजपेवृत्तिदर्शनम् ।
सत्कारसंविरोधस्य निमित्तेन कृतं मया ॥ ३४ ॥

ततः पश्चाद् महाभाग्यात् संबन्धस्त्वावयोर्दृढः ।
जातस्तदा मया दृष्टा तस्मिन्न कटुता किल ॥ ३५ ॥

विषये तिलकस्यैव तथा तत्पक्षपातिषु ।
तस्य वै दर्शनं जातं पक्षातीतमनःस्थितेः ॥ ३६ ॥

पुण्यपुर्यां यदा ह्यासमहं रुग्णदशास्थितः ।
तदैकदा तेन दत्तं व्याख्यानं तिलकोत्सवे ॥ ३७ ॥

आलोचना कृता तेन यथार्था भारतस्थितेः ।
मद्विचारा एव तेन तस्यां वै संप्रदर्शिताः ।
तदर्थं तु मया तस्य कृतमेवाभिनन्दनम् ॥ ३८ ॥

यदा लोपः पक्षदृष्टेः सत्यस्यानुभवस्तदा ।
मया कृतो नमस्कारो रघुनाथाय वै पुनः ॥ ३९ ॥

बुद्धिमान् निर्मलो विद्वान् भारतस्यैव भूषणम् ।
नमस्करोमि सर्गान्ते तं च वालं पुनः पुनः ॥ ४० ॥

कृतो वादारम्भः सकलजनभावस्य विषयो
विशांटाया लेखास्तिलकसुहृदाक्षेपतरलः ।
उभौ तार्थिग्रंदे न च भरतभूम्यां न्यवसतां
पुरः प्राप्तो नेता विपदि सुहृदां दातुमभयम् ॥ ४१ ॥

# एकाशीतितमस्तरङ्गः

स्थानमेकं वार्षिकाधिवेशनस्य तदा खलु ।
पंजाबे दमनग्रस्ते मण्डलेन सुनिश्चितम् ॥ १ ॥

पंजाबे शीखपंथस्य क्षेत्रेऽमृतसराभिधे ।
यत्र वैभवसंपन्नं वर्तते स्वर्णमन्दिरम् ॥ २ ॥

ऋषिनासत्यसमिता तारिकैव दिसेंबरे ।
उद्घोषितं मण्डलेन सभायाः प्रथमं दिनम् ॥ ३ ॥

नेहरू श्रीमोतिलालस्त्यागिश्रेष्ठो विशालधीः ।
नियोजितः सभाध्यक्षो भारतानन्दवर्धनः ॥ ४ ॥

अधिवेशनकार्यस्य सभायाश्चालनस्य च ।
वार्ता साबालवृद्धानां सर्वेषां तोषदायिनी ॥ ५ ॥

हुतात्मा स्वागताध्यक्षः श्रद्धानन्दोऽतिनिर्भयः ।
विद्वांस्तपस्वी त्यागी च दयानन्दोऽपरः स्मृतः ॥ ६ ॥

कर्णाटकमहाराष्ट्रराष्ट्रभक्ता उपस्थिताः ।
मुम्बय्यां प्रस्थिताः सर्वे बीबीसीआयवर्त्मना ॥ ७ ॥

नागपूरविदर्भस्थाः सदस्या द्विशताधिकाः ।
प्रत्येकस्यासनं पूर्वं पंजाब्याने सुरक्षितम् ॥ ८ ॥

भुसावळे स्थानमाप्तुं स्वल्पे काले तदा कथम् ।
रथान्तरे भवेच् शक्यं चिन्ताभूत् तापदायिनी ॥ ९ ॥

आश्वासिता मया सर्वे भवेद् निर्विघ्नमेव तत् ।
भुसावळस्थसन्मित्रैर्दत्तमाश्वासनं च मे ॥ १० ॥

आगमिष्यन्ति साहाय्यं सेवकाः स्थानकं प्रति ।
सर्वमेव भवेत् तत्र निर्विघ्नं सुखसंयुतम् ॥ ११ ॥

नागपूरस्थनेतारो मुख्यतस्तिलकानुगाः ।
एकेनाग्निरथेनैव राष्ट्रभक्ताः प्रतस्थिरे ॥ १२ ॥

समायाता ग्रामिणश्च स्थानकं स्थानकं प्रति ।
द्रष्टुं च स्वागतं कर्तुं पुष्पमालाफलादिभिः ॥ १३ ॥

तेषां स्वागतसौहार्दं कुलस्त्रीणां च दर्शितम् ।
नीराजनादिभिर्दीपैः स्थानकेऽत्यन्तरोचकम् ॥ १४ ॥

सहप्रवासे मित्राणां सोल्लासकृतचर्चया ।
प्रश्नानां राजनीतेर्हि स्थलकालौ च विस्मृतौ ॥ १५ ॥

भिषग् मुंजे धर्मवीरो विख्यातः सर्वभारते ।
संस्थापको मण्डलस्य नेत्ररोगचिकित्सकः ॥ १६ ॥

एतं कार्यं महत् तेन मध्यप्रान्ते स्वसंस्थया ।
चक्षुरुन्मीलितं शीघ्रं फणिपूरनिवासिनाम् ॥ १७ ॥

नेता राष्ट्रीयपक्षस्य फणिपुर्यां सुपूजितः ।
विदर्भेषु म गेहास्य गतः स्नेहात् स मान्यताम् ॥ १८ ॥

तेन ज्वलत्पक्षबीजमुप्तं कष्टेन वर्धितम् ।
न केवलं नागपुर्यां मध्यप्रान्तेऽपि सर्वथा ॥ १९ ॥

मित्रवर्यो मम श्रेष्ठोऽभ्यंकरो वाग्मिनां वरः ।
जातः सहायकस्तस्य नवपक्षविनिर्मितौ ॥ २० ॥

नागपूरस्थसंस्थाया वैशिष्ट्यं मम मनेऽभवत् ।
आङ्ग्लभाषामजानाना अप्यासन् [illegible] सभासदः ॥ २१ ॥

समाजकार्यकर्तारः स्वस्वज्ञातिधुरंधराः ।
प्रतिष्ठिताश्च लोकेषु सुवर्णाभरणादिभिः ॥ २२ ॥

वैदिकास्तत्र महान्तः कर्मनिष्ठाः सुधारकाः ।
पुरस्कारात् डाक्टरस्याभ्यंकरस्य सुदुर्गमः ॥ २३ ॥

अलोपाथीसुकुशला आयुर्वेदविशारदाः ।
गांधर्वज्ञा वादकाश्च नटा नाट्यकलोत्सुकाः ॥ २४ ॥

आङ्ग्लविद्याशास्त्रविद्यावेदविद्याविभूषिताः ।
पुणेपुरीनागपूरमुण्डवस्त्रैश्च मण्डिताः ॥ २५ ॥

अळेकरादियक्तारो लेखका ओगलेसमाः ।
नवराष्ट्रियपक्षस्य प्राचार्याश्च पुरोहिताः ॥ २६ ॥

मित्राणां पञ्चदशकमासीद् वै मण्डले तदा ।
राष्ट्रीयमण्डलं नाम्ना सुविख्यातं च भारते ॥ २७ ॥

तेषामुभोजी दीर्घायुः प्राड्विवाकश्रेष्ठयं गतः ।
नीलकण्ठाभिधानोऽसौ मध्यप्रान्ते स्वकौशलात् ॥ २८ ॥

वयोवृद्धो ज्ञानवृद्ध उदारस्तिलकानुगः ।
शुशुभे स सभामध्ये सर्वेषां च पितामहः ॥ २९ ॥

योगीव शान्तः किल शुभ्रकूर्चः
श्वेतालकालंकृतभालदेशः ।
यश्छद्मभापी प्रहसन्मुधोजी
सर्वांदृतोऽसौ हि विदर्भनेता ॥ ३० ॥

डोंगडी धुण्डिराजस्य यन्त्रविद्याप्रवीणता ।
यस्य ज्ञाता मध्यदेशे यन्त्रोद्योगादिकारिभिः ॥ ३१ ॥

परांजपेसोळकरौ डाक्टरौ प्राप्तगौरवौ ।
यक्षियाने डाक्टरस्याभूतां वै सहचारिणौ ॥ ३२ ॥

देशद्रोहीति चारम्भे फणिपुर्यां प्रदूषितः ।
मम स्नेही डाक्टरोऽयं शीलवांश्चोल्करामिधः ॥ ३३ ॥

अभूद् नारायणो वैद्यो द्वितीयः सेवकाग्रणीः ।
येनायुः क्लेशकष्टाभ्यां व्यतीतं नियतात्मना ॥ ३४ ॥

अन्येऽपि बहवस्तत्र सुहृदो वै समाययुः ।
तेषां मध्ये वर्णनीयो बलवान् राघवात्मजः ॥ ३५ ॥

नचोदितौ नागपुर्यां देशमुखाभयंकरौ ।
कौतुकेनैव पश्यन्तौ जनतोत्साहदर्शनम् ॥ ३६ ॥

निजबुद्धेस्तेजसा यो महोन्नतपदं गतः ।
नागपूरविभागेषु विधिशास्त्रविशारदः ॥ ३७ ॥

आदरातिथ्यसंपन्नः कर्मनिष्ठो द्विजोत्तमः ।
सेनापतिर्बलवन्तो विदर्भाणां प्रभाववान् ॥ ३८ ॥

उदारो भगवद्भक्तः प्रसिद्धस्तिलकानुगः ।
मुंजेभिषग्वरस्यासीत् सुहृद् यो राजकारणे ॥ ३९ ॥

धुरा तिलकपक्षस्य येनोढा स्कन्धयोः सदा ।
धैर्येण च प्रभावेण निर्भयो निरहंकृतिः ॥ ४० ॥

येन नोचारितस्त्यागः स्वपक्षार्थं स्वयंकृतः ।
देशमुखो बलवन्नामा विदर्भेषु समादृतः ॥ ४१ ॥

पतितोद्धारकार्येषु दत्तचित्तोऽभवत् स्वयम् ।
तेषु कार्येषु मन्त्रानामभवद् मार्गदर्शकः ॥ ४२ ॥

प्रारम्भादन्तपर्यन्तमहं प्रोत्साहितोऽभवम् ।
तेन मार्गोऽभवद् मे च सुलभो राजकारणे ॥ ४३ ॥

वरदाधामणग्रामवह्नेरास्थानकादिषु ।
विदर्भस्था राष्ट्रभक्ताः प्राप्तास्तेन रथेन ह ॥ ४४ ॥

अकोलानांदुरामल्कापुरादिस्थानकेषु वै ।
उपायनान्यर्पितानि नेतॄणामागतैर्जनैः ॥ ४५ ॥

तदुल्हासो यैश्च दृष्टस्तेषां नष्टं हि कल्मषम् ।
भावे स्वाधीनताप्रेम्णो लोकमानसवर्तिनः ॥ ४६ ॥

बोधितं यत्सभामध्ये नेतृभिः प्रौढभाषया ।
प्रतिसादो जनैर्दत्तः कृतिभिः स्थानकागतैः ॥ ४७ ॥

तामने गोखले भाऊ दुराणी चामरावती-
वासिनस्ते समायाताः पंजाबाभिमुखास्तदा ॥ ४८ ॥

यथा स्तम्भः स्थितो मामा जोगळेकरकुलोत्तमः ।
अकोलास्थानकं प्राप्तः स्वसुहृज्जनसंयुतः ॥ ४९ ॥

व्यासश्च खामगावस्थः पन्नालालो बृहस्पतिः ।
महाराष्ट्रे विदर्भे च यो वै वाग्मी व्यराजत ।
शक्तिसंपन्नता देहदार्ढ्यं यस्यास्ति भीमवत् ॥ ५० ॥

व्यातस्वार्यसमाजस्य निष्ठावान् सेवको महान् ।
पूजितस्तिलकस्तेन भक्त्या व्यायाममन्दिरे ।
सावरकरीयशौर्यस्य गाथा यस्य मुखे सदा ॥ ५१ ॥

आसीद् वै वामनो मुख्यो विदर्भस्य विभूषणम् ।
वीरवृत्तिप्रियो भूत्वा संयमेनान्वितः सदा ॥ ५२ ॥

दुराणी भाउरायः स गणेशस्य सुहृत्तमः ।
अनुयायी च निष्ठावान् दैवहीनः सुबुद्धिमान् ।
आङ्ग्लसंस्कृतभाषादिपारगो नाटकप्रियः ॥ ५३ ॥

गद्रे कानिट्करो दादा मलकापूरनिवासिनः ।
अकोटस्थो बालमित्रं दादा बेदरकराभिधः ॥ ५४ ॥

यात्रिका मिलिताः सर्वे स्थानके वै भुसावळे ।
सरोवरं चामृतं तं पंजाबे गन्तुमिच्छुकाः ॥ ५५ ॥

भुसावळे सुहृद्भिश्च कृता पूर्णसहायता ।
दास्तानेप्रेरितैस्तैस्तैरात्मबुद्ध्या तदा तयोः ॥ ५६ ॥

एकत्वदर्शको भावः खानदेशविदर्भयोः ।
उत्साहवर्धको जातः सर्वेषां तोषदायकः ॥ ५७ ॥

खानदेशविदर्भस्था मिलिताश्च भुसावळे ।
तत्रैव पूर्णातापीजलयोर्मीलनं शुभम् ॥ ५८ ॥

संधिस्थानमभूद् रम्यं दक्षिणोत्तरदेशयोः ।
संप्राप्ता तत् स्थलं सा वै पूर्णा पश्चिमवाहिनी ॥ ५९ ॥

सा प्रत्यग्वाहिनी तापी भूता दक्षिणवाहिनी ।
दक्षिणोत्तरयोर्मध्ये संगमाय प्रदेशयोः ॥ ६० ॥

अंशतश्च तथा सिद्धः पूर्वपश्चिमयोरपि ।
पश्चिमाम्भोधिं तु मर्त्यं पूर्णा संप्रेषितापरम् ॥ ६१ ॥

प्रवासस्य कथा रम्या लोकमान्यानुयायिनाम् ।
गतानां मुम्बईस्थानाद् बीबीसीआयवर्त्मना ॥ ६२ ॥

उदक्प्रमुखोऽभवद् मार्गो गुर्जरांश्च मरुस्थलीम् ।
तेषां विशेषयानस्य तदेवापूर्वदर्शकः ॥ ६३ ॥

अतिलङ्घ्य सुरतस्थाने तापीं सुविमले स्थले ।
मार्गेऽभवं संस्मरन्तो मनसा नगरस्य तत् ॥ ६४ ॥

वर्णितं यद् गुणौघैः पुस्तकेषु प्रवासिभिः ।
मुक्ताहारालंकृतं वै रम्यमुद्यानमुत्तमम् ॥ ६५ ॥

नर्मदाया अतिक्रान्तः प्रवाहोऽपि सुखेन च ।
भव्यां शोभां वीक्ष्यमाणैर्भक्तैर्वै रथवर्तिभिः ॥ ६६ ॥

घटनायाः शंसनाय मुद्रिता यत्र घोषणा ।
आवाहनं कृतं तत्र लोकानां चाधिकारिणाम् ।
सहकार्याय बद्धानां वचो दत्तं विमुक्तये ॥ ६९ ॥

समाख्यातुं हि सम्राजे हिन्दीजनमनोगतम् ।
पठित्वा मुद्रितं सूक्ष्मं तिलकेन विनिश्चितम् ॥ ७० ॥

निबद्धमोचनाभ्यासाद् घोषणायाश्च कारणात् ।
कृतज्ञतां दर्शयामः सादरं भवतां वयम् ॥ ७१ ॥

नययत्नस्य सिद्ध्यर्थं स्वयंशासनिकैः खलु ।
प्रतियोगप्रमाणेन सहकार्यसमुत्सुकाः ॥ ७२ ॥

अभूज् जन्म च तत्तस्य प्रवासे वह्नियानके ।
प्रतियोगस्वरूपस्य सहकारस्य भारते ॥ ७३ ॥

राजनीतिविचारस्य सूत्रमेव निदर्शितम् ।
भारतोद्धारकर्तृभ्यो तिलकेन महत्तमम् ॥ ७४ ॥

राजनीतेः संहितायां तस्य स्थानमनुत्तमम् ।
यथा वेदेषु गायत्र्या आसीद् मातृपदोपमम् ॥ ७५ ॥

गूढविद्योपदेशोऽयं तिलकस्यान्तिमोऽभवत् ।
जनतायै भारतस्य लोकोद्धारोपकारकः ॥ ७६ ॥

तिलकस्यावतारस्य तस्मिन् सर्वस्वमाहितम् ।
मन्त्रश्चायक्षरो नौका व्यसनस्य विनाशिनी ॥ ७७ ॥

निर्यादेशः प्रकटितः काले चातिभयावहे ।
दृश्यते वर्णनं यस्य चित्रस्य शुभपुस्तके ॥ ७८ ॥

भूमिर्विद्युत्पातछिन्ना तथा भिन्नाश्च सैनवः ।
निनादितं गर्जनाभिर्मेघानां महदम्बरम् ॥ ७९ ॥

वार्ताभिनवतास्वस्य जन्मनो विद्युतामयत् ।
महासभापत्रिकाणां प्रायशो वह्नियानके ॥ ८० ॥

लोकमान्यस्य संदेशः सदोषः प्रकटीकृतः ।
अज्ञानात् पत्रकाराणां जातो वादस्य कारणम् ॥ ८१ ॥

" रिस्पांसिव् कोआपरेशन् " तिलकेनोपयोजितौ ।
शब्दावास्तां तयोरर्थः सम्यग् ज्ञातो न केनचित् ॥ ८२ ॥

प्रतियोगीतिशब्देऽस्मिन् बालेन निहितं बलम् ।
अनैस्तु सहकारेतिशब्देऽस्मिन् निहितं बलम् ॥ ८३ ॥

केवलं सहकारस्य बाल आश्वासनं ददौ ।
सम्राज इति सर्वेत्र विपर्यासः कृतो जनैः ॥ ८४ ॥

कोलाहलः समुत्पन्नः शङ्किता केऽपि बान्धवाः ।
बालप्रमुखपक्षीया दिग्विमूढा इवाभवन् ॥ ८५ ॥

निवृत्तिर्दिग्विमोहस्य तिलकेन विना भ्रमम् ।
मित्रैः साकं भाषणेन कृतामृतसरस्थले ॥ ८६ ॥

तत्त्वं येन विवेचितं भरतभूद्धारार्थमर्थप्रदं
साहाय्यं प्रतियोगि दुष्टरिपुभिर्नीतेर्विदां संमतम् ।
द्वन्द्वातीतसमस्वदृष्टिमतुलां यो राष्ट्रकार्येऽव्ययन्
राष्ट्राचार्यपदप्रपन्नतिलकं वन्दे निबद्धाञ्जलिः ॥ ८७ ॥

इति माधवविरचिते श्रीतिलकयशोऽर्णवे प्रतियोगिसहकारजन्म-
नामा एकाशीतितमस्तरङ्गः ।

# द्व्यशीतितमस्तरङ्गः

विदर्भवासिनः प्राप्ताः प्रथमं स्थानकं प्रति।
समादृता अतिप्रेम्णा स्वागतस्याधिकारिभिः ॥ १ ॥

निवासाय गताः स्थानं तदर्थं पूर्वयोजितम्।
स्वयंसैनिकसौजन्याद् विनायासं प्रवासिनः ॥ २ ॥

तिलकस्य स्वागतार्थं स्थानके समुपस्थिताः।
पंजाबस्थाः जनाः सर्वे समित्याश्च सभासदः ॥ ३ ॥

अमेयो जनसंमर्दश्चकार जयगर्जनाम्।
दृष्ट्वा बहिरथं तस्य विश्रान्तं स्थानकाद्गनम् ॥ ४ ॥

अग्नियानस्य यन्त्रेण प्रदत्ता पूर्वसूचना।
कृत्वा दीर्घं महारावं मेघगम्भीरनादवत् ॥ ५ ॥

तत्क्षणं प्रबलः शब्दो जयकारस्य चोत्थितः।
प्रजामुखसहस्रेभ्यः स्वागतार्थं महात्मनः ॥ ६ ॥

सर्वे सदस्याः संप्राप्ताः स्थानकं स्वागताय ते।
पुष्पहारार्पणं कर्तुं तिलकस्य पुरः स्थिताः ॥ ७ ॥

जनैर्नमस्कृतः सर्वैस्तिलकोऽग्निरथादधः।
सभाजितश्चावतीर्णः श्रद्धानन्दमहात्मना ॥ ८ ॥

दृष्ट्वोचुस्तत्र संजातो ज्ञानकर्मसमुच्चयः।
स्थानकेऽद्येति शास्त्रज्ञाः पण्डिताश्च समागताः ॥ ९ ॥

नीतो लोकैर्लोकमान्यस्तदालङ्कृतवाहने।
तत्पुरीराजमार्गेण समूढे तरुणैः स्वयम् ॥ १० ॥

नीराजनं कृतं तत्र कुलस्त्रीभिः स्थले स्थले।
वृष्टिभिः सुमनानां च पूरितं गगनं खलु।
दीर्घकालेन संप्राप्तं वाहनं स्थलमीप्सितम् ॥ ११ ॥

तिलको दर्शयामास लोकान् प्रति कृतज्ञताम् ।
नमस्कृत्य जनान् सर्वान् धन्यवादान् प्रदाय च ॥ १२ ॥

सभां प्रविष्टे तिलके परिवारजनैः सह ।
समुत्थिता आसनेभ्यः सभ्या ग्रा आसनस्थिताः ॥ १३ ॥

जुघुपुर्जयकारांश्च प्रविष्टे तिलके सभाम् ।
कृतवन्तस्तालिनादं सुचिरं हर्षनिर्भराः ॥ १४ ॥

स्थिताः प्रतिनिधिस्थाने लोकमान्यानुयायिनः ।
अधिवेशनमाजग्मुः सर्वतो हिन्दबान्धवाः ॥ १५ ॥

जालीयन्वालवार्ग ते द्रष्टुकामा गतास्तदा ।
सदस्या अतिदूरस्था अङ्गवङ्गकलिङ्गकाः ॥ १६ ॥

यत्राङ्ग्लसैनिकैः क्रूरैर्हता निःशस्त्रबान्धवाः ।
स्थाने श्रोतुं भाषणानि मिलितास्ते निरागसः ॥ १७ ॥

सैनिकाः प्रेषिता आसन् वृका मानवरूपिणः ।
मेनिरे ये प्रजा भक्ष्याः काननस्थमृगानिव ॥ १८ ॥

रक्तावर्तं च सरो जातं हतानां रक्तधारया ।
तदा बालाबलानां वै पुरुषाणां च घोरया ॥ १९ ॥

हतानां प्लाविता तत्र रक्तपूरेण मृत्तिका ।
डायरेण नृशंसेन नररक्तपिपासुना ॥ २० ॥

स्वातन्त्र्यार्थं भारतस्य बलिदानं भयावहम् ।
जातं स्थानं च तीर्थं तद् यावच्चन्द्रदिवाकरौ ॥ २१ ॥

पापानामाङ्ग्लराज्यस्य जाता पूर्णमितिस्तदा ।
तत्रैव देशस्वातन्त्र्ये निर्धारो वै सुनिश्चितः ।
संभूतः करुणार्द्रस्य चित्ते गान्धिमहात्मनः ॥ २२ ॥

दृष्ट्वेदं सकले संधिमिग्लंदे तिलकोऽकरोत् ।
साहाय्यं श्रमिपक्षेण स्वातन्त्र्यस्य समुद्यमे ॥ २३ ॥

यासामाप्तपतिभ्रातृगोत्रजाश्च दिवंगताः ।
हुत्वात्मानं राष्ट्रकार्ये भगिन्यस्ता समागताः ॥ २४ ॥

बालं विज्ञापयामासुर्वोढुं कार्यधुरं तदा ।
हुतात्मनां भवेत् तेन शान्तिर्वै तैरभीप्सिता ।
तासामिच्छा कृता मूर्ध्नि भगिनीनां च तत्क्षणम् ॥ २५ ॥

तस्याश्चर्चा हि कर्तव्या घटना या पुरस्कृता ।
तस्यामस्ति न वा कश्चिल् लोकमतसंभवः ॥ २६ ॥

यदुक्तं लोकमान्येन मन्तव्यं तत् सदोगणैः ।
यद्रोचते च ग्राह्यं तद् विरोधायेतरद् भवेत् ॥ २७ ॥

सूचितश्चैव पर्यायो राष्ट्रलाभप्रदः सदा ।
पुराणपुरुषेणायं सुपन्था दर्शितोऽधुना ।
सर्वेषामनुगन्तव्यः श्रेयसेऽभ्युदयाय च ॥ २८ ॥

ततोऽध्यक्षपदे नाम सूचितं चानुमोदितम् ।
मोतिलालश्च तत्स्थाने सुस्थितोऽभूद् यथाविधि ॥ २९ ॥

सौजन्यौदार्यसद्भावैर्योऽभूत् संमानभाजनम् ।
संयुक्तप्रान्तपंजाबकश्मीरेषु निवासिनाम् ॥ ३० ॥

ततः श्रीमोतिलालेन सभाध्यक्षेण भाषणे ।
उल्लेखिता गौरवेण बालस्य समुपस्थितिः ॥ ३१ ॥

पंजाबस्य कथा प्रोक्ता दुःखक्लेशमयी तदा ।
अध्यक्षेण च संपूर्णा वाण्या क्रोधप्रदीप्तया ॥ ३२ ॥

प्रविलुप्तं मानवत्वं पंजाबस्याधिकारिणाम् ।
पशूनां गहनारण्ये जातं वै घोरताण्डवम् ॥ ३३ ॥

पंजाबश्चाभवत् तेषां रङ्गभूमिर्भयावहा ।
निरागसां मानवानामुष्णशोणितरञ्जिता ॥ ३४ ॥

घटनानां कथां श्रुत्वा सभापतिमुखाज् जनैः ।
धिक्कृतास्ते तदा सर्वैः पंजाबस्याधिकारिणः ॥ ३५ ॥

अष्टोत्तरशतं नृणामासीद् देहान्तदण्डितम् ।
न्यायाधीशसमादेशात् पंजाबन्यायमन्दिरे ॥ ३६ ॥

मृत्युनैव कृतो वासः पंजाबे वै स्वयं तदा ।
आदेशादाङ्ग्लसम्राज ओड्वायरनिवेदितात् ॥ ३७ ॥

कारकालश्च सर्वेषां दण्डितानां निरागसाम् ।
सप्ताधिकसहस्रं वै वत्सराणि तदाभवत् ॥ ३८ ॥

आदौ हत्वा न्यायदेवीं कृत्या घोरा भयावहा ।
स्थापिता तत्पदे दुष्टैः क्रूरैः साम्राज्यवादिभिः ॥ ३९ ॥

कुटुम्बकं च विरलं पंजाबे दृष्टिमागतम् ।
अक्लेशितं सर्वथा यद् दण्डोन्मत्ताधिकारिभिः ॥ ४० ॥

हृदये दुःखितोऽध्यक्षश्चिन्तयामास वै भृशम् ।
अधिकृतशासकानां च कथं स्यात् परिमार्जनम् ॥ ४१ ॥

केनोपायेन मानव्यप्राप्तिस्तेषां पुनर्भवेत् ।
इति सर्वैश्चिन्तितव्यं सुधीः शान्तैर्विवेकिभिः ॥ ४२ ॥

घटनायाश्च कर्तव्यं गुणदोषविवेचनम् ।
परिहाराय दोषाणां यत्नशीला भवाम ह ॥ ४३ ॥

युक्तं यद् दृश्यते तस्य स्वीकृतिः फलदायिनी ।
वर्तितव्यं विवेकेन स्वराष्ट्रोद्धारकाङ्क्षिभिः ॥ ४४ ॥

पथ्यं सदा सेवितव्यं रुग्णेनारोग्यलिप्सुना ।
वैद्यादेशानुसारेण वर्तनं हितकारि वै ॥ ४५ ॥

दर्शिता घटनाकारैर्नेषा मार्गास्तु ये खलु ।
तेषु प्रवृत्तिं सुकरां निर्मातुं लोकमानसे ।
आवश्यकः प्रयत्नः स्यात् सर्वेषां राष्ट्रसेविनाम् ॥ ४६ ॥

वैलक्षण्यं सभास्थाने तत्र यद् दृष्टिगोचरम् ।
तदुल्लेखं विना नैव चित्रस्यास्यास्ति पूर्णता ॥ ४७ ॥

कारावासाद् विमुक्तानां प्रवेशात् स्तम्भितं तदा ।
प्रचालितं हि कार्यं तत् नियतं चाधिवेशने ॥ ४८ ॥

मन्यते स्तम्भनं युक्तमतिथिस्यागताय ह ।
अनभ्यायो भवत्येव शिष्टागमनहेतुकः ॥ ४९ ॥

सत्यपालश्च किचूल्‌ च संप्राप्तौ प्रथमे दिने ।
अलीबन्धू च विख्यातौ द्वितीयेऽहन्युपस्थितौ ॥ ५० ॥

अनेन व्यवधानेन सभाकार्येऽप्यभूत् तदा ।
समुत्साहो द्विगुणितस्तादृशव्यत्ययेन वै ॥ ५१ ॥

स्वागतायाभ्यागतानां वीराणां शासनेन वै ।
विमोचितानामादेशात् सम्राजो हि सभास्थले ॥ ५२ ॥

जेलप्रवेशवद् दृश्यं लोकास्तद् मेनिरे खलु ।
जातमुद्दीपकं तच्च नूतनोत्साहवर्धनम् ॥ ५३ ॥

हरिदासकथायां च नामस्मरणपूर्वकम् ।
भजनं स्याद् यथा तूर्णमवधानप्रचोदकम् ॥ ५४ ॥

कथासूत्रव्यत्ययेन खेदो नैव भविष्यति ।
सभायामिह यथाभूद् व्यत्ययोऽसौ सभासदाम् ॥ ५५ ॥

व्यञ्जनेन यथाऽन्नस्य रुचिर्द्विगुणिता भवेत् ।
सभाकार्यस्य महिमा ववृधे व्यत्ययेन ह ॥ ५६ ॥

गताः सभासदः केचित् समाप्ते प्रथमाह्निके ।
नगरीभूषणं द्रष्टुं विख्यातं स्वर्णमन्दिरम् ॥ ५७ ॥

श्रूयते तत्र शब्दो वै सौम्यः श्रीग्रन्थपाठिनाम् ।
पूजाकाले च वाद्यानां तालबद्धः स्वनस्तथा ॥ ५८ ॥

मन्दिरे सेवकाः शान्ता युद्धे ये सिंहविक्रमाः ।
पराक्रमस्य महतः सौजन्यस्यापि मूर्तयः ॥ ५९ ॥

गुरुगोविन्दशिष्यास्ते प्राणार्पणसमुद्यताः ।
संरक्षणाय धर्मस्य गुर्वाज्ञासंप्रचोदिताः ।
पूजकाः साम्यधर्मस्य शीखा नानकपन्थिनः ॥ ६० ॥

कुराणं पठितं भक्त्या नानकेन महात्मना ।
तथेश्वरः प्रार्थितो वै निमाजे हाजिभिः सह ॥ ६१ ॥

नामदेवप्रभृताभङ्गा गुरुग्रन्थे समुद्धृताः ।
कृतं प्रात्यक्षिकं चैवं सर्वधर्मादरस्य ह ॥ ६२ ॥

पूजकाः साम्यधर्मस्य प्रसादं वितरन्ति ये ।
जघ्नुस्तान् निर्दया आङ्ग्ला असंख्यान् शीखबान्धवान् ॥ ६३ ॥

सैनिकैः कृतहत्यायाश्चर्चा जाता सभास्थले ।
कृत्वैव नामनिर्देशं " मुर्दाबादे "ति घोषणा ।
आननेभ्यः सहस्राणां निःसृता तत्सभास्थले ॥ ६४ ॥

कर्तव्यं स्मारकं स्थाने हत्याकाण्डस्य सूचना ।
कृता चाङ्ग्लीयहिंसाया मालवीयेन भाषणे ॥ ६५ ॥

पञ्चलक्षस्य रूप्याणां प्राप्तमाश्वासनं तदा ।
सभासद्भ्यश्च कालेऽल्पे तस्मिन्नेव सभास्थले ॥ ६६ ॥

सम्राजो घोषणाया वै स्वागतं सर्वसंमतम् ।
युवराजस्य कर्तव्यमागमेऽपि तथैव च ॥ ६७ ॥

चेम्सफर्डः स्वकर्तव्यकरणे दुर्बलोऽभवत् ।
हत्याकाण्डादिदोषाणामधिकारी स एव वै ॥ ६८ ॥

तस्य स्थानं भारतस्य शासनेऽभूत् सुदुःसहम् ।
आङ्ग्लदेशं स सम्राजा प्रत्याहूयेयश्च सत्वरम् ॥ ६९ ॥

तदा वादास्पदं जातं घटनायास्तु वर्णनम् ।
न दोषदर्शिशब्दानां कर्तव्या तत्र योजना ॥ ७० ॥

आग्रहो गान्धिपक्षस्य मालवीयपुरस्कृतः ।
नेहरूशास्त्रिवीझांटा आसंस्तस्य समर्थकाः ।
पालो दासस्तथा पाल आसंस्तस्य विरोधकाः ॥ ७१ ॥

अन्यः प्रश्नो विवादस्य मांटेगाभारदर्शनम् ।
घटनोत्पत्तिविषये कर्तव्यं तच्च वेति च ॥ ७२ ॥

निराशाजनका चासीदसमाधानकारका ।
इति पालेन घटना वर्णिता तद् न संमतम् ।
मदन्मोहनशास्त्र्यादिसज्जनानां विशेषतः ॥ ७३ ॥

विझांटाभूत् सहमता दोषात् तेन मतेन च ।
भिन्नैस्तिलकपक्षीयैर्दूषिता कार्यपद्धतिः ।
इंग्लंडे कृतकार्यस्य रुष्टा तेनैव साभवत् ॥ ७४ ॥

दिनत्रयं विवादोऽभूद्व्यर्थूणामहर्निशम् ।
लेखनीपद्धभिर्भ्रान्ते प्रस्तावे शब्दयोजना ॥ ७५ ॥

तथा कृता यथा दोषा दर्शिताः स्युर्विशेषतः ।
भविष्यत्कार्यसिद्ध्यर्थं स्वीकारश्चापि दर्शितः ।
मांटेगस्य च प्रस्तावे कृतमाभारदर्शनम् ॥ ७६ ॥

अन्त्ये पुरस्कृते लेखे सर्वेषां हेतुपूर्तताम् ।
दृष्ट्वाभिनन्दिता सर्वैः सानन्दं लोकवाक्यता ॥ ७७ ॥

तिलकः संघशाखायाः सभायां भाषणं ददौ ।
किचलू डाक्टरः ख्यातः सभाध्यक्षोऽभवत् तदा ॥ ७८ ॥

दिने प्रयाणात् पूर्वस्मिन् श्रोतारो बहवः खलु ।
शब्दान् वै लोकमान्यस्य मिलिताः श्रोतुमुत्सुकाः ॥ ७९ ॥

सभाधिवेशने प्राप्ताः स्वातन्त्र्यस्याभिलाषिणः ।
भिन्नपक्षस्थिताः सन्त एकध्येयानुगामिनः ॥ ८० ॥

अत एव विवादस्य विहिता चोपकारिता ।
अन्वेष्टुं वा साम्यपदं कर्तुं किंवा समन्वयम् ॥ ८१ ॥

वादस्य महिमा गीतो लोकमान्येन भाषणे ।
प्रभावात् सहकार्यस्य सिद्धिरस्ति महोद्यमे ॥ ८२ ॥

उत्कर्षाभिमुखं विश्वं प्रायोऽसंतोषकारणात् ।
असंतुष्टा द्विजा नष्टा वाक्यमेतदसंमतम् ॥ ८३ ॥

कथितं स्मृतिकारेण तात्पर्यं तस्य विस्तृतम् ।
सभासदां सुबोधाय बालेन प्रतिपादितम् ॥ ८४ ॥

संतोषाज् जायते स्वास्थ्यं तस्मादालस्यमेव च ।
संभवेयुश्च ततो दुष्टा वाचिणो कर्महीनता ॥ ८५ ॥

तेजोविमुखता तस्माच् शत्रूणां विजयस्ततः ।
इदमेवोद्गमस्थानं भाविनो व्यसनस्य ह ॥ ८६ ॥

असंतोषः श्रियो मूलमवधार्यं सदा हृदि ।
इत्यादिश्य जनान् सर्वास्तिलकः स्वासनास्थितः ॥ ८७ ॥

प्रतस्थे च ततो बालः स्वपक्षीयानुगैः सह ।
पंजाबीयान् नमस्कृत्य गन्तुं पुण्यपुरीं पुनः ॥ ८८ ॥

वादे वादे जायते तत्त्वबोधः
कृत्वा वादानन्तिमश्चं प्रपञ्चम् ।
पंजाबस्थे तीर्थराजे पवित्रे
राष्ट्रीयाणां संगमं राष्ट्रवेषाम् ॥ ८९ ॥

ऐक्ये तस्मिन् भारतम्यामितस्य
न्युप्तं बीजं चेष्टभाग्योदयस्य ।
भिन्ने मार्गे शक्यता चैक्ताया
गान्धीलालापालबालादिकानाम् ॥ ९० ॥

इति माधवविरचिते श्रीतिलकयशोऽर्णवेऽमृतसराधिवेशननामा द्व्यशीतितमस्तरङ्गः ।

माधवेन कृतं काव्यमसमाप्तं विधेर्वशात् ।
संपादकैर्नीयतेऽन्तमारब्धात्ययकाङ्क्षिभिः ।
प्रश्रयेणानुगच्छद्भिस्तस्यैव सरणिं किल ॥

# त्र्यशीतितमस्तरङ्गः

लोकमान्योऽमृतसरादाययौ पुण्यपत्तनम् ।
दिनेषु सप्तस्वागच्छदिंग्लंदाच् शिष्टमण्डलम् ॥ १ ॥

इंग्लंदकृतकार्यस्य भारतार्थे बिझांटया ।
प्रतिकूलं मण्डलेन मतं स्पष्टं प्रदर्शितम् ॥ २ ॥

प्रकटैका सभा जाता आनेबारीजयोद्देशे ।
पुण्यपुर्यां लोकमान्यः सभाध्यक्षोऽभवत् तदा ॥ ३ ॥

अमृतसरसभायाश्च नृसिंहेन निवेदितः ।
श्रोतृभ्यः सर्ववृत्तान्तस्ततो बालेन भाषणे ॥ ४ ॥

बिझांटया कृते भूयो भूयो वै धोरणान्तरम् ।
धर्षयित्वा ततः प्रोक्तं यदि तस्या मतं भवेत् ।
असंमतं जनेभ्यश्च क्रोधस्तस्या निरर्थकः ॥ ५ ॥

पदस्वीकारविषये प्रोक्तं बालेन वै तथा ।
शासनेन नियोक्तव्या निःस्पृहा मन्त्रिणः किल ॥ ६ ॥

आराधनं यथापूर्वं शासनस्य न केवलम् ।
लोकान्तरमपि कुर्वाणा निष्ठया निर्भयं किल ॥ ७ ॥

तस्मिन् हि समये वादः समुत्पन्नः पुणेपुरि ।
यदृच्छया समाकृष्टस्तेन बालः सुधीः पुनः ॥ ८ ॥

शिक्षा प्राथमिकी कार्यावश्या छात्रकृते खलु ।
एतद्विषयिणी चर्चा पालिकायामुपस्थिता ॥ ९ ॥

अकल्पितं रौद्ररूपा चर्चेयमभवत् तदा ।
नेमस्तानां राष्ट्रियाणां चासीद् वै विग्रहो महान् ॥ १० ॥

नेमस्तानामाग्रहस्तु बालकानां कृते यथा ।
बालिकानामपि तथानिवार्यो नियमोऽस्तु सः ॥ ११ ॥

राष्ट्रियाणां मतं चासीद् बालानां केवलं कृते ।
आवश्यकोऽयं नियमः कर्तव्यः प्रथमं किल ।
द्रव्यभारो यतोऽसह्यः शिक्षार्थं चान्यथा भवेत् ॥ १२ ॥

विपर्यासो मतस्यास्य कृतो नेमस्तसज्जनैः ।
सन्ति राष्ट्रीयपक्षीयाः स्त्रीशिक्षणविरोधिनः ॥ १३ ॥

नैका राष्ट्रीयपक्षस्य विरोधिन्यः स्त्रियोऽभवन् ।
किर्लोस्कराभिधे नाट्यगृहे ताभिः सभा कृता ॥ १४ ॥

ब्राह्मणेतरनेमस्तप्रमुखा आगताः सभाम् ।
जनै राष्ट्रीयपक्षस्याप्यानीतस्तिलकस्तदा ॥ १५ ॥

नेमस्तानामग्रणीभिर्ब्राह्मणेतरनेतृभिः ।
द्वेषाद् विरुद्धं बालस्य कृतं वाक्ताडनं महत् ॥ १६ ॥

तीक्ष्णो वाक्कलहो जातः पक्षयोरुभयोस्तदा ।
विना कोलाहलादन्यत् फलं प्राप्तं न किंचन ॥ १७ ॥

अनेनाहं निमित्तेन नृसिंहमलिखं तदा ।
बालवत् पुरुषश्रेष्ठो नानीतव्यः कदाचन ।
क्षुद्र एतादृशे प्रश्ने श्रोतुं निन्दां परैः कृताम् ॥ १८ ॥

संमेलनं ज्योतिषस्य तृतीयं सांगलीपुरे ।
दिने पञ्चदशे मासि फेब्रुवार्यां सुनिश्चितम् ॥ १९ ॥

सभायाः स्वागताध्यक्षः ' छापखाने ' उपाह्वयः ।
प्राड्विवाको हि तत्रस्थो विद्वान् वक्ता च केशवः ॥ २० ॥

कोल्हट्करः कृष्णसूनुः प्रथितो नाट्यलेखकः ।
थत्तेपादो ज्योतिषज्ञश्च सभाध्यक्षो नियोजितः ॥ २१ ॥

ज्योतिर्विदां वरिष्ठोऽसौ लोकमान्यो निमन्त्रितः ।
संमेलनाय सर्वैश्च सांगलीपुरवासिभिः ॥ २२ ॥

राज्यस्य सांगलीनाम्नो भूपालाः पटवर्धनाः ।
गाणपत्याः प्रजोन्नत्यां तत्पराः प्रगतिप्रियाः ॥ २३ ॥

महाबलेश्वरोत्पन्नकृष्णातीरे विराजितम् ।
विद्याकलाविनोदेषु प्रसिद्धं सांगलीपुरम् ॥ २४ ॥

महाराष्ट्रीरङ्गभूम्या उद्गमस्थानमेव तत् ।
आद्यो नाटककर्तापि भावे तत्रस्थ एव च ।
देवलः 'शारदाकारः' काका खाडिल्करस्तथा ॥ २५ ॥

संमेलनमुपस्थातुं तिलकः सांगलीपुरम् ।
सभाध्यक्षेण सहितः प्रतस्थे पुण्यपत्तनात् ॥ २६ ॥

मिरजस्थानके तस्य हर्षं पौरजनैः कृतम् ।
स्वागतं नरनारीभिः पुष्पहारान् समर्प्य च ॥ २७ ॥

स्थानकात् पुरमानीतो जनैर्विद्युद्रथेन सः ।
जयोऽस्तु तिलकस्येति जयघोषैर्निनादितैः ॥ २८ ॥

पुरप्रमुखमार्गेषु पुष्पमालाः समर्पिताः ।
तस्मै तथा वन्दितोऽसौ सादरं सकलैर्जनैः ॥ २९ ॥

पुरेऽल्पं भाषणं बालः स्वराज्यविषयेऽकरोत् ।
ततो विद्युद्रथेनैव सांगलीनगरं ययौ ॥ ३० ॥

आनन्दनिर्भराः पौरा बालस्यागमनेन च ।
संमेलनस्य शोभापि नूनं द्विगुणिताभवत् ॥ ३१ ॥

पञ्चसप्ततिसंख्याकास्तत्र ज्योतिर्विदस्तथा ।
संमेलनार्थमाजग्मुः परस्था धर्मशास्त्रिणः ॥ ३२ ॥

तथा श्रीशंकराचार्यैः कुर्तकोटीतिसंज्ञितैः ।
भगवत्पूज्यपादैश्च सभास्थानमलंकृतम् ॥ ३३ ॥

प्रारम्भे स्वागताध्यक्षभाषणं समभूत् ततः।
सभाध्यक्षेण वैदुष्यपूरितं भाषणं कृतम् ॥ ३४ ॥

ज्योतिःशास्त्रेतिहासस्य सुविचारपरिप्लुतम्।
विनोदप्रचुरं वृत्तं वर्णितं तेन भाषणे ॥ ३५ ॥

नाक्षत्रसांपातिकयोः पद्धत्योर्हि द्वयोस्तदा।
कृत्वा विवेचनं तेन विरोधो दर्शितस्तयोः ॥ ३६ ॥

पूर्वैसैद्धान्तिकैर्वेधप्रामाण्यं बलवत्तरम्।
कथं नु शब्दप्रामाण्यात्तच्च सुष्ठु विवेचितम् ॥ ३७ ॥

शास्त्रीया अयनांशाश्च शुद्धायनगतिस्ततः।
नाक्षत्रं वर्षमानं च सूक्ष्मग्रहगतिस्ततः।
शुद्धपञ्चाङ्गतत्त्वं तेन प्रोक्तः पूर्वोत्तरक्रमः ॥ ३८ ॥

पक्षभेदा विलुप्ताः स्युरेतन्मार्गावलम्बनात्।
अतस्तेन तथाचारोऽभ्यर्थितो निजभाषणे ॥ ३९ ॥

सभायां संमताः केचित् प्रस्तावाः षोडशे दिने।
मुख्यस्तेषामभूद् नूतनकरणग्रन्थनिर्मितेः ॥ ४० ॥

प्रस्तावानां तदा चर्चा दिने सप्तदशेऽभवत्।
मताधिक्येन चत्वारः सभया संमताः कृताः ॥ ४१ ॥

स्वीकर्तव्यं वर्षमानं सूर्यसिद्धान्तसंमतम्।
कृत्वा नु बीजसंस्कारं नाक्षत्रमपरिवर्जनैः।
अयनानां गतेर्मानं मान्यं दृक्प्रत्ययागतम् ॥ ४२ ॥

निःशरा रेवतीयोगतारा भवतु संमता।
नूनं चक्रस्य राशीनां प्रारम्भस्थानमेव च।
नूनं स्युः करणग्रन्थे त्वयनांशाः सुसंमताः ॥ ४३ ॥

व्याख्यानं तिलकस्यासीद्रात्रौ पञ्चदशे दिने।
सभाया मण्डपे तस्मिन् प्रगाढाभ्यासदर्शकम् ॥ ४४ ॥

व्याख्याने प्रथमं बालो ज्योतिषस्य न्यवेदयत् ।
संमेलनद्वयस्यैव मुम्बापुण्यकयोः कथाम् ॥ ४५ ॥

ग्रहलाघवपञ्चाङ्गविरुद्धं भाषणं खलु ।
चत्वारिंशद्वर्षपूर्वमासीत् साहसमेव च ॥ ४६ ॥

ग्रहलाघवपञ्चाङ्गविषये परिवर्तनम् ।
दीर्घयत्नेन सुज्ञानां जातं हितकरं किल ॥ ४७ ॥

प्राचीननूतनयोर्द्वैतं निराकृत्य बुधैर्जनैः ।
अस्यवश्यं च कर्तव्या शुद्धपञ्चाङ्गनिर्मितिः ॥ ४८ ॥

वेदशून्यग्रहधरासंमिते ख्रिस्तवत्सरे ।
संमेलनं ज्योतिषस्यादिमं मुम्बापुरेऽभवत् ॥ ४९ ॥

अखिलाद् भारताज्ज्योतिर्विदो ये धर्मशास्त्रिणः ।
संमेलनार्थं मिलिता एकादशदिनांस्तदा ॥ ५० ॥

भिन्नभिन्नमतानां च सावेशप्रतिपादनम् ।
कृतमालोच्य शास्त्राणि मिलितैस्तत्र पण्डितैः ॥ ५१ ॥

दीर्घचर्चावसाने च प्रस्तावः संमतः कृतः ।
ग्राह्यायनांशसंख्यायाः प्रमाणस्वीकृतेस्तदा ।
द्वाविंशतित्रयोविंशत्यन्तरा सर्वशास्त्रिभिः ॥ ५२ ॥

अयनांशप्रमाणं तत् सुनिश्चित्य कृताधिका ।
पुणेसंमेलनेनास्मिन् विषये प्रगतिः खलु ॥ ५३ ॥

अथापद्यः स्थिरारम्भस्थानस्य स्पष्टनिर्णयः ।
तेन प्रश्नोऽयनांशानां सुतरां सुलभो भवेत् ॥ ५४ ॥

वृद्धिर्ज्योतिश्शास्त्रस्यायनांशान्तं परागतिः ।
एते अन्योन्यसंबद्धे पृथग्भिन्ने कदापि न ॥ ५५ ॥

अनया सभया तस्मादस्य प्रश्नस्य निर्णये ।
प्रतिज्ञेयं निश्चयेन सुविमर्शनपूर्वकम् ॥ ५६ ॥

ज्योतिर्विद्भिर्भारतीयैर्ज्योतिःशास्त्रविवर्धने ।
पूर्वकाले कृतं कार्यमभिमानार्हमेव वै ॥ ५७ ॥

पूर्वाधुनिकयोरेव विदयोश्च समन्वयात् ।
कर्तव्या प्रगतिर्मान्यो वेदस्यापि समन्वयः ॥ ५८ ॥

न पूर्णं शुद्धपञ्चाङ्गप्रचारेण तु केवलम् ।
कदापि नो भवेत् कार्यं ज्योतिःशास्त्रोन्नतेः खलु ॥ ५९ ॥

वेधज्ञानं वेधशाला वेधज्ञा भारतोद्भवाः ।
वेधशालाकृतं शुद्धं सूक्ष्मं पञ्चाङ्गमेव च ।
भवतीयं चतुःसूत्री ज्योतिःशास्त्रस्य वर्धने ॥ ६० ॥

सभागतैर्ज्योतिर्विद्भिर्निधाय हृदि सर्वशः ।
चतुःसूत्री विधातव्यं सभायै मार्गदर्शनम् ।
शुद्धपञ्चाङ्गनिर्माणे ज्योतिःशास्त्रविवर्धने ॥ ६१ ॥

संमेलनमिदं भूयात् पूर्णत्वेन यशोवहम् ।
वयं सत्पक्षगन्तारः सत्यस्य विजयः सदा ॥ ६२ ॥

संमेलनान्ते बालाय मानपत्रं समर्पितम् ।
शंकराचार्यनेतृत्वे सादरं वै सभाजनैः ॥ ६३ ॥

मार्चमासि पुणे-जिल्हा-परिषद् जुन्नरेऽभवत् ।
तृतीयेऽह्नि तदध्यक्षो 'देशपांडे' उपाह्वयः ॥ ६४ ॥

गङ्गाधराभिधो नेता बेळगावे प्रतिष्ठितः ।
कर्नाटकस्य सिंहोऽसौ प्रसिद्धो देशसेवकः ॥ ६५ ॥

अगच्छत् जुन्नरं बालो सनिर्बन्धं निमन्त्रितः ।
तथा गता विरोधार्थं नेमस्ता ब्राह्मणेतराः ॥ ६६ ॥

नेता नेमस्तपक्षस्य बाबासाहेबकामतः ।
परिषत्प्रमुखानेत्य क्रोधसंतप्तया गिरा ।
कृषिकान् प्रातिनिध्येन चक्रे स्वीकर्तुमाग्रहम् ॥ ६७ ॥

पूर्वमेव प्रातिनिध्यं प्रदत्तमपि कर्पकैः ।
न स्वीकृतं ततस्तैस्तु चालकैर्नादृता तदा ।
सूचना कामतस्येयं कुहेतुप्रेरितस्य वै ॥ ६८ ॥

ततो नेमस्तनेतारः परिषद्मण्डपान्तिके ।
क्रोधात् कोलाहलं चक्रुर्जनैः कतिपयैः सह ॥ ६९ ॥

आरब्धे तु सभाकार्ये न कोऽपि व्यत्ययोऽभवत् ।
इति दृष्ट्वा पाञ्चजन्यं चक्रुर्लज्जां विहाय ते ।
नृसिंहेन कृतं तस्य ग्रन्थे स्वे सुष्ठु वर्णनम् ॥ ७० ॥

सभाया मण्डपे राधायभूद् बालस्य भाषणम् ।
तदार्पयद् मानपत्रं तस्मै जुन्नरपालिका ॥ ७१ ॥

प्रस्तावा ऐकमत्येन परिषन्मिलितैर्जनैः ।
बहवः संमतास्तेषु द्वावास्तां प्रमुखौ किल ॥ ७२ ॥

शासनं कुळकरीभावे न दद्यात् संमतिं खलु ।
धरणस्य कृते दाटासंधसंकल्पितस्य वै ॥ ७३ ॥

गोहत्याप्रतिबन्धश्च मुस्लिमलीगपुरस्कृतः ।
स्वीकर्तव्यः शासनेन प्रस्तावौ द्वाविमौ किल ॥ ७४ ॥

बेळगावे ततो जिल्हासभाया अधिवेशनम् ।
अभवद् मार्चमासस्य दिवसे पञ्चमे किल ॥ ७५ ॥

तस्याः परिषदोऽध्यक्षः काव्यस्यास्य हि लेखकः ।
तिलकोऽप्यागतस्तत्र चालकानां निमन्त्रणात् ॥ ७६ ॥

सुधारणानां प्रस्तावः पुरतो निहितो यदा ।
सभाजनानां संमत्यै सभाया अधिवेशने ॥ ७७ ॥

प्रायर्णेतरनेमस्तप्रमुखैरुपसूचना ।
आनीतैका तद्विरुद्धा सावेशं च पुरस्कृता ॥ ७८ ॥

सुधारणानां निन्द्यार्थाः प्रस्तावे योजितास्तु ये।
विवर्जनीयाः शब्दास्ते प्रस्तावात् सर्वथैव ह ॥ ७९ ॥

तत्रोपसूचनापक्षे पण्मतान्येव साम्यवत् ।
असंमता च प्रस्तावो मताधिक्येन संमतः ॥ ८० ॥

पश्चात्सभाया धुर्यैर्या जनैः संकेश्वरस्य च ।
समर्पितं मानपत्रं तिलकाय पृथक् पृथक् ॥ ८१ ॥

विभिन्नजातिनेतारो मानपत्रस्य संमतिम् ।
अदर्शयन्नादरेण समुत्थाय निजासनात् ।
विरोधं चक्रतुः किन्तु द्वावेव ब्राह्मणेतरौ ॥ ८२ ॥

भाषणे स्वे विरोधस्य तयोः कृत्वाभिनन्दनम् ।
लोकमान्यः प्रत्युवाच धीरवृत्तिरियं खलु ॥ ८३ ॥

शासनस्य विरोधेऽपि दृश्यते चेद् यदीदृशी ।
विनायासेन कार्यं नः सिद्धिं गच्छेदसंशयम् ॥ ८४ ॥

कालेऽस्मिन् हृदयस्पर्शी बालस्याभूच्च भाषणम् ।
ब्राह्मणाब्राह्मणप्रश्ने दीर्घकालं प्रभाववत् ॥ ८५ ॥

कार्यक्षेत्रं निश्चितं मे स्वेच्छया राजकारणम् ।
कार्यं सामाजिकक्षेत्रे न शक्यमभवद् मम ॥ ८६ ॥

ततो बिल्वग्रामवासे जिनधर्मानुयायिनः ।
मानपत्रं ददुस्तस्मै तथैव ब्राह्मणेतराः ॥ ८७ ॥

एप्रिले प्रान्तपरिषद् द्वितीयेऽह्नि सुनिश्चिता ।
सोलापुरे तदध्यक्षो नृसिंहः केल्करामिधः ॥ ८८ ॥

तत्समागमनात् पूर्वं तिलकेन नियोजितः ।
सिन्धप्रान्ते संप्रचारस्तत्करत्रमनुगैः सह ॥ ८९ ॥

मार्चमासे सप्तदशे दिवसे तिलकस्तदा ।
प्रतस्थे पुण्यनगराद् गन्तुं मुम्बापुरीं किल ॥ ९० ॥

तत्रस्थे हिन्दमहिलासमाजे तस्य भाषणम् ।
स्त्रियश्च राष्ट्रकार्यं च इत्येतद्विषयेऽभवत् ॥ ९१ ॥

दिवसे स ततो विंशे प्रतस्थे देहलीपुरम् ।
द्वाविंश आययौ तत्र जातं तत्स्वागतं महत् ॥ ९२ ॥

पौरैर्विद्युद्रथारूढो नीतोऽसौ स्थानकात् पुरे ।
पूजितः पुष्पमालाभिः सर्वप्रमुखवीथिषु ॥ ९३ ॥

बहुभिर्नरनारीभिः स्थाने स्थाने नमस्कृतः ।
तस्मै विराट्सभायां च मानपत्रं समर्पितम् ॥ ९४ ॥

देहलीस्थमहाराष्ट्रस्नेहवर्धकसंस्थया ।
नूत्नवर्षदिने तस्मै ताम्बूलाद्यर्पितं शुभे ॥ ९५ ॥

दिल्लीपुराद् गणेशेन सहितो विठ्ठलेन च ।
अजमीरं ययौ बालस्तत्रस्थैः स निमन्त्रितः ॥ ९६ ॥

तत्रासीत्तस्य सत्कारः सुमहांश्चित्तवेधकः ।
सायं नागरिकैस्तस्मै मानपत्रं समर्पितम् ॥ ९७ ॥

मुस्लीमप्रमुखैः स्वेषां प्रार्थनामन्दिरे कृतः ।
ततस्तस्य सुसंमानस्ताम्बूलाद्यर्पणेन च ॥ ९८ ॥

अजमीरसमारम्भानन्तरं बाल आययौ ।
सिंधप्रान्ते प्रचारार्थं सिंधहैदरपट्टनम् ।
अजमीराधिकस्तत्र संमानोऽभूत् तदा खलु ॥ ९९ ॥

तस्मै शिकारपूरेऽपि खिलाफत्समितिस्तथा ।
हिन्दस्वराज्यसंघोऽन्या नैकाः संस्थाः पुरेभवाः ॥ १०० ॥

आर्पयन् मानपत्राणि तथा नागरिका ददुः ।
षट्सहस्रं रूप्यकाणां सादरं दक्षिणाधनम् ॥ १०१ ॥

समूल्यमभवत्तस्य व्याख्यानं सक्करे पुरे ।
उपार्जितं मूल्यवित्तं सहस्रत्रयसंमितम् ॥ १०२ ॥

तत्सर्वं जालियनूवालानिधेः साह्यार्थमर्पितम् ।
करार्चीं वाल आयात ऊनत्रिंशे दिने ततः ॥ १०३ ॥

व्याहृते स्वागतं तस्य सादरं तत्र वै पुनः ।
गणैः स्वयंसेवकानां हिन्दुमुस्लीमधर्मयोः ॥ १०४ ॥

मद्रेसास्थितमुस्लीमच्छात्रा वालाय वर्त्मनि ।
समार्पयन् पुष्पमाला वणिक्संघादयस्तथा ॥ १०५ ॥

कांग्रेससमितिर्होमरूलसंघस्तथा ददौ ।
मुस्लीमसंघो वालाय मानपत्रं च सादरम् ।
चतुर्दशशतं दत्ता रूप्यकाणां च दक्षिणा ॥ १०६ ॥

मिट्ठूपूरखासतांडोजाकोल्यादिनगरेषु च ।
कृतो वालस्य सत्कारः सादरं पुरवासिभिः ॥ १०७ ॥

त्रयोदशदिनान् कृत्वा प्रचारं तिलकः पुनः ।
हैदराबादमागत्य प्रतस्थे मुम्बई ततः ॥ १०८ ॥

अमृतसरे चिह्नांटासीत् तिलकेन पराजिता ।
बेळगावे जुन्नरे च नेमस्ता ब्राह्मणेतराः ॥ १०९ ॥

एवमेते त्रयः पक्षाः क्रोधज्वलितमानसाः ।
संयुक्तेन बलेनैव तिलकस्य पराभवम् ।
तथैव तस्य पक्षस्य कर्तुमासन् समुद्यताः ॥ ११० ॥

ब्राह्मणेतरनेता यः कोठारीसंज्ञकश्च तैः ।
सोलापुरे परिषदो विरोधाय नियोजितः ॥ १११ ॥

सभाया दिवसे पूर्वं एप्रिले प्रथमेऽहनि ।
सोलापुरे रणक्षेत्रे समवेता युयुत्सवः ॥ ११२ ॥

मद्रदेशाद् चिह्नांटा च नेमस्ता ब्राह्मणेतराः ।
स्वापरेषां विनिर्णेतुं पक्षाणां हि बलाबलम् ॥ ११३ ॥

कामतो नामदारश्च रांगलश्च परांजपे ।
यारिष्टरो गाडगीळो नेमस्तप्रमुखा इमे ॥ ११४ ॥

माता थिआसफिस्टानां तथा वक्तृत्वचण्डिका ।
विझांटा योगिनी नेत्री विख्याता महिला भुवि ॥ ११५ ॥

प्रथिता दिग्गजाः सर्वे स्वे स्वे क्षेत्रे महारथाः ।
स्यूता वै तिलकद्वेषे सूत्रे मणिगणा इव ॥ ११६ ॥

सभाध्यक्षो नृसिंहोऽपि स्वपक्षस्यानुयायिभिः ।
तस्मिन्नेव दिने प्राप्तः सादरं सत्कृतो जनैः ॥ ११७ ॥

तिलकश्चागतस्तत्र सिंधहैदरपट्टनात् ।
श्रान्तो दीर्घप्रवासेन सभायाः प्रथमे दिने ।
सोलापूरजनास्तस्य स्वागतं चक्रिरे महत् ॥ ११८ ॥

" सभां नायाति गान्धीजी ततः किं स्वागतेन वै " ।
इत्येकं पत्रकं मार्गे विन्यस्तं तु विरोधकैः ।
दृष्ट्वैव तत् परित्यक्तं सोपहासं जनैः खलु ॥ ११९ ॥

ज्ञात्वा तु सकलां वार्तां कृतो बालेन निश्चयः ।
राष्ट्रीयपक्षमुख्यानामेकैकस्य सहेतुकम् ।
प्रतिरात्रं भवेत्तत्र व्याख्यानं प्रकटं खलु ॥ १२० ॥

मुख्यो वक्ता गणेशोऽभूत् सभायाः प्रथमे दिने ।
मोपट्करो लक्ष्मणश्च वैद्यश्चिन्तामणिस्तथा ॥ १२१ ॥

सावरकरो भिषग्वर्यः शिवरामः परांजपे ।
व्याख्यानानि ददुः पश्चात् प्रत्यहं च यथाक्रमम् ॥ १२२ ॥

नैव विघ्नस्तदा कश्चिद् निर्मितस्तु विरोधकैः ।
समागच्छन्नसंख्याताः श्रोतारः श्रवणोत्सुकाः ॥ १२३ ॥

एप्रिल्दिने द्वितीये च प्रारंभे परिषत् खलु ।
द्वाविंशतिशतं प्रायः प्रातिनिध्येन चागताः ।
सहस्रद्वयसंख्याकः प्रेक्षकाणां गणस्तथा ॥ १२४ ॥

पूर्वमेव समारम्भात् नेमस्ता ब्राह्मणेतराः ।
परांजपेगाडगीळकोठारीकामतादिभिः ॥ १२५ ॥

नेतृभिः सहिताः सर्वे प्रायः सप्तशताधिकाः ।
आगताः समुदायेन परिषद्मण्डपान्तिके ॥ १२६ ॥

कोलाहलं प्रकुर्वन्तो विघ्नं कर्तुं समुद्यताः ।
येन केन प्रकारेण कार्ये परिषदः शुभे ॥ १२७ ॥

पृष्ठद्वारं मण्डपस्य परांजपेकामतादयः ।
सहसैव समागत्यावोचंस्ते द्वाररक्षकम् ॥ १२८ ॥

प्रवेशयास्मान् सर्वान् वै मण्डपे सत्र यत्र च ।
भवद्भिर्गम्यतां मुख्यं द्वारं तेनेति सूचितम् ॥ १२९ ॥

प्रवेशो नैव लब्धस्तैर्निरुद्धैस्तत्र वै पुनः ।
तदा भूयाधिकोन्मत्ताः क्रोधदिङ्मूढमानसाः ।
पाषाणक्षेपणं मौर्ख्यात् कर्तुमारेभिरे ततः ॥ १३० ॥

इतस्ततः क्षेपणेन पाषाणानां विरोधिनाम् ।
उपप्लवो महान् जातो भयेन व्याकुला जनाः ॥ १३१ ॥

यांगीयजीरजानोर्यत्र पते करोत्तराः ।
स्वयंसेवाजनाख्यौ गल्गलीमुरलीधरौ ॥ १३२ ॥

सभाद्वारे स्थापिता ये प्रापुरुग्रक्षतानि ते ।
गुर्डीनामा रक्षकाणां प्रमुखोऽप्याहतस्तथा ॥ १३३ ॥

तथाख्यातमहाभागा रांगलराः कामतादयः ।
कुतुकात् ददृशुर्लीलां स्वानुगानां तु दूरतः ॥ १३४ ॥

प्रस्थापिता शान्तता तु ह्यचिरात् स्वास्थ्यरक्षकैः ।
प्रारब्धं च सभाकार्यं निर्विघ्नं तदनन्तरम् ॥ १३५ ॥

सभायै शंकराचार्याः कुर्तकोटीतिसंज्ञकाः ।
भगवत्पूज्यपादास्ते मङ्गलाशीर्वचो ददुः ॥ १३६ ॥

परस्थानां च नेतॄणां संदेशाः पठितास्ततः ।
सामंतः स्वागताध्यक्षः पपाठ निजभाषणम् ॥ १३७ ॥

ततोऽध्यक्षेण पठितं नृसिंहेन स्वभाषणम् ।
लिखितं चाङ्ग्लभाषायां गभीरं चाद विस्तृतम् ॥ १३८ ॥

अनुवादो महाराष्ट्र्यां तस्योच्चैः पठितः स्वरैः ।
गङ्गाधराभिधैः पश्चाद् देशपांडेमहोदयैः ॥ १३९ ॥

निर्वाचितं मण्डलं च विषयाणां नियामकम् ।
दिने द्वितीये प्रस्तावाः केचिद् वै संमताः कृताः ॥ १४० ॥

दिने तृतीये मुख्ये च स्वराज्यविषये तदा ।
प्रस्तावस्तिलकेनासीन्निहितः परिषत्पुरः ॥ १४१ ॥

अमृत्सरसभायां यः प्रस्तावः संमतोऽभवत् ।
सुधारणानां विषये संमतोऽसौ सदा पुनः ॥ १४२ ॥

विझांद्या तदानीता विरुद्धैकोपसूचना ।
सुधारणासु संपूर्णं सहकार्यं भवेदिति ॥ १४३ ॥

रघुनाथेन सा चासीद् यथाविध्यनुमोदिता ।
अनेकेषां भाषणानि वक्तॄणाममवंस्ततः ॥ १४४ ॥

विरुद्धान्यनुकूलानि सावेशं वै कृतानि च ।
प्रस्तावस्यानुकूलं तु बालः प्रत्युत्तरं ददौ ॥ १४५ ॥

असंमता विझांड्या अभवच्चोपसूचना ।
प्रस्तावो मतबाहुल्यात् सभायाः संमतोऽभवत् ॥ १४६ ॥

प्रस्तावाः केचिदन्येऽपि सभया स्वीकृतास्तदा ।
समाप्तं तु सभाकार्यमन्तराया‌द्विना किल ॥ १४७ ॥

नेमस्तैर्निर्मितो विघ्नः समारम्भे कुहेतुना ।
रक्षकाणां तु दाक्षिण्याद्दक्षत्वाच्च निवारितः ॥ १४८ ॥

सोलापूरसमीपस्था तुळजापुरवासिनी ।
राष्ट्रकार्ये च यालाय जगदम्बा यशो ददौ ॥ १४९ ॥

भासन् विश्रांटा नेमस्ता हृतवीर्यास्ततः परम् ।
भारतेन कृते यज्ञे स्यातन्त्र्यस्योपलब्धये ॥ १५० ॥

सोलापूरसभायास्तु वृत्तान्तविषयेऽलिखत् ।
तिलकः केसरीपत्रेऽग्रलेखं तीव्रमुत्तमम् ॥ १५१ ॥

शिशुपालो ह्यचवायत् ग्रिन्सिपालः परांजपे ।
अधुना पशुपालोऽसौ सत्यमेवाभवत् किल ॥ १५२ ॥

सुनाम रघुनाथेन माधवस्य कलङ्कितम् ।
कलङ्कितं स्वशीलं च वैदुष्यमपि चात्मनः ॥ १५३ ॥

तथैव लिखितं तेन विश्रांटाविषये खलु ।
श्लोकार्धमेकमुद्धृत्य पुराणोक्तं समर्पकम् ।
" पूतना हरिवधार्थमाययौ।
प्राप तत्र वधमेव ह्यात्मनः " ॥ १५४ ॥

## चतुरशीतितमस्तरङ्गः

स्वराज्यसंघपक्षस्य ध्येयधोरणपत्रकम् ।
आसीदधिकृतो बालो विधातुं पक्षनेतृभिः ॥ १ ॥

सूक्ष्मं विचिन्त्य रचितं लोकमान्येन विश्रुतम् ।
कांग्रेसान्तर्लोकशाहीपक्षस्योद्देशपत्रकम् ॥ २ ॥

प्रथमं केसरीपत्रे योजनेत्यभिधाय तत् ।
एप्रिले दिवसे विंशे तिलकेन प्रकाशितम् ॥ ३ ॥

वैयक्तिकी योजना सा तिलकस्येति कैश्चन ।
आक्षेपः कृत आसीत्स सर्वथैव निरर्थकः ॥ ४ ॥

घोषणापत्रमात्यर्थं दातुमग्रोचितं यतः ।
राजनीतिपटुत्वं वै तस्मिन् बालस्य राजते ॥ ५ ॥

लोकराज्येऽचला निष्ठा तथा राष्ट्रीयसंसदि ।
स्वराज्यसंघपक्षस्य घोषितं तत्र धोरणम् ॥ ६ ॥

लोकानां च मताधिक्यं प्रसारः शिक्षणस्य च ।
लोकराज्यस्थापनायाः प्रमुखं साधनद्वयम् ॥ ७ ॥

मान्या तथा च पक्षस्य सर्वधर्मसहिष्णुता ।
व्यवहारे समूहस्य सर्वजातिसमानता ॥ ८ ॥

साम्राज्यान्तःस्वराज्यं च ध्येयं पक्षस्य संमतम् ।
सहकार्ये च पक्षस्य प्रतियोगीति धोरणम् ॥ ९ ॥

परराष्ट्रेषु चेंग्लंडे प्रचारोऽवश्यमेव च ।
राष्ट्रसंघे तथा कार्यो विषये भारतस्य वै ॥ १० ॥

नूत्नाः सुधारणा दत्ता अपूर्णा अप्यतुष्टिदाः ।
स्वीकृत्याधिकसंप्राप्त्यै यतितव्यं निरन्तरम् ॥ ११ ॥

भाषाधारेण रचना प्रान्तानां पक्षसंमता ।
ध्येयवाक्यं च पक्षस्य शिक्षोद्योगश्च संहतिः ॥ १२ ॥

एकोऽपूर्वः समारोहो मेमासे पुण्यपत्तने ।
द्वाविंशेऽभूद्दिने हर्म्ये गायक्वाडेतिसंज्ञिते ॥ १३ ॥

पर्सफंडेति यो जातो राष्ट्रीयजनसंचितः ।
निधिस्तस्यार्पणस्यैव तिलकाय महात्मने ॥ १४ ॥

चिरोलस्याभियोगे वै तिलकेन धनं बहु ।
व्ययितं पूर्तये तस्य पर्सफंडो नियोजितः ॥ १५ ॥

समारोहस्याध्यक्षो नानासाहेबसंज्ञकः ।
मुम्बापुर्यां सुविख्यातो देशमूखो भिषग्वरः ॥ १६ ॥

अर्थसंचयहेतोश्च नृसिंहेन निवेदितम् ।
जनैः कृतस्य साह्यस्य वृत्तं सामाजिकान् प्रति ॥ १७ ॥

ततो देशमुखः कृत्वा भाषणं गौरवावहम् ।
जयघोषनिनादेन तिलकायार्पयद् निधिम् ॥ १८ ॥

द्रव्यार्पणविधेः पश्चात् सगद्गदगिरा कृतम् ।
भाषणं तिलकेनार्थपूर्णं च समयोचितम् ॥ १९ ॥

चिरोलस्य विरुद्धो वै योऽभियोगो मया कृतः ।
तस्यासीत् सार्वजनिकं स्वरूपं संशयं विना ॥ २० ॥

प्रथादिनश्चिरोलस्य कार्सनस्य हि भाषणात् ।
संबोध्यान्ते कृताद् ज्यूरिं भवेत् सुस्पष्टमेव तत् ॥ २१ ॥

यदि विन्देज् जयं बालोऽस्थिरं स्यादाङ्ग्लशासनम् ।
बहुविप्रप्लुतं नूनं भारते कार्सनोऽवदत् ॥ २२ ॥

मह्यं सर्वजनैर्दत्वा प्रेम्णेदं दक्षिणाधनम् ।
राष्ट्रोद्धारस्य कार्याय मन्ये क्रीतोऽस्मि तैरहम् ॥ २३ ॥

श्रुत्वेदं वचनं दिव्यं गभीरं तिलकाननात् ।
सगद्‌गदं वै श्रोतारो धन्योऽयमिति चाब्रुवन् ॥ २४ ॥

सभा स्वराज्यसंघस्य तदान्येद्युर्बभूव ह ।
सदने तिलकस्यैव चतुर्थी प्रतिवार्षिकी ॥ २५ ॥

वर्षे कृतस्य कार्यस्य तथैवायव्ययस्य च ।
संघस्य कार्यवाहेण वृत्तमादौ निवेदितम् ॥ २६ ॥

निर्वाचनं कृतं पश्चाद् नूतनपदाधिकारिणाम् ।
बालेन लिहितं पत्रं घोषणायाश्च संमतम् ॥ २७ ॥

शिष्टमण्डलकार्यस्य कृतं चैवाभिनन्दनम् ।
कार्यस्यामेरिकायां च हरडीकरलालयोः ॥ २८ ॥

नूतननिर्वाचनस्यार्थे मुम्बईकौन्सिलस्य हि ।
निश्चेतुमिच्छुकान् योग्यान् करंदीकरवेलवी-
बालवैद्यादिनेतृणां नियुक्ता समितिस्तदा ॥ २९ ॥

तिलकेन कृतं पश्चात् समारोपस्य भाषणम् ।
सदस्येभ्यः स्वपक्षस्य ध्येयमार्गप्रदर्शकम् ॥ ३० ॥

वैशिष्ट्यं भाषणस्यास्य यदिदं वै किलान्तिमम् ।
राजनीतेश्च विषये बालस्य क्रान्तदर्शिनः ॥ ३१ ॥

परिपक्वविचाराणां सारं स्वानुभवस्य च ।
अतश्चाहं प्रवक्ष्यामि संक्षेपेण यथामति ॥ ३२ ॥

कृताः स्वराज्यसंघस्य विरुद्धास्तद्विरोधिभिः ।
आक्षेपाः खण्डनं तेषामसंदिग्धगिरा कृतम् ॥ ३३ ॥

प्रातिनिध्येन ये प्रेष्याः सदस्या नवकौन्सिले ।
तन्नियुक्तौ न कर्तव्यो विचारो जातिधर्मयोः ॥ ३४ ॥

निकषः स्याच्छासनस्य प्रतिद्वन्द्वित्वमेव तु ।
परराष्ट्रेषु चेंग्लंडे प्रचारोऽवश्य एव च ॥ ३५ ॥

पुरतो राष्ट्रसंघस्य राष्ट्रकल्याणकाङ्क्षिणः ।
हिन्दराष्ट्रहितप्रज्ञा निहितव्या निरन्तरम् ॥ ३६ ॥

संगच्छध्वं संवदध्वं संयतध्वं सुसंहतम् ।
स्वातन्त्र्यप्राप्तये यूयं पारतन्त्र्यविमुक्तये ॥ ३७ ॥

प्रतस्थे स्वानुगैर्बालो मुम्बापुरमनन्तरम् ।
पआयूसीसीसभार्थं च गन्तुं वाराणसीपुरीम् ॥ ३८ ॥

ऊनत्रिंशे च दिवसे मेमासे पुरमन्दिरे ।
व्याख्यानमभवत् तस्य वाराणस्याः सुविश्रुते ॥ ३९ ॥

दिनेऽपरे वै बालाय गङ्गापुत्राश्च पण्डकाः ।
समार्पयन् मानपत्रं संस्कृतं जाह्नवीतटे ॥ ४० ॥

जगाम तिलको द्रष्टुं सनिर्बन्धं निमन्त्रितः ।
काशीक्षेत्रस्थिताः संस्था जूनस्य प्रथमे दिने ॥ ४१ ॥

तस्मिन्नेव दिने सायं ब्रह्मघाटेतिसंज्ञके ।
स्थाने भागीरथीतीरे व्याख्यानं तिलको ददौ ॥ ४२ ॥

वाराणसीपौरजना मानपत्रं तदार्पयन् ।
वेदत्रयीपारगाय तिलकाय च संस्कृतम् ॥ ४३ ॥

समाप्य कार्यं तत्रत्यं प्रतस्थे तिलकस्ततः ।
जबलपूरं तदा मार्गे गणेशेन ययौ सह ॥ ४४ ॥

जबलपुरात् पुण्यपुरीमाययौ तिलको यदा ।
एकस्मिन्नप्रिये वादे बलाद्रावेष्टितस्तदा ॥ ४५ ॥

विषये पर्सफंडस्य वादः प्रोत्थापितः कटुः ।
कोल्हट्करेणाच्युतेन बालस्यैवानुयायिना ॥ ४६ ॥

अच्युतोऽसौ महान् वक्ता पत्रकारश्च लेखकः ।
संपादको दैनिकस्य संदेशाख्यस्य विश्रुतः ॥ ४७ ॥

होमरूलप्रचारार्थं विदर्भांस्तिलको ययौ ।
व्याख्यानानि यदा कर्तुं तदा तेषां प्रकाशनम् ॥ ४८ ॥

लोकप्रियं सुरम्यं च स्वपत्रे कृतवानसौ ।
गृहे गृहे महाराष्ट्रे संदेशः पठितोऽभवत् ॥ ४९ ॥

मतिच्युतो दुर्विपाकाद् दैवस्येवाच्युतोऽभवत् ।
विषये पर्सफंडस्य मिथ्यारोपांश्चकार सः ॥ ५० ॥

स्वस्य पक्षस्य केषांचिद् जनानां तिलकस्य च ।
विरुद्धान् वै निजे पत्रे वचनैरतिकुत्सितैः ॥ ५१ ॥

नेतृभिः प्रतिपक्षाणामप्यारोपा न ये कृताः ।
दृष्ट्वा कृतांस्तादृशान् वै स्वपक्षस्यानुयायिना ॥ ५२ ॥

स्वभावतोऽभवद् बालो दुःखितोऽतीव मानसे ।
निरुपायं निष्ठिकायारोपाणां खण्डनं खलु ।
यतोऽन्यथा लोकचित्तं संशयेनाकुलं भवेत् ॥ ५३ ॥

प्रारब्धस्यान्तगमनं स्वभावस्तस्य मूलतः ।
अप्रियस्यास्य वादस्य तथान्तस्तेन वै कृतः ॥ ५४ ॥

यः पूजितो नैकजनैर्धनेन
यो निन्दितस्त्वेकजनेन भूयः ।
पूजा च निन्दा च समा हि यस्य
तं लोकमान्यं तिलकं नमामि ॥ ५५ ॥

इति माधवविरचिते श्रीतिलकयशोऽर्णवे द्रव्यनिधिसमर्पणनामा
चतुरशीतितमस्तरङ्गः ।

# पञ्चाशीतितमस्तरङ्गः

स्वराज्यसंघस्यैवासीदन्तिमायां पुणेपुरे ।
सभायां तिलकेनोक्तं क्षीणा मे सर्वशक्तयः ॥ १ ॥

ज्वरेण सन् पीडितोऽपि नित्यं मग्नः स लेखने ।
प्रार्थिपत्रोत्तरस्यासीत् प्रायः पञ्चदशान् दिनान् ॥ २ ॥

प्रार्थिपत्रमिदं दत्तं श्रेष्ठे न्यायस्य मन्दिरे ।
मुम्बाप्रान्तस्य कर्वीरसंस्थानस्याधिपेन ह ॥ ३ ॥

तथा बालापण्डितेन ताईप्रकरणे खलु ।
पूर्वग्रन्थे मया वृत्तं दत्तं तस्य सुविस्तृतम् ॥ ४ ॥

प्रार्थिपत्रोत्तरं दातुं बालो मुम्बापुरीमगात् ।
दिवसे द्वादशे जूलैमासस्यापि ज्वराहतः ॥ ५ ॥

उत्तरं लिखितं तेन कौशल्यातिशयेन तत् ।
प्रशस्यते स वाक्कीलैर्विधिशास्त्रविशारदैः ॥ ६ ॥

एकविंशे दिने स्पष्टो निर्णयो न्यायमन्दिरे ।
तिलकस्यानुकूलोऽभूत् सत्यस्य विजयः खलु ॥ ७ ॥

प्रियो मानसपुत्रो यस्तिलकेनात्मनो मतः ।
जगन्नाथः स्थिरपदो जातो वै निर्णयात् ततः ॥ ८ ॥

अत्यानन्दो निर्णयेन लोकमान्यस्य मानसे ।
अहो तद् रुचिरं सर्वं यस्यान्तो रुचिरो भवेत् ॥ ९ ॥

ताईप्रकरणं चैतदन्ते बालयशस्करम् ।
परं तद् भारतस्यार्थे परमं शोकदायकम् ॥ १० ॥

म्रियाणः श्रीगमन्लालस्तिलकं ज्वरपीडितम् ।
यदृच्छया दिने विंशे मुम्बय्यां द्रष्टुमागतः ॥ ११ ॥

भारतश्रमिसंघस्योपाध्यक्ष्यं तिलकेन वै ।
स्वीकर्तव्यं चमन्लालः प्रार्थयामास साग्रहम् ॥ १२ ॥

तिलकः संमतिं दत्त्वा सगद्गदगिराब्रवीत् ।
प्रेम मद्विषये पूर्वं व्यक्तं यच् श्रमिकैः पुरा ॥ १३ ॥

मम कारादण्डकाले तदद्यापि स्मराम्यहम् ।
अतस्तेषां हितस्यार्थे तीव्रेच्छा मम विद्यते ॥ १४ ॥

विषयेऽसहकारस्याभवच् चर्चा तयोस्तथा ।
स्पष्टं प्रदर्शितं तस्मै तिलकेन मनोगतम् ॥ १५ ॥

विषयेऽसहकारस्य मतद्वैधं न विद्यते ।
तस्य प्रयोगरीत्यां तु मतभेदो भवेत् खलु ॥ १६ ॥

बहिष्कारः कौन्सिलस्याप्यव्यहार्यश्च निष्फलः ।
तदर्थमखिलाः पक्षा यावत् संघटिता न वै ॥ १७ ॥

जनानां पुरतो नेता नातिदूरः कदाचन ।
स्वल्पान्तरं वर्तितव्यं तेन तेषां पुरः सदा ।
सह नेतुं तदा शक्यं तस्यास्ति स्वानुयायिनः ॥ १८ ॥

संघशक्तेरभावे तु ध्येयमुच्चं निरर्थकम् ।
राजनैतिकसिद्धान्तश्चिरकालाबाधितः खलु ॥ १९ ॥

राजनीतेः सारमेतत् प्रोक्तं बालेन मन्यते ।
परिपक्वं स्वानुभूतेः फलमेव ह्यसंशयम् ॥ २० ॥

इदं सर्वं चानुभूतं भविष्यद्राजकारणे ।
धुरीणैर्भारतीयानां सर्वेषां ज्ञातमेव तत् ॥ २१ ॥

स्वल्पज्वराभिभूतोऽपि ततो विद्युद्रथस्थितः ।
चमन्लालाग्रहाद् बालो भ्रमणार्थमगाद् बहिः ॥ २२ ॥

परिश्रमेण चानेन ज्वरोऽवर्धत वै तदा ।
बालोऽसौ शायितस्तेन प्रहर्तुं नाप नो पुनः ॥ २३ ॥

शीतज्वरोऽस्तीति मत्वा भिषग्वर्या अकुर्वत ।
तस्यैव प्रतिबन्धाय योग्यामौषधयोजनाम् ॥ २४ ॥

कफवातज्वरस्यैव दृष्ट्वा चिह्नान्यनन्तरम् ।
औषधानि ददुर्वैद्यास्तद्रोगस्य निवारणे ॥ २५ ॥

अभूदधोभागशोफः फुप्फुसस्य तदा किल ।
आध्मानश्च ततः पश्चाद् हिध्मोदावर्त एव च ॥ २६ ॥

दशमेऽह्नि ज्वरस्तस्य चतुरूर्ध्वशतादहो ।
अंशप्रमाणादधिकः स चिन्ताविषयोऽभवत् ॥ २७ ॥

सप्तविंशे जुलैमासे स्वल्पघर्मसमुद्गमम् ।
दृष्ट्वाशा भिषजां जाता ज्वरः क्षीणो भवेदिति ॥ २८ ॥

अन्ते किल सुनिष्पन्नं ज्वरोऽयं बाह्यलक्षणम् ।
निदानं तस्य रोगस्य शक्तिपातस्तु केवलम् ॥ २९ ॥

अतस्तत्प्रतिबन्धाय वैद्यैरगदयोजना ।
नानाविधा कृतोत्कृष्टा किंतु सैव निरर्थका ॥ ३० ॥

अस्यां दशायां बालस्य सप्ताष्टदिवसावधौ ।
मुम्बापुर्या भिषग्वर्यास्तथा तज्ज्ञाश्च वैद्यकें ॥ ३१ ॥

तनुस्वास्थ्याय बालस्य दिनरात्रं प्रयेतिरे ।
दृष्टा तेषां प्रयत्नेषु न काचिद् न्यूनता खलु ॥ ३२ ॥

अत्यन्तादरभावेन प्रेम्णा राष्ट्रगुरोस्तथा ।
भगीरथप्रयत्नास्तैः कृताः स्वास्थ्याय तत्तनोः ॥ ३३ ॥

स्वयंसेवाजनाश्चापि दयस्यार्थमहर्निशम् ।
अतीव तत्परा आसन् बालभक्त्या हि केवलम् ॥ ३४ ॥

पराकाष्ठा प्रयत्नानां श्रमाणां बालकैः कृता ।
तनुस्वास्थ्याय बालस्य सरदारगृहस्य च ॥ ३५ ॥

किंतु सर्वैः कृता यत्नाः पूर्णांशेनैव निष्फलाः।
गीतोचितरभवत् सार्थो दैवमेवात्र पञ्चमम् ॥ ३६ ॥

श्रुत्वा तस्यास्वास्थ्यवार्तामाप्तेष्टाश्च सुहृज्जनाः।
समीपस्थाश्च दूरस्था नैके तं द्रष्टुमागताः ॥ ३७ ॥

ये केऽपि विरलास्तेषां सुदैवाद् योगमाप्नुयन्।
स्वल्पाल्पमपि बालेन सह कर्तुं च भाषणम्।
भाग्यवत्तरतदात्मानममन्यन्ताप्यसंशयम् ॥ ३८ ॥

जुलैमासे सप्तविंशे रुग्णावस्था भयावहा।
संज्ञालोपोऽपि बालस्याभवत् किल शनैः शनैः ॥ ३९ ॥

उदावर्तोद्भवो जात एकत्रिंशे दिने ततः।
प्रथमप्रहरादूर्ध्वं रजन्यां शनिवासरे ॥ ४० ॥

तृतीयप्रहरादूर्ध्वं जातमुत्तापकारणम्।
भिषग्वराणां सर्वेषामाशा नष्टाखिला खलु ॥ ४१ ॥

रुग्णो न मानवाधीन ईशाधीनस्ततः परम्।
इति तैः सूचितं सर्वैर्भिषग्वर्यमहोदयैः ॥ ४२ ॥

दूरध्वनेश्च यन्त्रस्य तद्दिने शनिवासरे।
एकमेवाभवत् कार्यं पृच्छकेभ्यः पुनः पुनः।
जनेभ्यो रुग्णवृत्तस्य वारंवारं निवेदनम् ॥ ४३ ॥

प्रकृतेर्विषये तस्य वृत्तान्तो मुद्रितोऽभवत्।
प्रत्यहं हस्तपत्रेषु दैनिकेषु तथैव ह ॥ ४४ ॥

मध्यरात्रिर्गतायाता कालरात्रिरनन्तरम्।
आयुष्यस्तिलकस्यापि संप्राप्तश्चान्तिमः क्षणः ॥ ४५ ॥

प्रथमे प्रहरे रात्र्या अशुभे रविवासरे।
आगस्टस्य दिने चाद्ये पञ्चत्वं तिलको गतः ॥ ४६ ॥

एकोनविंशशतके विंशेऽब्देऽत्यशुभे किल ।
लुप्तं तिलकतेजोऽभूद् घोरराज्यास्तमोऽम्भसि ॥ ४७ ॥

विधाता भारतीयानां भाग्यस्य तिलको गतः ।
देवदत्ता तनुस्तस्य देवाधीनाभवत् पुनः ॥ ४८ ॥

विशालो मृत्युरेवापि विशालपुरुषस्य वै ।
विशालो मृत्युरेवापि तिलकस्याभवत् तथा ॥ ४९ ॥

मृत्युयात्रापि बालस्य विशालालौकिका तथा ।
स्मरणीया चिरं कालं दुःखेऽपि स्फूर्तिदायिनी ॥ ५० ॥

मम वाग् दुर्बला वक्तुं लेखनी लिखितुं मम ।
मृत्योर्बालस्य वार्तायां वृत्तं साग्रं यथोचितम् ।
तस्यास्थीनां प्रवेशस्य पुण्यपुर्यां च वर्णनम् ॥ ५१ ॥

तथापि क्रियते यत्नो यथाशक्ति मया किल ।
दृष्टा चेद् न्यूनता काचित् क्षन्तव्या सुज्ञपाठकैः ॥ ५२ ॥

उषःकालात् पूर्वमेव मुम्बापरिसरे तदा ।
मृत्योः प्रसर्तुमारेभे वार्ता बालस्य दुःखदा ॥ ५३ ॥

पुणेपुरे प्रेषिता सा विद्युद्यन्त्रेण तत्क्षणम् ।
अन्त्ययात्रामुपस्थातुं पुणेनगरवासिनाम् ।
भवेदागन्तुकामानां शक्यमित्येव हेतुना ॥ ५४ ॥

आयान्त्यगणिता लोका अन्त्यदर्शनहेतुना ।
सरदारगृहद्वारं तस्माद् वै पिहितं तदा ॥ ५५ ॥

स्थित्वापि राजमार्गे स्याज् जनानां बालदर्शनम् ।
बालस्य निहितो देहो हेतुनानेन चालकैः ॥ ५६ ॥

सरदारगृहस्योर्ध्वतमे भागे पुरःस्थले ।
काष्ठासने चतुष्कोणे पद्मासन इव स्थितः ॥ ५७ ॥

ऊर्णयस्त्राधृतश्चैव कृतभस्मावलेपनः ।
परतत्त्वं ध्यायमानो महर्षिर्ब्रह्मणि स्थितः ॥ ५८ ॥

पुणेपुरादागतैश्च जनैरस्याग्रहः कृतः ।
लोकमान्यशवं नेतुं दहनाय पुणेपुरम् ।
अन्ते तु निश्चिता सर्वैर्मुम्बय्यामुत्तरक्रिया ॥ ५९ ॥

ततः प्रश्नः समुत्पन्नः कुत्र स्यादौर्ध्वदेहिकम् ।
चर्चान्ते संमतं योग्यं चौपाटीसंज्ञितं स्थलम् ।
सिन्धोस्तटे सुविस्तीर्णं विशालं वालुकामयम् ॥ ६० ॥

प्रातःकालात् पूर्वमेव मृत्योर्बालस्य वार्तया ।
मुम्बापुर्यां जनैः सर्वैः स्वोद्यमाः स्थगिताः कृताः ॥ ६१ ॥

पण्यानि पिहितान्येव तथोद्योगगृहाणि च ।
राष्ट्रदेवे लोकमान्ये भक्तिप्रेमादरैः किल ॥ ६२ ॥

मुम्बानगर्यां सर्वत्र मार्गे मार्गे स्थिता जनाः ।
वार्तां वदन्तः शृण्वन्तः पठन्तो दुःखसंकुलाः ॥ ६३ ॥

मुम्बापुरी मोहपुरी जाता शोकपुरी तदा ।
दिङ्मूढाः सकला आसन् जना बालस्य मृत्युना ॥ ६४ ॥

जनाकीर्णो राजमार्गः सरदारगृहान्तिकः ।
पद्भ्यां वा समूहेन दर्शनायाययुर्जनाः ॥ ६५ ॥

सौधस्थितां बालमूर्तिं दृष्ट्वा मार्गस्थिता जनाः ।
भक्त्या राष्ट्रगुरुं चक्रुर्वन्दनं साश्रुलोचनम् ॥ ६६ ॥

श्मशानयात्रारम्भो मध्याह्नानन्तरं भवेत् ।
इत्यासीत् खलु सर्वेषां विदितं पूर्वमेव ह ॥ ६७ ॥

सर्वेषां दर्शनायैव शवयाने तदासनम् ।
शार्ङ्गादुच्चं शोभितं च पुष्पहारैः सुगन्धिभिः ॥ ६८ ॥

पवित्रो निहितो देहस्तिलकस्यासने यदा ।
हाहाकारः कृतो लोकैरसंख्यैर्मिलितैस्तदा ॥ ६९ ॥

परितः शवयानं वै पुरमुख्याः स्थिता जनाः ।
धुरीणाः सर्वजातीनां परपुर्यागतास्तथा ॥ ७० ॥

पुरो भजनमेलाश्च तालिकावाद्यसंयुताः ।
ततो नानावाद्यकाश्च ततो दुन्दुभिधारिणः ॥ ७१ ॥

शवासनं च प्रथमं हिन्दुमुस्लीमनेतृभिः ।
ऊढमेव स्वल्पकालं क्रमशो व्यक्तुमादरम् ॥ ७२ ॥

उत्सुका नरनार्यश्च मार्गे मार्गे गृहोपरि ।
समूहेन स्थिताश्चक्रुः पुष्पवृष्टिं शवोपरि ॥ ७३ ॥

मेघराजोऽपि पर्जन्यवृष्टिं चक्रे पुनः पुनः ।
अभिव्यक्तुं लोकराजे परमादरमात्मनः ॥ ७४ ॥

सायंकाले च चौपाटीं शवयात्रागता यदा ।
लक्षाधिकजना आसन् मिलितास्तत्र वै तदा ॥ ७५ ॥

चिता चन्दनकाष्ठानां रचिता तदनन्तरम् ।
निहितो लोकमान्यस्य तस्यां वै देह उत्तमः ॥ ७६ ॥

भाषणानि कृतान्यासन् बहुभिर्नेतृभिस्ततः ।
तिलकस्य यशोगानं कृतं तैः परमादरात् ॥ ७७ ॥

ततः कृतोऽग्निसंस्कारस्तिलकस्य महात्मनः ।
पञ्चभूतागतो देहः पञ्चभूतगतः पुनः ।
अलौकिकः प्रसङ्गोऽयं न भूतो न भविष्यति ॥ ७८ ॥

यस्य स्मृत्या च नामोक्त्या पवित्रं सकलं भवेत् ।
अभूत् पवित्रा चौपाटी तनोस्तस्यैव धारणात् ॥ ७९ ॥

अहो भाग्यं च चौपाट्या अधुना दहनस्थले ।
स्फूर्तिदा लोकमान्यस्य महामूर्तिर्विराजते ॥ ८० ॥

विश्वेऽखिले भारतस्य माहात्म्यप्रतिपादिनी ।
उद्घोषिणी च तत्त्वस्य 'यतो धर्मस्ततो जयः' ॥ ८१ ॥

क्षेत्रे कुमार्यां हिन्दस्य धर्मवीरो विराजते ।
मुम्बापुरस्य चौपाट्यां राष्ट्रवीरो विराजते ॥ ८२ ॥

उभयोरपि संदेश एकोऽपि द्विः प्रदर्शितः ।
धर्मे प्रतिष्ठितं राष्ट्रं राष्ट्रे धर्मः प्रतिष्ठितः ॥ ८३ ॥

यद्यासील् लोकमान्यस्य मुम्बय्यामौर्ध्वदेहिकम् ।
तथापि निश्चितं तत्रागतैः पुण्यपुरीजनैः ।
तस्य पुण्यास्थीनि नेतुं संमानेन पुणेपुरम् ॥ ८४ ॥

यद्वियानविशेषेण यालास्थीनि पुणेपुरम् ।
उपस्येव धरासूनोर्नेतुं ते प्रस्थिता दिने ॥ ८५ ॥

अग्नियानं यदा प्रातः पुण्यस्थानकमागतम् ।
स्थाने सुरक्षितं नीतं स्थानकस्याधिकारिभिः ॥ ८६ ॥

जनैस्तत्रागतैः कृत्वा जयघोषं नभःस्पृशम् ।
संमानपूर्वकं प्रेम्णा कृतं पुण्यास्थिवन्दनम् ॥ ८७ ॥

रथमध्ये स्थापितायां शिबिकायामनन्तरम् ।
निहितासीदस्थियुक्ता पुण्या चन्दनपेटिका ॥ ८८ ॥

पीनांशुकृतं छत्रं शिबिकायां व्यराजत ।
तिलकस्य स्थितौ पुत्रौ तत्र चामरधारिणौ ॥ ८९ ॥

स्थानकात् प्रस्थिता यात्रा प्रवेष्टुं पुण्यपत्तने ।
आसन्ननवघण्टायां प्रभाते भौमवासरे ॥ ९० ॥

स्थाने स्थानेऽस्थिसत्कारोऽभवत् प्रेम्णादरेण च ।
अर्पिता नरनारीभिः पुष्पमालाः पदे पदे ।
मेघराजोऽपि संमानमकरोद् वृष्टिनाम्बुनः ॥ ९१ ॥

उच्चस्वरेण वै गीता अभङ्गाः साधुभिः कृताः ।
ज्ञानदेवादिकैर्भक्त्या वारीकरजनैस्तदा ॥ ९२ ॥

शिरोवस्त्रविहीनाश्च पादत्राणैर्विना तथा ।
यात्रायां मिलिता लोकाः संमानार्थं मृतस्य वै ॥ ९३ ॥

अतिमन्दा गतिस्तस्याः संरुद्धा च स्थले स्थले ।
घण्टाचतुष्टयात् प्राप्ता लोकमान्यगृहं प्रति ॥ ९४ ॥

जनैः सर्वैर्नमस्कृत्य चाश्रुपूरितलोचनैः ।
कृतं राष्ट्रगुरोरन्त्यमस्थिरूपस्य दर्शनम् ॥ ९५ ॥

मुम्बापुरीं गन्तुकामो जुलय्या द्वादशे दिने ।
सदेहस्तिलको नूनं प्रतस्थे सदनाद् निजात् ॥ ९६ ॥

दिने तृतीये त्वागस्टे तिलकः पुण्यपत्तने ।
अङ्गुष्ठमात्रदेहेन न्यवर्तत निजं गृहम् ॥ ९७ ॥

अगाद् मुम्बापुरीं बालो वाहयस्त्रैः समावृतः ।
धृत्वा चिताभस्मरूपमागात् पुण्यपुरीं पुनः ॥ ९८ ॥

अनन्तरं रामचन्द्रस्तिलकस्याग्रजः सुतः ।
तथा कनिष्ठो जामाता बालस्यास्थीनि निन्यतुः ॥ ९९ ॥

क्षेत्रे प्रयागे तत्रस्थे कृतं तेषां विसर्जनम् ।
त्रिवेणीसंगमे पूते ताभ्यां च विधिपूर्वकम् ॥ १०० ॥

लुप्तोऽभूद् मृण्मयो देहश्चिन्मयः स्वस्थलं गतः ।
स्मृतिमात्रस्थितो बालो हिन्दमानसमन्दिरे ॥ १०१ ॥

एवं समाप्तं चरितं लौकिकं चाप्यलौकिकम् ।
तेजोमयं राष्ट्रकर्तुस्तिलकस्य प्रभावयत् ॥ १०२ ॥

मङ्गलं स्फूर्तिदं श्रेष्ठं राष्ट्रयोरोत्तमस्य ह ।
प्रज्ञापारमितस्यैव कर्मयोगिवरस्य च ॥ १०३ ॥

लोकोत्तरविभूतेश्च स्थितप्रज्ञस्य पावनम् ।
सदा सेव्यं राष्ट्रभक्तैर्विद्वद्भिर्ज्ञानिभिस्तथा ॥ १०४ ॥

नमोऽस्तु लोकमान्याय बालाय च नमो नमः ।
नमो भारतरत्नाय तिलकाय नमो नमः ॥ १०५ ॥

विधातुर्हिन्दराष्ट्रस्य लोकमान्यस्य मृत्युना ।
भारतीया जनाः सर्वे निमग्नाः शोकसागरे ॥ १०६ ॥

नेतारः सर्वपक्षाणां प्रमुखास्तस्य चक्रिरे ।
चरितस्य यशोगानं स्फूर्तिदं पावनं परम् ॥ १०७ ॥

स्तुतिशब्दैरहो तेषामहमद्यादराञ्जलिम् ।
अर्पये राष्ट्रदेवाय तिलकाय महात्मने ॥ १०८ ॥

यः शिल्पकारः खलु भारतस्य
भाग्यस्य हिन्दस्य तथा विधाता ।
एवं स्तुतः श्रीअरविन्दघोषैः
श्रेष्ठं नृणां तं तिलकं नमामि ॥ १०९ ॥

यः शासने केवललोकतन्त्रे
श्रद्धां हि चक्रे खलु लोकनेता ।
यो गान्धिना गौरवितः सुशब्दै-
र्लोकोत्तरं तं तिलकं नमामि ॥ ११० ॥

स्वात्मनां श्रेष्ठतमो नृसिंहो
लालाजिना गौरवितः सुधीर्यः ।
पंजाबसिंहेन च मालवीयैः
स्वातन्त्र्यमूर्तिं तिलकं नमामि ॥ १११ ॥

भूयो जगच्छ्रेष्ठजनेषु पूज्यः
　श्रीशारदाकण्ठमणिः स एकः।
एवं स्तुतः शास्त्रिमहोदयैर्य-
　स्तं ज्ञानराजं तिलकं नमामि ॥ ११२ ॥

यो भारतस्यानभिषिक्तराजः
　गीतो रवीन्द्रेण महर्षिणेति।
काव्येषु यः कोकिलया तथैव
　तं लोकमान्यं तिलकं नमामि ॥ ११३ ॥

स्नेहं दयामाप्तजनान् सुखं च
　तत्याज यो वै जनरञ्जनार्थम्।
आयुर्व्यतीयाय च राष्ट्रकार्ये
　तं त्यागिराजं तिलकं नमामि ॥ ११४ ॥

असंतोषस्यायं जनक इति निन्दा स्तुतिरभूज्
　जनानां हिन्दस्याभवदनभिषिक्तो नरपतिः।
मतो होतास्यस्य प्रथिततम आदर्श इति यो
　नमस्कुर्वे यालं तिलककुलरत्नं नरवरम् ॥ ११५ ॥

यावच्चन्द्रदिवाकरं तव यशोगानं महाभाग भो
　भक्त्यानन्दभरेण वीरचरितस्यात्यन्तपुण्यप्रदम्।
सर्वे भारतवासिनो निशि दिने दिव्यं महास्फूर्तिदं
　कुर्वन्तीति किमत्र चित्रममरैर्गेयं चरित्रं तव ॥ ११६ ॥

इति माधवात्रेरचिते श्रीतिलकयशोऽर्णवे लोकमान्यपरलोकयात्रानामा
पञ्चाशीतितमस्तरङ्गः।

इति श्रीतिलकयशोऽर्णवः समाप्तः।

# टिप्पण्यः

[ अधोनिर्दिष्टेषु अङ्कद्वयेषु प्रथमः अङ्कः तरङ्गनिर्दर्शकः द्वितीयश्च श्लोकनिदर्शकः ]

४२. ६८

विश्वविद्यालयप्रशासमण्डलम् — University Commission इति आङ्ग्लभाषायाम्।

४२. ९८

हरेः — हरिः इति सिंहः। सर फेरोजशाहा मेथा इत्येनम् उद्दिश्य अयं शब्दः नियोजितः। 'Lion of Bombay'.

४३. ४

अभिनन्दनसद्देश°— अभिनन्दनसंदेश° इति शुद्धम्।

४३ १७

रीपव्हान्विंकलोपमः — वॉशिंग्टन आयर्व्हिङ्गकृतायाः कथायाः Rip Van Winkle इति विख्यातं नामधेयम्। तत्कथायाः अयं नायकः। स विंशतिं वर्षाणि सुष्वाप। सुप्तोत्थितः स सर्वमपि जगत् सर्वथैव नवमिव अपश्यत्। लोकमान्यः दीर्घकारावासानन्तरं सर्वं विसंदर्भमिव ददर्श।

४३ ५१

श्वेतद्वीपस्य— श्वेतद्वीपम् आङ्ग्लभूमिरिति।

४३ ७०

मुंबईलाटा— मुंबई इलाखा इति। Bombay Presidency.

४३ ८८

वेणावरद्वयोस्तीरे गोदाप्रणितयोः— वेणा, वरदा, गोदावरी, प्रणिता इत्येताः नद्यः।

४३ ९९

कीरहार्डिम्— कीर हार्डिः आङ्ग्लदेशस्य लोकसभायाः प्रख्यातः सदस्यः। समिति।

४३ १०१

मण्टनाडे— मण्टनामकः आङ्ग्लदेशशासकैः भारतवर्षविषये नियुक्तः अधिकारी, Secretary of State for India, इति।

४४. १२

ईरी— आयर्लैंड, Ireland.

४४. ५१

मित्रसंघसमाविष्टाः— इंग्लंड-फ्रान्स-अमेरिकादीनि मित्रराष्ट्राणि, 'Allies,' इति ।

४४. ६४

तीव्रपक्षानुयायिनाम्— तीव्रपक्षः जहालपक्ष इति नाम्ना लोके प्रसिद्धः तद्विरोधी नेमस्तपक्षः। तीव्रपक्षस्य ये अनुयायिनः तेषामिति। तीव्रपक्षः —Extremists ; नेमस्तपक्षः— Moderates.

४४ ६६

चिरोललिखिते— सर व्हॅलेंटाइन चिरोल इतिनाम्ना लंडन टाइम्स वृत्तपत्रस्य वार्ताहरेण 'Indian Unrest' ( भारतस्यः असंतोषः ) इति ग्रन्थः लिखितः। तस्मिन् ग्रन्थे तेन लोकमान्यः 'भारते असंतोषस्य जनकः', ( Father of Indian Unrest ) इति वक्रोक्त्या वर्णितः।

४५. २

कन्व्हेन्शन्— नेमस्तैः सुरताधिवेशनानन्तरं स्थापितायाः सभायाः नाम ।

४५. ५

घोषः—अमृतबझारनामकस्य वृत्तपत्रस्य संपादकः मोतीलालबाबू घोषः इति। हिंदुनामकस्य वृत्तपत्रस्य संपादकः कस्तूरीरंग अय्यर इति। प्रयागनिवासी सी. वाय. चिंतामणिः इति विख्यातः लीडरनामकस्य वृत्तपत्रस्य संपादकः।

४५ २१

जमशेदाख्येन—सर जमशेटजी जिजीभाई इतिनामा प्रसिद्धः उद्योगपतिः, तेन ।

४५. ३८

वसुः— राष्ट्रीयसभायाः मद्रासस्थाधिवेशनस्य ( १९१४ ) अध्यक्षः भूपेन्द्रनाथः वसुः इति।

४५ ४५

वासन्ती— डॉ. ॲनी बिझांट इति ।

४६ १

सौम्योग्रपक्षयोः— सौम्यः पक्षः नेमस्तपक्षः, उग्रः पक्षः, जहालपक्षः, तयोरिति।

४६. २५

गोमयम्— महाराष्ट्रभाषायां गवरी इति उच्यते। शवदहनकार्यार्थं उपयोजितं इन्धनमिति ।

४६. ३०

ताम्राणाम्— ताम्रमुखा ब्रिटिशाः, तेषाम्।

४६. ३१

शास्त्रिणः— भारतसेवकसमाजस्य अध्यक्षः श्रीनिवासशास्त्री इति ख्यातः । स नेमस्तपक्षनेता आङ्ग्लभाषाप्रभुः ख्यातः वक्ता च ।

४६. ३२

विलिंग्डनः— विलिंग्डन इति मुम्बईप्रान्तस्य तत्कालीनः ( १९१६–२० ) राज्यपालः ।

४६ ३९

गडस्थम्— सिंहगडस्थम् इति ।

४७. [illegible]

पारसीटाटा— पारसीकधर्मानुयायी जमशेटजी टाटा इतिनामा विख्यातः उद्योगपतिः ।

४७. ३५

दिन्शैदल्जी— दिनशा एदलजी वाच्छा इतिनामा अर्थशास्त्रज्ञः नेमस्तनेता च ।

४७. ३९

कोष्णपन्थानुयायिनाम्— नेमस्तपक्षानु° ।

४७. ५२

थाप्याम्— पारसीकानां मृतदेहाः थाप्यां निधीयन्ते ।

४८. ६

आलियोपाथिमर्मज्ञः— आलियोपाथी इति रोगविज्ञानपद्धतिः, तस्याः मर्मज्ञः इति ।

४८. ४९

म्रियते काकशापाद् न चतुष्पात्— महाराष्ट्रभाषायां “ कावळ्याच्या शापाने ढोर मरत नाहीं ” इति आभाणकः । तस्य संस्कृतभाषायाम् अयम् अनुवादः ।

४९. २४

गोपपाटाख्ये— गायकवाडाख्ये ।

४९. २९

विद्यमानमहाराष्ट्र्याम्— अर्वाचीनायां मराठीभाषायाम् ।

५०. ३७

ब्लाव्हटास्किः— ब्लाव्हटस्कीनाम्नी ब्रह्मविद्यायाः ( थिऑसफी ) प्रमुखप्रणेत्री ।

५०. ३८

अल्काटस्य— कर्नेलअल्काटनामकः ब्रह्मविद्यायाः अनुयायी ।

५०. ४२

टीगोचरं होमरुलम्— होमरूल्लीगनामा स्वराज्यसंघः ।

५१. ७

विल्वग्रामे— महाराष्ट्रभाषायां बेळगांव इति ख्यातं नगरम् ।

५१. ८

गणेशाय— श्री. गणेश श्रीकृष्ण खापर्डे इति । तस्मै ।

५१. ९

हार्डिंज— हार्डिंज इति आङ्ग्लभूपतेः भारतप्रतिनिधिः ।

५१. १०

गोखले— दामोदर विश्वनाथ गोखले इति ।

५२. ७७

वसाहतस्वराज्यस्य— Dominion Status इति आङ्ग्लभाषायाम्, तस्य ।

५३. ९३

चितळे— अहमदनगरस्थः सुप्रसिद्धः अधिवक्ता रावबहादूर गणेश कृष्ण चितळे इति ।

५३. १०९

भारकक्षे— Cloak Room इति आङ्ग्लभाषायाम्, तस्मिन् ।

५३. १२९

रामशास्त्रिणा— शिवरामशास्त्री गोरे इत्येतेन ।

५३. १४१

काशीनाथः— काशीनाथ वामनशास्त्री लेले इतिनामकः महापण्डितः ।

५३. १५६

द्यपचारो— ह्युपचारो इति शुद्धम् ।

५४. ४

स्व० संघस्य— स्वराज्यसंघस्य ।

५४. २०

पुण्यपुर्न्यायमन्दिरे— पुणेनगरन्यायमन्दिरे ।

५४. ६४

स्ट्राचीकृताप्रीतिटीका— आर्थर स्ट्राची नाम मुंबईश्रेष्ठन्यायालयस्य न्याया-धीशः । तेन कृतं अप्रीतिशब्दस्य यत् स्पष्टीकरणं तत् स्ट्राचीकृता अप्रीतिटीका इति ।

५५. २८

साठेऽभिधैः — मुम्बईनिवासी नेत्ररोगचिकित्सकः डॉ. दिनकर धोंडो साठे इत्येतैः ।

५५. ७१

खरावरणं— Motor Tyre इति आङ्ग्लभाषायाम् ।

५५. १२५

त्रिधा बद्धः वृषः— 'त्रिधा बद्धो वृषभः...' इति श्रुतिः ।

५५. १६१

लीगकांग्रेसयोजना—मुस्लिमलीगकांग्रेसाभ्यां पुरस्कृता योजना Lucknow Pact इति नाम्ना प्रसिद्धा ।

५५. १६४

डिमास्थेनीस्— प्रभावशाली ग्रीकवक्ता ।

५५. १९८

लखनउ°— लखनऊ° इति शुद्धम् ।

५५. २०९

गिरां कृष्णस्य— श्रीमद्भगवद्गीता, तस्याः ।

५६. १०

विश्वंभराधिपः — विश्वंभराभिधः इति शुद्धम् । रायबहादुर विश्वंभरनाथः नाम नेता ।

५६. १८

चातुर्वर्णस्य— चातुर्वर्ण्यस्य इति शुद्धम् ।

५६. ५३

श्यामसुन्दर°— श्यामसुन्दर चक्रवर्ती, सुप्रसिद्धः वक्ता, लेखकः, क्रान्तिकारकश्च ।

५७. २

नीराजन्नैः— नीराजनैः इति शुद्धम् ।

५७. ७

तण्डुलाः प्रस्थमूल्या— तण्डुलप्रस्थमूल्या इति शुद्धम् ।

५७. १८

विश्वनाथः— अत्र दामोदरः इति वाच्यम् ।

५८. ७१

पोमंजी— मुम्बापुरीस्थः बहिरामजी पोमनजी नाम पारसीकः धनिकः ।

५८. ८०

टाल्स्टायसंज्ञकं क्षेत्रम्— Tolstoy Farm इति आङ्ग्लभाषायाम् ।

५८. ८१

नीलोत्पादनार्थम्— नीलनामकस्य पदार्थस्य ( Indigo ) उत्पादनं कर्तुमिति ।

५८. १०४

अन्तर्बुद्धि°— Inner Voice इति आङ्ग्लभाषायाम् ।

५८. १११

यत्वान् — यत्नवान् इति शुद्धम् ।

५८. ११४

आफ्रिकाकानडादयः— दक्षिण आफ्रिका, कानडा, ऑस्ट्रेलिया, न्यूझीलंड, इत्यादयः Dominions इति नाम्ना प्रसिद्धाः ब्रिटिशसाम्राज्यस्य घटकाः ।

५८. ११९

मजाः — प्रजाः इति शुद्धम् ।

५८. १४९

अङ्कितेषु — Dependencies इति आङ्ग्लभाषायाम् ।

५८. १६१

पञ्चनदापर्ते — पंजाबे ।

५८. १६५

कृष्णविग्रहः — कृष्णावतारः ।

५८ २१४

तिलकाह्लीयन्ध?— तिलकाह्लीयन्तु? ।

५९. ८१

नामद्राराणां— विधानमण्डलस्य सदस्याः नामदार इत्युपाधिना युक्ताः । तेषा-मिति ।

संहतीरव्ययराणां च— 'अव्ययराणां संहतिश्च' इति वाच्यम् ।

६० ११२

परद्वाधृतम् —वरदानाम्न्या नद्या आवृतम् ।

६०. १२३

बुलस्थाने— बुलढाणे नाम नगरम्, तस्मिन् ।

६० १२५

खामग्रामम्— खामगांव नाम नगरम् ।

६०. १३९

तैलहारम्— तेल्हारा नाम नगरम् ।

६०. १४०

कविश्रेष्ठः— माधव नारायण डाउनामा विदर्भस्थः कविः ।

६०. १४७

वत्सगुल्मे— वाशिम नाम नगरम् ।

६०. १८१

चन्द्रग्रामम्— चांदा नाम प्रसिद्धं नगरम् ।

६०. २९१

उपःकालस्य— छत्रपतिशिवाजीनृपतेः स्वराज्यस्थापनायाः आरम्भकालम् उद्दिश्य उपःकालनाम्नी कादम्बरी श्री हरि नारायण आपटेमहाशयेन महाराष्ट्रभाषायां लिखिता ।

६०. ३०५

विजयास्थानकम्— Victoria Terminus, बोरीबंदर इति ।

६०. ३१३

पणैकाणकसंचयात्— आणकः रूप्यस्य षोडशः भागः ।

६१ ३४

लांकेशाराभिधायिनी— लँकाशायरनाम्नी नौकेति ।

६१. ८५

यीयामारू— जपानदेशस्य नौका यीयामारू इति ।

६१. ९७

गोखले— स्वराज्यसंघस्य कार्यवाह. श्री दामोदर विश्वनाथ गोखले इति ।

६१. ११०

केपपर्यन्तम् —Cape of Good Hope पर्यन्तम् ।

६१. १११

सुयेजस्य— Suez Canal.

६२. ९५

सनदीभृत्यसंघस्य— Indian Civil Service इति आङ्ग्लभाषायाम् ।

६२. ५४

विल्सन्— अमेरिकाध्यक्षः थॉमस विड्रो विल्सन् ( १८५६–१९२४ ) इति ।

६२. ८५

वि. समित्याः— विषयनियामकसमित्याः इति । Subjects Committee इति आङ्ग्लभाषायाम् ।

६२. ९९

सविशेषाधिवेशने— विशेषे अधिवेशने इति वाच्यम् ।

६२. १०१

रौलेटाख्येतिवृत्तस्य— रौलेटनाम्नः न्यायाधीशस्य आध्यक्ष्ये राजद्रोहसन्दर्भ व्याख्यार्थे नियुक्ता या समितिः तस्याः इतिवृत्तम् ।

६३ ४

द्विविधः— द्विविधः इति शुद्धम् ।

६३ ८०

फ्रांचायिस्फंक्शनाभिधे– Franchise Committee and Function Committee इति आङ्ग्लभाषायाम् ।

६३. १५८

टा. कु.— Thomas Cook & Co.

६४. ११

पर्वते – श्यम्बक विष्णु पर्वते इतिनामा आङ्ग्लभाषायां लिखितस्य तिलकचरितस्य लेखकः ।

६४. ३५

सर्वरौलेटस्य— सर्वं रौलेट्स इति वाच्यम् ।

६४ ३९

प्रवरास्यसमित्या— Select Committee इति आङ्ग्लभाषायाम् ।

६४ ६३

घाहतानां— या हतानां इति वाच्यम् ।

६४. ७०

सार्वभौमप्रतीपेन— Viceroy इति आङ्ग्लभाषायाम् ।

६५. ११

ताम्हन्करकृते ग्रन्थे— डी. व्ही. ताम्हनकरेण आङ्ग्लभाषायां कृते ग्रन्थे–'Lokamanya Tilak–Father of Indian Unrest and Maker of Modern India' इत्येतस्मिन् ।

६५. २२

बोअराहवे — Boer War (1899 A. D.).

६५. २९

वैद्याभिधानेन— चिन्तामण विनायक वैद्य इतिनामा महापण्डितः, भारताचार्यः इति उपाधिना संबोधितः, तेन ।

६५. ३२

दूव्युव°— द्व्यर° इति वाच्यम् ।

६५. ६०

सौचिकेन —सूचिकर्मकारः (Tailor) तेन ।

पाटलोनाभिसंज्ञितम्— Trousers इति आङ्ग्लभाषायाम् ।

६६. ३४

श्रोतणां— श्रोतॄणां इति वाच्यम् ।

६६. ४२

प्रिवीमण्डल°— Privy Council.

६६ ५३

नासिक्य°—नास्य° इति शुद्धम् ।

६६ ५७

रावर्ट°— रावर्टसन् इतिनामा मुम्बईशासनस्य सचिवः ।

६६. ६१

कमीशन— साक्षिणां सुविधायै न्यायाधीशेन नियुक्तं मण्डलमिति ।

६६ १०२

सबुनिसेन— करवीरराज्यस्य एको मन्त्री, तेन ।

६८. ५७

फिंजफर्ड:— वङ्गदेशे मुझफरपूरनगरे न्यायाधीशः ।

६९. १५

घोषनाह्वये— आयर्लंडदेशे बोयनानद्यास्तीरे जाते सुविख्याते समरे ( १६९० खिस्ताब्दे )।

६९ २०

कटशब्देन— कट इति महाराष्ट्रभाषायां कपटप्रबन्धवाची शब्दः । ( Conspiracy ).

६९. ४५

विश्वोद्धारार्थम्— विश्वोद्धारार्थम् इति वाच्यम् ।

६९. ५९

ग्रामे...मृन्मयाः—'घरोघरी मातीच्या चुली' इति महाराष्ट्रभाषायां वर्तमानस्य आभाणकस्य संस्कृतरूपान्तरम् ।

६९ ६५

धोरणस्य— Policy इति आङ्ग्लभाषायाम् ।

७०, ३६

अनन्तेन— अनंत लक्ष्मण कान्हेरे । तेन जॅक्सनस्य ( १९०९ खिस्ताब्दे ) वधः नासिकनगरे कृतः ।

७०, ९८

तिर्यक्परीक्षणम्— Cross-examination इति आङ्ग्लभाषायाम् ।

७०. १२०

लीवॉर्नर— अयं मुम्बईप्रान्ते शिक्षणसंचालकः आसीत् ।

७०. १२१

मांटगामिः—M. A. Montgomerie, I. C. S., Asstt. Judge.

७०. २२६

अज्ञानं...कदाचन – 'Ignorance of law is no excuse' इति आङ्ग्लभाषायाम् ।

७०. २४०

तलस्पर्शि — पल्लवग्राहि ।

७१. २६

दैत्यागाधसमुद्रयोः— Between the Devil and the Deep Sea इति आङ्ग्लभाषायाम् ।

७१. ८६

आखाडकम्— Gymnasium इति आङ्ग्लभाषायाम् ।

७३. ३८

लेखाष्टाइम्से— लेखाष्टाइम्से इति वाच्यम् ।

७३. ८२

घोडसेन— महादेव राजाराम घोडस नाम संस्कृतपण्डितः विधिविशारदश्च । तेन ।

७३. ९३

प्रबन्धानाम्— शोधनिबन्धाः तथा शोधग्रन्थाः, तेषाम् ।

७४. ३६

शास्त्रिणम्— श्रीनिवासशास्त्री इत्येतम् ।

७४. ४२

मेहता— जयाराम माधवदास मेहता ।

७४. ४३

कार्यगार— रंगस्वामी अर्यंगारः नाम हिन्दुपत्रस्य संपादकः ।

७४. १०३

कायाकल्पः — हिन्दराष्ट्रसभायाः लण्डनस्थायाः शाखायाः आमूलाग्रं व्यवस्थान्तरम् ।

७५. १०

वालेसैटगरः — Edger Wallace, आङ्ग्लकादम्बरीलेखकः ।

७५. २६

उपद्रव्यापः— कुचेष्टितं इति संस्कृतभाषायाम् ।

७५. ३८

घटर्गाहदः— बहर्गाहदः इति वाच्यम् ।

७५. ४८

हलत्तसंनी— अवहित्था इति महाराष्ट्रभाषायाम् ।

७५. ५३
समाधवजयन्तेन— महादेव धोंडो विद्वांस तथा जयन्त श्रीधर तिलक इत्येताभ्यां तिलकपत्राणि प्रकाशितानि ।

७५. ५८
नॉटिंघ्याम— Nottingham.

७५. ६०
वैः— वै इति वाच्यम् ।

७५. ९२
स्टेडस्य— Review of Reviews इतिनाम्नः सुप्रसिद्धस्य मासिकस्य संपादकः, डब्ल्यू. टी. स्टेड, तस्य ।

७५. ११२
सह्लिमूर्तीति— मद्रासप्रान्तस्थः नेता सत्यमूर्तिः, स परिहासेन ' सह्लिमूर्तिरिति मित्रैः संबोधितः ।

७६. २
सेल्बोर्नैः —Lord Selborne.

७६. ४५
शॉमहोदयः— Lord Shaw.

७६. ५१
टायलकः — प्रिव्हिकौन्सिलन्यायाधीशेन शॉमहोदयेन तिलक इति नाम टायलक इति उच्चारितम् ।

७६. ६८
लिपिः — Copy. इति आङ्ग्लभाषायाम् ।

७६. ८७
रामपूर्वमनोहरः — राम मनोहर लोहिया इतिनामा राष्ट्रभक्तः ।

७६. ९९
परराष्ट्रानुकूलताम्— राष्ट्राणामनुकूलताम् इति वाच्यम् ।

७७. ५३
ए. एच. सैसेन— Dr. A. H. Sayce, प्राच्यविद्याध्यायी संशोधकपण्डितः, तेन ।

७७. ६४
अभङ्गगते— भक्तवर्येण तुकारामेण एकस्मिन् अभङ्गे ' ब्रह्मानंदीं लागली टाळी कोण देहाते सांभाळी ' इत्युक्तम् ।

७७ ९४
प्रारूपे— Draft इति आङ्ग्लभाषायाम् ।

७१. १०६

नलिकालोहमार्गेण —Tube Railway इति आङ्ग्लभाषायाम् ।

७१. ११३

मुद्राक्षराणाम्—Types इति आङ्ग्लभाषायाम् ।

७१. ११४

भटदेशमुखाभिधौ —मोरेश्वर दामोदर भट तथा चिन्तामण द्वारकानाथ देशमुख इत्येतौ लंदने I. C. S. परीक्षार्थं न्यवसताम् ।

हिन्दसज्जनसेवायाः —Indian Civil Service इति आङ्ग्लभाषायाम् ।

७२ ३

भारतद्वारम्— Gateway of India इति आङ्ग्लभाषायाम् ।

७२. १४

गङ्गाधरेण— कर्णाटकनेता श्रीगङ्गाधर बालकृष्ण देशपांडे इत्यनेन ।

७२. ३१

मावजी— मुम्बईस्थ. विख्यातः उद्योगपतिः गोविन्दजी मावजी इति ।

७२. ४५

विद्युच्छक्तिप्रचालितं वाहनम्— विद्युयानम् इति यावत् । Automobile इति आङ्ग्लभाषायाम् । अग्नियानम्– Railway इति आङ्ग्लभाषायाम् ।

७२. ७१

जेधेराजगृहे— पुण्यपत्तने Jedhe Mansion नाम ख्यातं सदनम् ।

७२. ८२

परांजपे कृताक्षेपाः— परांजपेकृताक्षेपाः इति वाच्यम् ।

७२. १०७

केशवम् — तिलकस्य जन्मनाम ।

८१. ७

बीबीसीआयवर्त्मना— Bombay Boroda and Central India Railway इति आङ्ग्लभाषायाम् ।

८१. ८

पंजाबश्र्याने— Punjab Mail इति सुविख्यातं अग्नियानम् । तस्मिन् ।

८१. २५

मुण्डवस्त्रैः — पगडी इति विशेषं शिरोभूषणम्, तैः ।

८१ २८

शाहविवाहश्रेष्ठन्तं गतः —शाहविवाहपुरं गतः इति वाच्यम् ।

८१. ३२

देशमुखाभयंकरौ— यशवन्तनामा देशमुखः विधिविशारदः मोरोपन्तः अभ्यंकरश्च ।

८१.५८

पूर्णातापीजलयोः मीलनम्— पूर्णा तापी च इति द्वे सुप्रसिद्धे नद्यौ। तयोः संगमः भुसावळे।

८१.७३

प्रतियोगस्वरूपस्य सहकारस्य— Responsive Co-operation इति आङ्ग्लभाषायाम्।

८१.८३

निहितं यत्नम्— Emphasis was put इति आङ्ग्लभाषायाम्।

८२.५

महारावम्— Whistle इति आङ्ग्लभाषायाम्।

८२.४८

स्तम्भितम् — अधिवेशनस्य कार्यं कमपि कालं स्थगितम्। Adjourned इति आङ्ग्लभाषायाम्।

८२.५८

श्रीग्रन्थपाठिनाम्— शिखानां पूज्यधर्मग्रन्थः 'ग्रन्थसाहेब' इतिनाम्ना ज्ञायते। स श्रीग्रन्थः इति गौरवेण उल्लिख्यते। तस्य ग्रन्थस्य प्रतिदिनं पठनं गुरुद्वारे अतीव भक्त्या क्रियते।

८३ २०

छापखाने—केशव रामचंद्र छापखानेमहोदयः।

८३ २५

भावे – विष्णुदास भावे।

देवलः—गोविन्द बल्लाळ देवल।

खाडिलकर—कृष्णाजी प्रभाकर खाडिलकर।

८३ ७३

मुळशीभागे—पुणेविभागे मुळशीनामा खेटकः, तत्परितः केचित् भूमयः टाटासंघेन धरणार्थं शासनानुज्ञया स्वाधीनीकृताः। महाराष्ट्रदेशे तद्विरोधाय महान्दोलनं जातम्।

टाटासंघः— भारते सुप्रसिद्धं उद्योगमण्डलम्।

८३ ८१

हुक्केर्याः – बेळगांवभागे हुकेरीनाम तालुकास्थानम्। तस्याः।

संकेश्वरस्य—बेळगांवभागे संकेश्वरनाम तालुकास्थानम्। तस्य।

८३ ९३

सिंधहैदरपट्टणम्—सिंधप्रान्ते प्रसिद्धं नगरं सिंधहैदराबाद इति।

८३. १०५

मद्रेसा—मुस्लीमानां पाठशाला।

८३. १२१

भोपटकरो लक्ष्मणः—पुण्यपत्तनस्थः सुविख्यातः प्राड्विवाकः तिलकानुयायी च।

८३. १२२

सावर्करो भिषग्वर्यः—मुम्बापुर्यां प्रसिद्धः भिषग्वर्यः। तस्य संपूर्णं नाम नारायण दामोदर सावरकर इति। स स्वातंत्र्यवीरसावरकरस्य अनुजः।

८४ २

कांग्रेसान्तर्लोकशाहीपक्षस्योद्देशपत्रकम्—Congress Democratic Party's Manifesto इति आङ्ग्लभाषायाम्।

८४. ९

साम्राज्यान्तःस्वराज्यम्— Dominion Status इति आङ्ग्लभाषायाम्।

८४. २८

हरडीकरलालयोः— राष्ट्रसेवादलप्रवर्तकः नारायण सुब्बाराव हर्डीकरः तथा लाला लजपतरायः।

८४ ४६

कोल्हट्करेणाच्युतेन—अच्युत बलवंत कोल्हटकर इत्येतेन।

८५. ११

चमनलालः—दिवाण चमनलालः नाम पंजाबे श्रमिकपक्षस्य प्रसिद्धः नेता।

८५. ८२

क्षेत्रे कुमार्याः— कन्याकुमारी इतिनाम्ना विख्याते क्षेत्रे।

धर्मवीरः —श्रीविवेकानन्दः।

राष्ट्रवीरः —लोकमान्य बाल गङ्गाधर तिलकः।

८५. ११९

हुतात्मनाम्— हुतात्मनाम् इति यावत्।

८५. ११३

कोकिलया—श्रीमती सरोजिनी नायडू, Nightingale of India, तया।

पुण्यपत्तने रुग्णावस्थायां अणेमहोदयाः ( १९५४ )



श्री. मा. श्री. अणे, राष्ट्रपति श्री राजेन्द्रबाबू, महाराष्ट्र-राज्यपाल गिरिजाशंकर वाजपेयी.

पुणेपत्तने–१९१६ खिस्ताब्दे षष्ट्यब्दपूर्तिसमारम्भः



स्वराज्यसंघस्य शिष्टमण्डलम् ( १९१९ )



वामतः – विपिनचन्द्र पालः, डॉ. पी. जे. मेहता, लो. तिलकः, श्री. खापर्डे, श्री. विठ्ठलभाई पटेलः, श्री. न. चि. केळकरः

स्वराज्यसंघस्य शिष्टमण्डलं प्रति–' शुभास्ते पन्थानः ' ( १९१८ )



लंडने श्रमिकसभासदस्यसमेतं भारतीयशिष्टमण्डलम्



आगतस्थाः – (१) डॅन इर्विंग (२) डॉ. हदरफोर्ड (३) बेन स्पूर (४) बिपिनचंद्र पाल (५) जी. एस्. खापर्डे (६) व्ही. जे. पटेल (७) सरोजिनी नायडू (८) डॉ. जी. बी. क्लार्क (९) लो. बा. गं. टिळक (१०) डी. पी. जे. मेहता (११) मिस्. एस्. नॉरमेटन

भूपविष्टाः – (१) जे. एम्. पारिख (२) ए. रंगस्वामी अय्यंगार (३) नामजोशी (४) न. चिं. केळकर (५) जे. आर. क्लाइन्स (६) डब्ल्यु टामसन विल्सन.

## अमृतसरराष्ट्रसभायाः ( १९१९ ) अधिवेशनस्य

अध्यक्षः



पं. मोतीलाल नेहरू

स्वागताध्यक्षः



स्वामी श्रद्धानन्दः

अमृतबझारपत्रिकाकेसरीपत्रयोः संस्थापकसंपादकौ



बाबू मोतीलाल घोषः　　　　लो. तिलकः

पञ्चाङ्ग-प्रवर्तन-समिति :



आसनस्था: – श्री. बाबासाहेब पटवर्धन, प्रो. टी. आगाशे, प्रा. वि. ब. नाईक, लो. बा. गं. टिळक
श्री. कृ. कोल्हटकर, पं. रघुनाथशास्त्री पटवर्धन

मुम्बापुर्यां लोकमान्यस्य अन्त्यदर्शनं ग्रहीतुकामः जनसंमर्दः



